Reg. No. C. 1073.

**Vol. XVII. No. 1 ]** **[ May, 1934.**

१८५६ शकीये वैशाखे १७श-वर्षस्य १म-संख्या

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्





सम्पादकः—

## श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

सहकारिसम्पादकः—

## श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—३) रूप्यकत्रयम्

श्यामबाजार, कलिकाता Foreign price—7*s*.

---

*Printed and Published by*

**Dinabandhu Sahityashastri**

The Sanskrit Sahitya Parishad, Shyambazar, Calcutta.

## EXTRACTS FROM OPINIONS
ON
# CHHANDOGYAMANTRABHASHYA

EDITED BY

DURGAMOHAN BHATTACHARYYA, M. A,
Kāvya-Sāṅkhya-Purāṇatīrtha

**With a Foreword**

BY

**Mm. Dr. GANGANATH JHA**

**Published by the Sanskrit Sahitya Parisad.**

(*Price—3-12 ; for Members—Rs. 3 only*)

1. Mahamahopadhyaya **Dr. Haraprasad Shastri** ( wrote in the *Indian Historical Quarterly* ):

It has all the excellences of a commentary—clear, concise, expressive and lucid. The editor's work has been done with great care, accuracy and thought. The Samavedin will certainly be thankful to Durgamohan Bhattacharyya for his numerous appendices and indices.........he has done a scholar's work......and therefore deserves thanks from every one who has any pretence of scholarship.

2. **Prof. F. W. Thomas** ( Boden Professor of Sanskrit, Oxford ):

You have produced a good edition with careful citation of various readings and useful Indexes......Your Introduction contains a valuable account of the work and its

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| May, 1934. | १८५६शकीये वैशाखे<br>१७श-वर्षस्य १म-संख्या | Vol. XVII<br>No. 1 |
|---|---|---|

## मतिमञ्जरी

प्रियवाचकमहाभागाः, समर्पयति किलेदानीं सप्तदशेऽब्दे पदं भवतां स्नेहस्यैकायनीभूता संस्कृतसाहित्यपरिषत् । यच्च विषमतमेऽस्मिन्ननेहसि चलाचलजीवितासु बहुलासु मासिकपत्रिकासु संस्कृतसाहित्यपरिषदिदानीमपि देदीप्यते तत्र निदानं भगवती भूतभावनस्य कृपापाङ्गो भवतां च निष्कपटं प्रेम ।

वर्षाच्चास्मादारभ्य बहवोऽभिनवा विषया अत्र सन्निवेश्येरन् । तथाहि नातिचिरं परलोकप्रस्थितेन पण्डितप्रकाण्डेन रमेशचन्द्रवेदान्ततीर्थमहाभागेन नाटकाकारेण संग्रथितं वेदान्तप्रकरणवस्तु प्रतिमासमेव प्रकाशयिष्यते । भाषासौष्ठवेन व्याख्यानकौशलेन च सर्वेषामेव सहृदयानां हृदयान्यावर्जयेदिदं प्रबन्धरत्नमित्यस्त्यस्माकं बलवती प्रत्याशा । यद्यपि प्रबन्धस्यास्य कियांश्चन भागः पूर्वं संस्कृतभारत्यां सम्मुद्रितस्तथाऽपि प्रबन्धपूर्त्त्यनुरोधादामूलमेवास्माभिर्मुद्रणपथमवतार्यते ।

जैमिनिसूत्रसमाख्यस्य सुप्रथितस्य जातकग्रन्थस्यान्तिमाध्यायद्वितयं प्राचीनव्याख्यानादिवैधुर्याद् दुरवबोधमेव संवृत्तम् । अत एव वाचकमहोदयानां

तर्पणाय महतायासेनाभिनवां कामपि टीकां सम्पाद्याचिरादेव प्रकाशयिष्यतेऽस्माभिः।

किरातार्ज्जुनीयस्य विदग्धमाधवाख्यं व्याख्यानं सुखबोधिनीसमाख्या च टीका क्रमशः प्रकाशमासादयिष्यतः। शाबरभाष्यव्याख्यानमपि यथापूर्व मुद्रयिष्यते।

संस्कृतभाषामयाणि सरसरमणीयान्युपाख्यानादीन्यपि प्रकटितानि हरेयुर्मानसानि वाचकमहाभागानामिति शिवम्।

---

प्रियपाठकमहाभागाः, विदिता एव प्रायेण भवतां विषकन्यादयो यासां बहवोऽपि पतयो विवाहसमनन्तरमेव प्रविशन्ति कालकवलम्। पतिघ्नी पाणिरेखाऽपि सुपरिचितैव व्याकरणाध्यायिनाम्। कथासरित्सागरे च त्रिमारिकायाः कथा सुप्रथितैव। तस्यां हि जातमात्रायां तस्या माता भ्रातरौ च व्यपद्यन्तेति तथाविधं तस्या व्यधायि नाम ज्ञातिभिः। ततश्चासौ यौवनपदवीमुपारूढा क्रमेण दशकृत्व उदूढा, दशापि चास्याः पतयो व्ययुज्यन्त प्राणैः। ततश्च दशमारिकेति प्रसिद्धिं गताऽसौ स्वेच्छया कमपि युवानं पितृगृहातिथिं दृष्ट्वा तस्मिन्नेव बद्धभावा मारमुषितत्रपा पितरमनुमान्य तमपि वृतवती। सोऽपि चाचिरादेव शीतज्वरेणाऽऽक्रान्तः समत्यजत् प्राणान्।

---

इदानीञ्च चीनदेशादधिगता वार्त्ता यत् तत्रत्या काचन युवतिः क्रमेण पतिचतुष्टयं हारयित्वा दैवज्ञोपदेशेन दुर्दैवप्रशमनार्थं पतिसुखलाभार्थं च सहकारपादपमेकं पतित्वेन वृतवती। विनिर्वृत्ता किल यथाशास्त्रं पुरोहितादिभिरुद्वाहक्रिया। परं को वाऽन्यथा प्रवृत्तं दैवमन्यथयितुं प्रभवेन्मर्त्यः। दिनद्वयाभ्यन्तर एव वृक्षोऽयं झञ्झावातेन समुन्मूलितः। न खल्वेतावताऽपि प्रशान्तस्तस्या दैवदुर्विपाकः। इदानीं पुनर्गण्डस्योपरि पिण्डकः समुत्पन्नः। वृक्षनाशात् समुद्दीपितामर्षो वृक्षस्वामी वृक्षमूल्याधिगमाय प्रवर्त्तितवान् व्यवहारम्,

राजपुरुषैश्च सद्यः पतिवियोगविधुरां सीमन्तिनी कारायां निक्षेपितवान्। अवितथं खलूक्तमभियुक्तैः—

"को नाम पाकाभिमुखस्य जन्तो-
द्वाराणि दैवस्य पिधातुमीष्टे ॥"

---

इदानीन्तनेषु प्रसिद्धतमेष्वेव वैज्ञानिकेष्वन्यतमो जे एम् हल्डेन् महोदयः। अनेन हि महात्मना कश्चन यन्त्रविशेषो विनिर्मितो येन परिवहस्यापि वायोर्मार्गमारोढुं प्रभवेयुर्वैमानिकाः। तेन चातिसत्वरमेव गगनमार्गेण गमनागमनादिकं कुर्युः। सम्भाव्यते च हल्डेन्महोदयेन यदितो वर्षाभ्यन्तर एव तिसृभिर्होराभिराङ्ग्लभूमितो भारत आगमनं सम्भविष्यतीति।

---

आङ्ग्लमभूमौ यद्यपि विधवानां पुनरुद्वाहः शिष्टाचारसम्मत एव, तथाऽपि पतयो बिभ्यत्येव पत्नीनां पत्यन्तरग्रहणसम्भावनतः। नातिचिरं खलु केनचन धनिकधुर्येण किनिर हेन्री रोपार धारिन्समाख्येन मरणात् पूर्वं प्राणायीच्छापत्रम्। तत्र चोक्तम्, "मदीया सम्पत्तावत् सार्धलक्षरूप्यकसम्मिता। मदीयमरणात ऊर्ध्वं मत्पत्न्या पत्यन्तरं न व्रियते चेत् समग्रा मे सम्पद् यथावत् तदायत्तैव स्यात्। तस्याः पत्यन्तरस्वीकारे तु मदीयास्तनया एव सर्वं रिक्थं समानं विभजेयुः। न खलु मया विधवानां पत्यन्तरपरिग्रहः प्रतिरुध्यते। मम पत्नी चेत् पुनरप्युद्वोढुमिच्छेत् को नाम तत्र विप्रतिपद्येत। परं यथा मया मत्पत्न्याः कृते महानायासः स्वीकृतस्तथा तस्या द्वैतीयीकेनापि भर्त्रा तदर्थं परिश्रमः कर्तव्य" इति।

---

पुरा पुस्तकानि हरितालादिसंयोगेन विलिख्यन्ते स्म, तेन कीटास्तु प्रायेण नैव प्राभवंस्तत्र पदं निधातुम्। इदानीन्तु सर्वथा प्रयतमानैरपि दुर्वृत्तानां कीटादीनां दूषितानि प्रतिहन्तुं न शक्यन्ते। पुस्तकपरिरक्षणार्थं ये तावदुपाया बहुशः परीक्षिताः समीचीनतया च स्वीकृतास्तेषु पुस्तकानां श्रेणिष्वन्तरान्तरा कर्पूरपुटिकान्यासः कृष्णजीरकपुटिकानिक्षेपश्च श्रेष्ठौ सुकरौ च।

---

# मधुमासे

[ निबन्धकः—श्रीहरिपदभारती ]

कुञ्जे कुञ्जे मधुकरगुञ्जे
        शशिकररञ्जितकाले ।
चञ्चद्भृङ्गे सरसि तरङ्गे
        विकसितपङ्कजमाले ॥
मन्दे मन्दे वहति सुगन्धे
        मलयज-शीतल-वाते ।
द्वंद्वं द्वंद्वं परमानन्दं
        विहरति शिशिरे याते ॥
तूर्णं तूर्णं रजतविचूर्णं
        दिशि दिशि विकिरति राका
पौष्पं हारं नवसहकारं
        कलयति मुकुलितशाखा ॥
भ्रान्तं भ्रान्तं मधुरनिशान्तं
        पिकवरमधुकरपुञ्जम् ।
वर्षं वर्षं वितरति हर्षं
        रचयति हृदि मधुकुञ्जम् ॥

---

# मासिकश्राद्धकालाः

[ निबन्धकः—श्रीवेणुधर-तर्कतीर्थः ]

श्राद्धषोडशान्तर्गतमासिकश्राद्धानामपकर्षकालमधिकृत्य तत्रभवता स्मार्त्त-प्रकाण्डेन रघुनन्दनभट्टाचार्येण स्वकृतौ तिथितत्त्वे समासतः किञ्चिदभिहितम्। अत्रत्याश्चैवं पंक्तयः—

"मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं प्रति।
द्वादशाहेन वा कुर्यादेकाहे द्वादशाथ वा॥

इति मरीचिवचनेन एकाहकर्त्तव्यतया यानि द्वादशमासिकश्राद्धान्युक्तानि तानि शूद्रेणापि आद्यमासिकदिन एव कार्याणि, न त्वाद्यमासिकं कृत्वा तत्पर-दिने एकादश मासिकानीति ज्ञेयम्। एवञ्च तेषामपकर्षे तन्मध्यतदन्तकाल-कर्त्तव्यतया षाण्मासिकद्वयसपिण्डीकरणापकर्षः सिध्यतीति सुधीभिर्भाव्यम्।" इति।

अत्रेदं विभाव्यते—

मासि मासि यत् कृतं श्राद्धं तन्मुख्यमित्यर्थः। अपर्याप्तौ अशक्तौ ऋतुं प्रति, ऋतौ ऋतौ। ऋतुर्मासद्वयम्। ननु ऋतुकल्पेन श्राद्धकरणे प्रथम-मासिकतिथौ कथं न श्राद्धद्वयं करणीयम्? सत्यम्, साहचर्यात् परमासीयमृत-तिथावेव। तथाहि मुख्यकल्पे श्राद्धकरणे मासान्तिमदिन एव श्राद्धस्य कर्त्तव्य-तया ऋतुकल्पकरणेऽपि अन्तिमदिन एव कर्त्तव्यता न तु मध्यदिन इति।

अपकर्षकालं कथयति—द्वादशाहेन वा कुर्यादिति। द्वादशभिर्दिनैर्द्वादश मासिकानि कृत्वा त्रयोदशाहः सपिण्डीकरणकालः, शूद्रस्य तु द्वादशाह एव। "मासिकार्थवद् द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्यान्मन्त्रवर्जं हि शूद्राणां द्वादशेऽहनी"ति विष्णुसूत्रात्। मासिकार्थवदिति मासि मासि क्रियमाणश्राद्ध-प्रयोजनं प्रेताप्यायनादि, तद्युक्तं द्वादशाहक्रियमाणमित्यर्थः।

यत्र एकादशमासमध्येऽधिमासपातस्तत्र त्रयोदशदिनेषु त्रयोदश

मासिकानि कृत्वा चतुर्दशेऽह्नि सपिण्डनं कार्यम्। एतत्तु ब्राह्मणविषयम्, शूद्राणान्तु त्रयोदशेऽह्नि त्रयोदश मासिकानि कृत्वा तद्दिन एव सपिण्डनमिति। संवत्सरमध्ये यद्यधिमासपातो भवति तदा मासिकार्थं दिनमेकं वर्द्धयेदिति विष्णुवचनात्।

ननु द्वादशाहेन वा कुर्यादित्यत्र द्वादशाहपदमशौचान्ततृतीयदिनपरं कथं न स्यात्। न च तथा सति एकाहे द्वादशाथ वा इत्यनेन एकाहेऽपकर्षविधान-मनर्थकमिति वाच्यम्, एकाहे द्वादशाथ वा इत्यस्याऽऽद्यमाससम्बन्धिनि यस्मिन् कस्मिंश्चिद्दिनेऽपकर्षज्ञापनपरत्वेन सार्थकत्वादिति। न चैवमपि द्वादशाह-पदमेव व्यर्थम् एकाह इत्यनेनैव प्राप्तत्वादिति वाच्यम्,

आनन्त्यात् कुलधर्माणां पुंसाञ्चैवाऽऽयुषः क्षयात्।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते॥

इति व्यासवचनैकवाक्यतया द्वादशाहेन वा इत्यस्य प्राशस्त्यपरत्वेन सार्थक-त्वादिति चेन्न, मासिकार्थंवदित्यादिप्रागुक्तविष्णुसूत्रैकवाक्यतया द्वादशाहपदस्य द्वादशदिनपरत्वात्।

अथ विष्णुवचनेऽपि द्वादशाहपदमशौचान्ततृतीयदिनपरं कथं न स्यादिति चेन्न, त्रयोदशेऽह्नि सपिण्डनमित्यनेन मलमासपाते दिनमेकञ्च वर्द्धयेदित्यनेन च दिनद्वये श्राद्धद्वयविधानाद् द्वादशाहपदस्यापि द्वादशदिनपरत्वस्यैव युक्तत्वादिति।

तदशक्तौ आद्यमासीयैकाहोऽपकर्षकालः।

ननु एकाहद्वादशाहपदयोः किं सावनपरत्वं किंवा चान्द्रपरत्वमिति चेद्—अशौचव्यपगमे नामधेयमिति सूत्रं विष्णुना पूर्वमुक्त्वा मासिकार्थवद्द्वादशाऽमिति सूत्रमुक्तम्। एवञ्च पूर्वसूत्रादशौचव्यपगम इत्यस्यावश्याध्याहर्त्तव्यतयाऽशौचस्य च सावनदिनघटितत्वेन तद्व्यपगमे द्वादशदिनस्यापि सावनस्यैव युक्तत्वम्, तत् साहचर्यादेकाहपदमपि सावनपरमेव।

शूद्रेणापीति। न केवलं द्विजातिभिः शूद्रेणापीत्यर्थः। शूद्रस्याशौचा-नन्तरं क्वचिदाद्यमासीयैकाहः सम्भवति, क्वचिच्च सङ्करेणाशौचह्रासे द्वादशाहोऽ-पीति। आद्यमासस्येदं दिनमाद्यमासिकमिति योगार्थावगमादाद्यमाससम्बन्धिनि

यत्र कुत्रचिद्दिन एवेत्यर्थः। ननु आद्यमासिकश्राद्धदिन एवेत्यर्थः कार्यः, एकाहे द्वादशाथ वा इत्यनेन सर्वेषामेवापकर्षविधानात्। आद्यमासिकश्राद्धदिने द्वादशमासिककरणेतु आद्यमासिक स्यापकर्षानुपपत्तिः, स्वकालपूर्वकालकरणस्यैव अपकर्षपदार्थत्वादिति।

एवकारव्यावर्त्तनीयं दर्शयति—न त्वाद्यमासिकमिति। तत्परदिने आद्य-मासपरदिने प्रथममासिकश्राद्धतिथौ आद्यमासिकं कृत्वा एकादशमासिकानि न कार्याणीत्यर्थः, एकाहे द्वादशाथ वा इत्यस्य सर्वापकर्षविधायकत्वादिति भावः। अत्र च मासपदं पूर्वमृततिथिमादाय परमृततिथिं विहाय परमृततिथिपर्यन्त-कालपरम्; न तु पूर्वमृततिथिं विहाय परमृततिथिपर्यन्तकालपरम्, तथात्वे परमृततिथेरपि प्रथममासीयत्वेन तत्र द्वादशमासिकापकर्षो न स्यादिति प्रागेव विवृतम्।

अपरे तु आद्यमासिकदिन एवेति आद्यमाससम्बन्धिदिन एवेत्यर्थः। दिनपदस्य चान्द्रदिनपरत्वशङ्कामपनेतुमाह—न त्वाद्यमासिकं कृत्वा तत्परदिने एकादशमासिकानीति ज्ञेयमिति। अस्यार्थः—द्विखण्डीभूतायां तिथौ पूर्व-सावनदिनवृत्तिपूर्वतिथिखण्डे प्रथममासिककरणे तत्परसावनदिनवृत्ति-तिथिपरखण्डे एकादशमासिककरणेऽपि एकतिथिकर्त्तव्यत्वं सम्भवति, तन्न इत्यर्थः। दिनपदस्य सूर्यकिरणावच्छिन्नकालरूपदिनपरत्वात्, तद्रूपदिन-ग्रहणे किं मानमिति चेत्तादृशदिने अहःपदस्य भूरिप्रयोगदर्शनात्तस्यैवोप-स्थितेः। न च तिथिद्वैधे एकखण्डस्य पर्युदस्तत्वात् कथमुभयखण्डे श्राद्ध-प्राप्तिरिति वाच्यम्, तिथिविशेषविहित एव तन्नियमात्। अत्र मृतमासीयान्य-तमतिथिमात्रकर्त्तव्यताभिधानान्न तिथिविशेषनियमोऽस्तीति वर्णयन्ति।

द्वादशाहेऽपकर्षे कृते मलमासकर्त्तव्यमासिकस्य यदि प्रमादकरणं स्यात्तदा त्रयोदशमासिकस्याकरणाद् द्वितीयषाण्मासिकसपिण्डीकरणयोश्चाकाले कृतत्वा-च्चैतच्छ्राद्धत्रयमेव स्वस्वकाले कर्त्तव्यमिति। वत्सरमध्ये वृद्ध्युपस्थितावपि तान्येव कार्याणि। एकाहापकर्षस्थलेऽपि भ्रान्त्या यद् यत् पतितं तत्तदेव स्वस्वकाले कर्त्तव्यमेवं वृद्ध्युपस्थितावपीति विशेषः। एवं तत्रैव भाविमल-

मासज्ञानविधुरेण तन्मासीयमासिकस्याकरणे तत्पतितमासिकं मलमासे कार्य्यं तत्राशक्तौ शुद्धमासीयकृष्णैकादश्यादौ ।

द्वादशाहेऽपकर्षस्थले ब्राह्मणेन भ्रान्त्या तद्दिन एव सपिण्डीकरणे कृते सपिण्डीकरणस्याकालकृतत्वेन तन्मात्रस्यैव स्वकाले कृष्णैकादश्यादौ वा पुनः करणीयत्वम् ।

ननु द्वादशाहेऽपकर्षकरणे तदादिन्यायात् पञ्चममासिकदिने एकादश-मासिकदिने च किं षाण्मासिकद्वयं कार्य्यं किं वा तदन्तन्यायात् षष्ठमासिक-दिनयोरिति चेन्न पौर्वापर्ये पूर्वदुर्बलत्वमिति न्यायात् तदन्तन्यायस्यैव बलवत्तया षष्ठमासिकदिनद्वादशमासिकदिनयोरेवेति ।

यदि तु अशौचान्ते मलमासपातस्तदा द्वादशाहे एकाहे वा मासिकापकर्षो नास्तीति ज्ञेयम् ।

अथ प्रसङ्गात् कतिचिदृतुकल्पव्यवस्थाः प्रदर्श्यन्ते । ऋतुकल्पेन कति-चिन्मासिकानि कृत्वाऽवशिष्टानि ऋतुकल्पेन कर्त्तुं न शक्यन्ते ।

यदि द्वादशमासो मलमासस्तदा ऋतुकल्पं न कुर्य्यात् । मलमास एव सपिण्डीकरणस्य कर्त्तव्यतया तत्र बाधितयोरेकादशमासिकद्वितीय-षाण्मासिकयोः कर्त्तव्यत्वानुपपत्तेः । यदि च अनवधानेन प्रागारम्भः कृतस्तदा ऋतुकल्पमकृत्वा मुख्यकल्पेन कुर्य्यादसामर्थ्ये कृष्णैकादश्यादौ वा कुर्य्यादिति ।

यदि प्रथममासे मलमासपातस्तदा षष्ट्या तु दिवसैर्मास इत्यादिना मासद्वयस्यैक्यात् प्रथममासिकं द्वितीयमासिकं तृतीयमासिकञ्च तृतीय-मासिकतिथौ कुर्य्यात् । द्वितीयमासे मलमासपातेऽपि प्रथमं द्वितीयं तृतीयञ्च तृतीयमासिकतिथौ करणीयम् । तृतीयमासे मलमासपाते तृतीयं चतुर्थं पञ्चमञ्च पञ्चममासिकतिथौ कार्य्यम् । चतुर्थमासे मलमासपातेऽप्येवम् । पञ्चममासे मलमासपाते पञ्चममासिकं प्रथमषाण्मासिकं षष्ठमासिकं सप्तममासिकञ्च सप्तममासिकतिथौ कार्य्यम्, षष्ठमासे तत्पातेऽप्येवम् । अन्यत्रापीयं रीतिरनु-सर्त्तव्या इति चिन्त्यं सुधीभिः ॥

---

# सरल-चित्सुखीसारम्

## स्वप्रकाशविचारः

[ निबन्धकः—स्वर्गत-रमेशचन्द्र-वेदान्ततीर्थः ]

"उन्निद्रशुभ्रसरसीरुहसन्निषण्णा निर्गच्छदच्छरुचिनिर्जित-चन्द्रकान्तिः ।
हारोज्ज्वला लिपितनुः स्फटिकाक्षकुम्भमुद्राक्षपुस्तककरा प्रतिभातु वाणी ॥"

[ नान्द्यन्ते सूत्रधारः ] अहो नु महानद्य सुदिवसः, एतज्जनपदवासिनामस्मादृशां भाग्योपचयादिह नानादिग्देशागतानां नानाविद्यावादविशारदानां विदुषां वराणां समाजैः सभाजितेयं महती राजपरिषद् विराजत उपहसन्तीवावदातविद्याविद्योतेन वाणीसनाथकमलासनपुरोगतैर्जीवानुगैर्गीर्वाणैर्विभूषितां महेन्द्राधिष्ठिताममरसभाम् । एतादृशां विदुषां परितोषाय तथा विचारचतुरा विपश्चित एव प्रभवन्तितराम्, के वयमत्र सङ्गीतमात्रनिपुणा वराकाः । (विचिन्त्य) अस्ति मे प्रियसखः श्रीमच्चित्सुखाचार्यमुनिवराद् गृहीतवेदान्तविद्यः सतीर्थवर्यः श्रीमत्परमहंसप्रत्यग्रूपः, तमेवाऽऽहूय पृच्छामि, किमद्य करणीयमिति । तेन हि मनीषिणाऽधुना श्रीमच्चित्सुखाचार्यमुनिविरचितायास्तत्त्वप्रदीपिकायाः,—

"अविनश्वररुचितत्त्वप्रदीपिकालोकनार्थिना क्रियते ।
अज्ञानतिमिरजेत्री मानसनयनप्रसादिनी टीका ॥"

स एव विद्वान् साक्षात्कृतब्रह्मानन्दरसास्वादः स्वानन्दमात्रया अधरीकृतकाव्यरसया परमतत्त्वबुभुत्सूनामेषामानन्दनोपायमुपदेक्ष्यति । तदहं यामि तावत् तदीयमुटजम् । ( परिक्रम्य ) भोः प्रियसख प्रत्यग्रूप इत इतः,—

**प्रत्यग्रूपः** ॥– ( प्रविश्य ) अये सङ्गीतकाचार्यो मे सतीर्थवर्यः भगवतो भरतमुनेरधिगतगीतिब्रह्मकलो विद्याधरः प्राप्तः । तदहो सुप्रभातमद्य ! साक्षात्कृतः खल्वनेन ब्रह्मास्वादसहोदरः काव्यरसास्वादः तन्नन्दयामि चेतोऽस्य साक्षात्कारेण । ( उपसृत्य ) सखे ! कथमकस्मात् स्मृतोऽयं जनः, कथं च काव्यकलारसास्वादसमुत्कण्ठितां परिषदं विहाय अत्रभवतोऽत्र समागमः ?

**सूत्रधारः** ॥–आदौ तावत् प्रियवयस्यस्य दर्शनेन आत्मानं प्रीणयितुमयं मे समुद्यमः। अपरञ्च अस्ति मेऽधुना भवता सुमहत्प्रयोजनम्। अद्य खलु **अस्मन्महाराजाधिराजस्य शुभे** पुण्याभिषेककर्मणि अखिलभारतवर्षखण्डस्य कुरुपाञ्चालादिजनपदवास्तव्याः सकलदर्शनसागरपारदृश्वानो वादजल्पविचारचतुर-चेतसः अगणितविपश्चिदपश्चिमाः साक्षात्कृतपदपदार्थतत्त्वसाराः पण्डितगणाः समुपस्थिाः, कस्तावदेतेषां तोषणोपायः? कीदृशो वाऽद्य प्रयोगोऽनुष्ठेयः? कृतार्थीकरणीयोऽयंतदुपदेशेन जनः।

**प्रत्यग्रूपः** ॥– ( विचिन्त्य ) आम्, अस्ति अस्मद्गुरुपादविरचिताया-श्चित्सुखीत्यपराभिधायास्तत्त्वप्रदीपिकायाः सरलसारसंग्रहभूता अस्म-दीयमानसनयनप्रसादनगन्धसाररससारप्रसादिता वादविचारात्मिका काचिद् रूपकप्रतिकृतिः कृतिः, सा खलु तत्त्वविचारमार्ज्जितमानसानां मनोमधुकरम् अरुणकिरणपूता मकरन्दरसभरिता कमलिनीव अमन्दभूमानन्दसन्दोहास्वाद-समुत्पादनेन सम्मोदयितुमर्हतीति मे मतिः। एते खलु सर्वे एव सज्जनाः, न ते भवतो दोषजातं ग्रहीष्यन्ति, अतस्तेषामनुग्रहलाभाय नापेक्षते प्रयत्नातिरेकम्, दोषग्रहग्रहिलान्तःकरणा दुर्ज्जनास्तु सर्वथोपेक्षणीया एव। यतः—

"दोषत्वमुज्ज्वलगुणा अपि यान्ति येषु तैरुन्नतैः किमथवेह तिरस्कृतैः किम्।
दोषोऽपि येषु गुणतामुपयाति भूयांस्तेभ्यो नमोऽस्तु सततं भुवि सज्जनेभ्यः॥"

**सूत्रधारः** ॥–अस्त्येवम्, किन्तु तर्ककर्कशतया अस्य निबन्धस्य बिभेमि काव्यरसरसनचतुरेभ्यो राजपारिषदेभ्यः, अपि तेषां विराग उत्पद्येत, अपि च रूपकलक्षणहीना वीरशृङ्गाराद्यङ्गिरसोत्कर्षविरहिता च एषा कृतिः कथं प्रयोगमर्हेदिति मेऽस्ति महान् विशयः।

**प्रत्यग्रूपः** ॥—सखे, अनाशङ्कनीयस्तावद् राजपरिषदां विरागहेतुः, यतोऽधुना राजविद्याकुशलानामपि विदुषां प्राचीनमहर्षिदृष्टेषु तत्त्वेषु वर्तते महती विवि-दिषा। अपि च रूपकलक्षणगुणहीनत्वेऽपि अस्त्येवात्र विदुषां प्रमोदहेतुः, पूर्णरसात्मकस्य परमात्मनः समाश्रयणेन अपारानन्दसन्दोहजनकत्वात्, यतः एतस्यैव रसस्य मात्रया अखिलेऽस्मिन् प्रपञ्चे सर्वं वस्तुजातं रसवद्भवति,

प्राकृतमानुषानन्दरसास्वादिनामपि अप्राकृततैतद्रसकणिकास्वादाद् भविष्यति निरुपाधिकी काऽपि परमा प्रीतिः, साधुबलिष्ठश्रोत्रिययुवकस्य यस्य सर्वेयं पृथिवी वित्तेन पूर्णा, तस्य सकलसाधनसम्पन्नस्य य आनन्दः स मानुष आनन्द उच्यते, तस्माद् मानुषादानन्दादारभ्य शतगुणोत्कर्षक्रमेण मनुष्यगन्धर्वादिपरम्परया हिरण्यगर्भस्य ब्रह्मण आनन्दे सोपाधिकानन्दकाष्ठा परिसमाप्यते। ततोऽप्युत्-कृष्टस्य भूमानन्दस्य तु नास्ति परिच्छेदः। रसो हि सः, रसं ह्येवायं लब्ध्वानन्दी भवति लोकः, को ह्येवान्यात् कः प्राण्यात् यदेष परमात्मानन्दो न स्यात्, एष ह्येवानन्दयति सर्व लोकम्, सर्वाणि खलु भूतानि एतस्मादेवानन्दाज्जायन्ते, एतस्यैवानन्दस्य मात्रामनुभवन्ति जीवन्ति। अनुभवात्मकत्वाच्चास्य नापेक्षतेऽयं रसास्वादः साधनान्तरम्, अतो भूमरसभरितस्यास्य प्रबन्धस्यारसनाशङ्का कथं ते मनसि समजनीत्यहो आश्चर्यम्। भवतु वा यथा तथा,—यः खलु परमात्मा स्तम्भान्तरगर्भभावेन सर्वान्तर्गततया पृथिव्यादिषु सर्वत्र अन्तर्यामित्वमात्मनो व्याचख्यौ, नृसिंहरूपेण विश्वात्मतामादिक्षत्, भक्तानुग्रहाय प्रह्लादाभिधानमात्रतः प्रत्यक्षरूपेणाऽऽविरभूत्, स एवास्मन्मनोरथं पूरयिष्यति, तमेव शरणं यावः,—

उभौ ॥—**प्रमाणनखनिर्भिन्नमहामोहामरारये।**

**नमस्कुर्मो नृसिंहाय स्वप्रकाशचिदात्मने ॥** *

[ निष्क्रान्तौ ]

[ इति प्रस्तावना ]

---

* स्थूलाक्षरेणाङ्किता भागाः प्रायेण अविज्ञातमूलग्रन्थ एवेति ज्ञातव्यम्।

# प्रथमोऽङ्कः

## राजवर्त्म

[ प्रथमं दृश्यम् ]

[ ततः प्रविशन्ति राजसभां गच्छन्तः कतिचिच्छात्राः ]

१ मः ॥—अये, कोऽयं "स्वप्रकाश" इति रोरवीति, मन्ये कश्चनाऽयं ब्रह्मवादी वराकः। एतेषां सर्वपदार्थानामनिर्वाच्यतया निर्वचनभाव एवावलम्बनीयः, तत् कथमयं मूकीभावमनवलम्ब्य उच्चैरुद्घोषयति स्वप्रकाशः स्वप्रकाश इति। निर्वचनीयत्वाङ्गीकारेऽपि नायं शब्दः सर्वथा बाधितार्थतया कमपि अर्थमभिधातुमर्हति। अपि च आन्वीक्षिकीमधीयानानामस्माकं पुरतः शोभते मूकीभाव एव विद्यान्तरानुशीलिनाम्।

२ यः ॥—भो भ्रातः, कथमेवं विकत्थसे, सत्यमस्ति भवतां पदार्थनिर्वचनविज्ञानम्, किन्तु एतदपि विवेचनीयं यत् पदविज्ञानमन्तरा पदार्थविज्ञानं न सुष्ठु सम्पद्यते, अस्माकं पाणिनिपतञ्जलिप्रभृतिमहर्षिप्रणीतशब्दानुशासनमनुशीलयतां पुरतः पदवाक्यस्वरूपज्ञानरहितानां भवतामपि मूकीभाव एव श्रेयान्। आर्षे खलु अस्मन्नये स्वप्रकाशशब्दब्रह्म एव परमार्थतत्त्वम्, प्रपञ्चितं चैतत् श्रीमता भर्तृहरिणा,—

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥" इति॥

अपिच भोः, कथं नार्हति निर्वचनं स्वप्रकाशशब्द इत्युच्यते श्रीमता, पदविभागेनास्य निर्वचनस्य सुवचत्वात्। तथाहि,—**"स्वश्चासौ प्रकाशश्च स्वप्रकाशः (१)"** इत्येवं कर्मधारयसमासे स्वत्वे सति प्रकाश इति स्वप्रकाशशब्दार्थो निष्पन्नः। घटादावपि स्वत्वं विद्यते इति तत्रातिव्याप्तिनिवृत्त्यै प्रकाशग्रहणम्, ज्ञाने स्वत्वं प्रकाशश्च वर्त्तत इति तत्र लक्षणसमन्वयः।

१मः ॥—अहो मूर्खता, अस्माभिरपि ज्ञाने ईदृशी स्वप्रकाशता अङ्गीक्रियते एव, नहि अस्माकं ज्ञानं स्वं न भवति, नवा न प्रकाश इति ; यतः ज्ञानताङ्गीकारेण तत्र प्रकाशत्वमपि अङ्गीक्रियते एव, अतः अस्माकं वेद्येन ज्ञानेन अर्थान्तरता दोषः अद्वैतिनाम्। ततश्च न युक्तं भवदीयलक्षणम्,—"वेद्यस्यापि ज्ञानस्य अस्माभिः स्वप्रकाशत्वाभ्युपगमात्।"

३यः ॥—भवतु एवं, स्वस्य प्रकाश इति समासात् "स्वस्य स्वयमेव प्रकाशः (२) इति भवति स्वप्रकाशलक्षणम्, स्वविषयत्वे सति प्रकाशत्वमिति तदर्थः, एवञ्च न भवति अर्थान्तरतादोषः। नहि भवतां मते ज्ञानस्य स्वविषयत्वं वर्त्तते, अनुव्यवसायविषयत्वाद् व्यवसायात्मकस्य भवतां ज्ञानस्य। अत्र प्रथमविशेषणेन भवदाशङ्कितस्य अर्थान्तरत्वस्य निवृत्तिः। प्रकाशपदोपादानेन च शब्दशब्दादौ अनतिव्याप्तिः, ज्ञाने च स्वविषयप्रकाशरूपत्वस्य विद्यमानत्वात् लक्षणसमन्वयः।

१ मः ॥—अहो महदिदं प्रदर्शितं निर्वचनकौशलं श्रीमता स्वोक्तलक्षणस्य असम्भवदोषमनालोचयता। अतिव्याप्तिः, अव्याप्तिः, असम्भवश्चेति त्रितयं हि लक्षणस्य महद् दूषणम्। तत्र कस्मिंश्चिल्लक्ष्ये लक्षणस्य अगमनं अव्याप्तिः, अलक्ष्ये लक्षणस्य समन्वयः अतिव्याप्तिः, कस्मिंश्चिदपि लक्ष्ये लक्षणस्य अगमनम् असम्भवः। अस्मिंश्च भवल्लक्षणे जागर्त्तितरामसम्भवदोषः, नहि कुत्रचिदपि कस्यापि स्वस्य स्वविषयत्वं सम्भवति, नहि सुशिक्षितोऽपि कश्चिन्नटवटुः स्वस्कन्धमारोढु-मर्हति; अपिच भवतामेव परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वमिति कर्मलक्षणम्, तदनङ्गीकृत्य स्वस्य स्वविषयत्वाङ्गीकारे ग्रामं गन्तुश्चैत्रस्यापि ग्रामस्येव कर्मताप्रसङ्गो दुर्निवारः। अतो महदयुक्तं भवतो लक्षणम् "कर्मकर्तृभावविरोधेन लक्षणस्यासम्भवात्" इति।

४ र्थः ॥—अस्तु एवमत्र दोषः, मया तु अन्यथा निरुच्यते, स्वेन प्रकाश इति तृतीयातत्पुरुषसमासाश्रयेण ""स्वजातीयप्रकाशाप्रकाश्यत्वं स्वप्रकाशत्वम्" (३) इति स्वप्रकाशलक्षणं भवति, भवतां सम्मतस्य ज्ञानस्य स्वजातीयेन अनुव्यवसायात्मकज्ञानेन प्रकाश्यतया तत्र स्वजातीयप्रकाशेन

अप्रकाश्यत्वं नास्तीति नार्थान्तरतादोषः, स्वस्य स्वविषयतानङ्गीकाराच्च न कर्मकर्तृविरोधः। ज्ञानप्रकाशाय ज्ञानान्तराङ्गीकाराच्च स्वजातीयप्रकाशाप्रकाश्यतया ज्ञाने लक्षणसमन्वयः।

१ मः ॥—अतिव्याप्तिलक्षणं लक्षणदोषमपह्नुवानेन स्वलक्षणस्य साधु समादर्शितं पाण्डित्यं पण्डितम्मन्येन आयुष्मता। तथाहि, प्रदीपः प्रकाशरूपोऽपि नापरेण स्वजातीयेन प्रदीपप्रकाशेन प्रकाश्यते, **अतः प्रदीपादेः स्वजातीयप्रकाशाप्रकाश्यस्य अस्वयंप्रकाशत्वेन लक्षणस्य तत्र अतिव्याप्तेः**। यच्च ज्ञानं प्रकाशकं प्रदीपस्य तच्च द्विजातीयमेव। नच प्रदीपस्यापि स्वप्रकाशतया लक्ष्यत्वादेव न तत्रातिव्याप्तिरिति वक्तुं शक्यते, भौतिकस्य तस्य स्वप्रकाशताव्याघातात्, ज्ञानस्यैव स्वप्रकाशत्वमङ्गीकुर्वद्भिर्वेदान्तिभिरस्य स्वप्रकाशत्वानभ्युपगमाच्च। **अपि च घटादेः** विजातीयप्रदीपादिप्रकाशप्रकाश्यत्वेन **स्वजातीयप्रकाशाप्रकाश्यस्य स्वप्रकाशत्वप्रसंगात्** तत्राप्यस्ति अतिव्याप्तिः। **नहि प्रदीपादौ ज्ञाने वा घटत्वादिजातिरस्ति येन घटादयः सजातीयप्रकाशप्रकाश्या भवेयुः**, तस्मादज्ञप्रलपितमिदं लक्षणाभिधानं भवतः।

४ र्थः ॥—विद्वन्, कथमत्रभवतः अस्थानेऽयं सम्भ्रमः समजनि, मया हि स्वजातीयप्रकाशाप्रकाश्यत्वमिति स्वप्रकाशस्य लक्षणमभाणि, यथा कयाचित् एकया जात्यालिङ्गितस्य हि साजात्यम्, **अस्ति हि** घटादिवृत्तिसत्तया जात्या तत्र प्रदीपे ज्ञाने च **सजातीयत्वम्**, अतः प्रदीपेन ज्ञानेन वा प्रकाश्यस्य घटादेर्भवत्येव सजातीयप्रकाशप्रकाश्यत्वमिति न वर्त्तते तत्र सजातीयप्रकाशाप्रकाश्यत्वम्, अतो न तत्रातिव्याप्तिर्घटयितुं शक्यते, तदत्र निरनुयोज्यानुयोगलक्षणं निग्रहस्थानमात्मनः समापतितमिति निपुणेन भावनीयं भवता।

१ मः ॥—( उच्चैर्विहस्य ) हंहो भोः कथमेवं प्रलपसि असंविदान इव विचारचरितम्। सत्तया जात्या चेत् साजात्यमभिप्रेतम्, तदा सजातीयेति **विशेषणस्य वैयर्थ्यं** तावद् भावनीयं स्थूलदृशा, **नहि सत्ताहीनोऽस्ति कश्चित् प्रकाशो येन** तद्व्यावर्त्तनाय सजातीयेति विशेषणं भवेत् सफलम्। अतः **प्रकाशाप्रकाश्यत्वमित्येतावतैव चरितार्थत्वात्** सजातीयेति विशेषणवैयर्थ्यात् न शक्यपरिहारेयमतिव्याप्तिः।

५ मः ॥—अस्ति एतदेव, मया पुनरुच्यते, स्वस्मिन् प्रकाश इति समासं समाश्रित्य, **स्वसत्तायां प्रकाशव्यतिरेकविरहितत्वम्**(४)इति स्वप्रकाशलक्षणम्, यावत् खलु यस्य प्रकाशाभावो न वर्त्तते तस्य स्वप्रकाशता इत्यर्थः। ज्ञानस्य यावत् सत्वं वर्त्तते तावत् तस्य प्रकाशो वर्त्तते इति तत्र स्वप्रकाशलक्षणसमन्वयः; प्रदीपादीनां घटादीनाञ्च स्वसत्ताकालेऽपि मनःसंयोगेन्द्रियसन्निकर्षाद्यभावे प्रकाशो न भवति, विद्यमानेऽपि घटादौ घटादिकं न जानामि, घटादयः सन्ति न वा इत्यादिसन्देहविपर्ययोर्दर्शनाच्च तत्र स्वस्मिन् विद्यमाने सत्यपि स्वस्य प्रकाशाभावो निश्चीयते, अतो न तत्रातिव्याप्तिः। ज्ञाने विद्यमाने तु तत्र जानामि न वा, न जानामीति वा संशयविपर्ययौ कदापि न दृश्येते, नातस्तत्र प्रकाशाभावो निश्चेतुं शक्यते इति नास्ति लक्षणेऽस्मिन् दूषणलवोऽपि।

१ मः ॥—सत्यमेतत्, किन्तु ज्ञानस्य अनुव्यवसायवेद्यत्वाभ्युपगमेऽपि अनुव्यवसायस्य ज्ञानसामग्रीमात्रजन्यत्वात् तत्र संशयविपर्ययाभावः संभवत्येव, अतोऽर्थान्तरतादोषः।

५ मः ॥—मैवम्, ज्ञानस्य वेद्यत्वाभ्युपगमे घटादिवत् कदाचित् अप्रकाशोऽपि स्यात्। अपिच अनुव्यवसायः स्वयम् अप्रकाशः सन् न ज्ञानं प्रकाशयितुमर्हति; नहि इन्द्रियव्यतिरिक्ता ज्ञानहेतवः स्वयं प्रकाशमनासाद्य स्वविषयं प्रकाशयितुमर्हन्ति। तथाच व्याप्तिशक्त्यादयोऽज्ञाता एव अनुमितिज्ञानादीन् जनयेयुः, एवञ्च सति अनुव्यवसायस्य प्रकाशाङ्गीकारे तत्प्रकाशायापि अन्यद् एवमनवस्थादिदूषणजालमापतेत्, ततः एकस्य प्रकाशाभावे सर्वम् अप्रकाशं स्यात्, तेन च जगदान्ध्यं प्रसज्येत।

१ मः ॥—मैवम्, त्रिचतुरकक्षातः परम् अनुव्यवसायप्रकाशाय नानुव्यवसायान्तरमङ्गीक्रियते, ततो नानवस्थादूषणं भविष्यतीत्युच्यते मया।

५ मः ॥—एवञ्चेत् अन्तिमानुव्यवसायस्य स्वयंप्रकाशत्वमङ्गीकृतं भवता, चौरवणिजो राजपुरुषेभ्यः शुल्कदानभिया रात्रौ अपथेन धावतो घट्टकुटीप्रभातवृत्तान्तमनुहरति भवतामियं प्रणाली।

१ मः ॥—स्यादेतत्, दूषणमिदानीमभिधीयते भवतो लक्षणस्य, श्रुत्वाऽव-

[ धीयताम् ;]। सर्वैर्हि स्ववृत्ति-सुखादीनि अव्यभिचारेण अनुभूयन्ते, नहि विद्यते कदाचित् सुखादीनां सत्तायां तेषां प्रकाशाभावः, यतः स्ववृत्तिसुखमस्ति, किन्तु तन्न ज्ञायते अन्यथा वा ज्ञायते इति नैवास्ति विपर्ययः, नापि सुखसत्तायाम् अहं सुखी नवा इति संशेते कश्चित्, अतः **सुखादेरपि स्वसत्तायां प्रकाशाव्यभिचारात्** तत्र **अतिव्याप्तेः** दूषणग्राहग्रस्तमेव ते लक्षणम् ।

६ छः ॥—स्वस्मै प्रकाश इतिसमासात् **स्वव्यवहारहेतुप्रकाशत्वं स्वप्रकाशत्वम्** (५) इति स्वप्रकाशलक्षणं भवितुमर्हति, अविज्ञाते व्यवहारा-योगात् अवश्यं ज्ञानेन व्यवहारहेतुभूतेन भवितव्यम् तद्रूपत्वं तु तस्य स्वप्रकाशत्वं विवक्षितमित्यर्थः । ज्ञानस्य जानामीत्यादिरूपो यो व्यवहारः तस्य हेतुभूतः प्रकाशः ज्ञानमेव नान्यः, अतो ज्ञाने लक्षणसमन्वयः । घटादौ सुखादौ च तत्तद्-व्यवहारहेतुभूतप्रकाशरूपता नास्ति, नहि घटादीनां सुखादीनां वा ज्ञानप्रकाश-व्यतिरेकेण स्वरूपतो जानामीति व्यवहारहेतुभूतः प्रकाशो वर्त्तते, येन तत्र तत्र अतिव्याप्तिः प्रसज्येत इति ।

१ मः ॥—भो विद्वन्, अतिचतुरस्य ते एकं सन्धितत्सतोऽन्यत् प्रच्यवते, सुखादावतिव्याप्तिवारणाय प्रयस्यतो हि ते प्रदीपादौ पुनः परिस्फुटा अतिव्याप्ति-रापतिता, प्रदीपोऽस्ति, प्रदीपमानय, प्रदीपमपनय इत्यादौ **प्रदीपादौ स्वविषय-कव्यवहारे** हेतुभूतः **प्रकाशः प्रदीपादिः** एव, न हि प्रदीपप्रकाशमन्तरेण प्रदीपे अयमुक्तो व्यवहारः सम्भवति, इति दुष्परिहर**स्तत्रातिव्याप्तिदोषः** ।

६ छः ॥—मा तावदेवम् , मदीयवाक्यतात्पर्यमनालोचयता भवता नैतत् शोभनमुक्तम्, **स्वव्यवहारहेतुभूतप्रकाशत्वम्** इत्यत्र मे लक्षणे प्रस्तुतज्ञानमेव स्वशब्देन अभिधीयते, न विषयमात्रम्, ततश्च **ज्ञानव्यवहारहेतुभूतप्रकाशत्वं विवक्षितम्** , दीपादिकं जानामीतिज्ञानव्यवहारहेतुत्वं च न दीपादेरस्ति, प्रदीपादेर्ज्ञानाप्रकाशकत्वात्, नहि प्रदीपेन प्रदीपज्ञानं प्रकाश्यते, अतो न तत्रातिव्याप्तिरिति ।

१ मः ॥—तथाऽपि जानामीति ज्ञानप्रकाशे **अनुव्यवसायेऽतिव्याप्तिः** सुदृढा, **तस्य वेद्यत्वेऽपि व्यवसायज्ञानव्यवहारहेतुप्रकाशत्वात्**, ईश्वरज्ञानस्य

सर्वत्र कारणत्वात् प्रकाशत्वाच्च ज्ञानव्यवहारहेतुप्रकाशत्वं तत्रापि विद्यते इति प्रसरति तत्रापि अतिव्याप्तिपिशाची ।

६ छः ॥—भो नैवेदं शोभनमध्यवसितं धीमतः, यतो नास्माभिरनुव्यवसायोऽङ्गीक्रियते, अनवस्थागौरवादिदोषप्रसक्तेरिति श्रुतं श्रीमता प्राक्, तत् कथं विस्मरणशीलेनेवैतद् दूषणमभिहितम्; यदि अनुव्यवसायस्य स्वप्रकाशत्वमङ्गीकर्त्तव्यं तदाऽस्यापि व्यवसायवदेव तुल्ययोगक्षेमत्वमिति न दोषः, ईश्वरज्ञानं तु स्वव्यवहारहेतुप्रकाशत्वेन लक्ष्यमेव, अन्यदीयज्ञानं तु नास्य स्वं भवति नातस्तद्रूपेणातिव्याप्तिः ।

१ मः ॥—एवमपि **प्रदीपज्ञानमिदमिति व्यवहारहेतौ प्रदीपप्रकाशेऽतिव्याप्तिरेव** । विशिष्टज्ञानस्य विशेषणमपि विषयः, ज्ञानस्य च विषयजन्यत्वं प्रसिद्धम्, अतः प्रदीपज्ञानमिति व्यवहारस्य स्वविषयज्ञानविशेषणीभूतप्रदीपजन्यत्वमस्तीति ज्ञानव्यवहारहेतौ प्रदीपेऽतिव्याप्तिस्तदवस्था स्यादेव । **किञ्च व्यवहारहेतुत्वम्** इति यदुक्तम्, तत् किं ज्ञानात्मकप्रकाशस्य **विशेषणम्, उपलक्षणं वा, नाद्य** तदा विशेषणस्य विधेयान्वितरूपेण वर्त्तमानतया व्यावर्त्तकत्वेन, **मुक्ति-प्रलयादौ** व्यवहाराभावेन व्यवहारहेतुप्रकाशाभावात् तत्र **अव्याप्तिः**, नहि नीलमुत्पलं विजानीहीत्युक्तः कश्चिदपि नीलविशेषणाभावविशिष्टं रक्तमुत्पलं विजानाति । यदि "**व्यवहारहेतुत्वम्**" इति प्रकाशस्य उपलक्षणमित्युच्यते, तदाऽपि उपलक्षिते प्रकाशे यत् उपलक्षितत्वम् नाम, तत् तस्य धर्मः स्वरूपं वेति वक्तव्यम् । यदि धर्म इत्यभिधीयते, तदा सोऽपि धर्म उपलक्षणं विशेषणं वेति । आद्यपक्षांगीकारे तत्राप्युपलक्षिते यो धर्मः सोऽपि विशेषणम्, उपलक्षणं वेति तत्र तत्र पृच्छया अनवस्थाप्रसक्तेः, विशेषणत्वे प्रागुक्तदोषानुषङ्गात् । यद्येतद्दूषणभिया उपलक्षणात्मकः स धर्म उपलक्षितज्ञानात्मकप्रकाशस्य **स्वरूपमात्र**मित्युच्यते, तदा **ज्ञानं प्रकाशः इत्येव** लक्षणार्थः **स्यात्,तथा सति** इतरव्यावर्त्तकधर्मरूपत्वाभावात् **न लक्षणसिद्धिः** । यत इतरव्यावर्त्तकधर्मो हि लक्षणं, न हि स्वरूपमात्रं कस्यचिल्लक्षणं भवति । किञ्च जडज्ञानवादिभिरपि ज्ञानस्वरूपमात्रमंगीक्रियते एव ततश्च

१ मः ॥—एवं चेद् दूषणमापाद्यते भवता तर्हि अन्यथा निरुच्यते मया, तथाहि, स्वप्रकाशस्य **ज्ञानाविषयत्वमिति** ( ६ ) लक्षणम् अस्मदभिमतज्ञानस्य ज्ञानाविषयत्वात् तत्र लक्षणसमन्वयः ; भवदभिमतज्ञानस्य अनुव्यवसायात्मकज्ञान-विषयत्वेन, घटप्रदीपादीनां च तत्तद्विषयकज्ञानविषयत्वात् तेषु नातिव्याप्तिः। न चापि विशेषणोपलक्षणादिघटितदोषप्रसक्तिः, लक्षणेऽस्मिन् तथाविधविशेषण-त्वादिबोधकपदस्य अभावात्।

१ मः ॥—ननु एवमपि शशविषाणादेर्ज्ञानाविषयत्वात् तत्रातिव्याप्तिः। किंच भवतां ज्ञाने **स्वयंप्रकाशत्वादिसाधकानुमानागमादिजन्यज्ञान-विषयत्वं** वर्त्तते नवेति वक्तव्यम्। **यदि वर्त्तते,** तदा सर्वेषामेव ज्ञानादीनां प्रमाणविषयत्वात् कुत्रचिल्लक्ष्ये लक्षणस्य गमनाभावाद् **असम्भविरवं दोषः।** अपि च स्वप्रकाशज्ञाने तादृशप्रमाणानाम् **अविषयत्वे** भवतः कथात्मके विचारे प्रवृत्तिरेव तावदनुपपन्ना, नहि प्रमाणं विना कस्यचिदर्थस्य साधनं बाधनं वा उपपद्यते, न वा प्रमाणैर्विचारमन्तरेण भवतः स्वप्रकाशत्वस्य सिद्धिर्भवितुमर्हति। अतो ज्ञानस्य ज्ञानाविषयत्वमंगीकुर्वता भवता प्रहितः स्वपदे एव कुठारः, वस्तुतः कथाऽसम्भवाद् मूकीभाव एव वरं श्रीमतः।

८ मः ॥—यद्येवम्, **ज्ञानाविषयत्वे सत्यपरोक्षत्वम्** ( ७ ) लक्षणं भविष्यति। अस्मदभिमतज्ञानस्य ज्ञानाविषयत्वात् सदा प्रत्यक्षरूपत्वाच्च तत्र लक्षणसमन्वयः। शशविषाणादीनामपरोक्षत्वाभावात्, घटप्रदीपादीनां च ज्ञान-विषयत्वात् तेषु नातिव्याप्तिः, न च असम्भवो दोषः, ज्ञानाविषयत्वे सत्यपि ज्ञानस्य अस्वप्रकाशत्वादिशंकाया व्युदासाय तत्रानुमानादिप्रमाणप्रवृत्त्यंगीकारात्। तदुक्तम्—

"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता॥"

इति। यथाहि, 'अयं घटः' इति घटाकाराकारितचित्तवृत्तिरज्ञातघटं विषयीकृत्य तद्गताज्ञाननिरसनपुरःसरं स्वगतचिदाभासेन जडमपि घटं भासयति, नैवं ज्ञाने सम्भवति, यतः प्रमाणवृत्तिर्ज्ञानं विषयीकृत्य तद्गतसंशय-

विपर्ययादीनेव बाधते नतु वृत्तौ प्रतिबिम्बितम् आभासचैतन्यं तत्र प्रकाशलक्षणं फलं जनयति, यथा दीपप्रभादित्यप्रभावभासनासमर्था सती तयाऽभिभूता भवति, तथा स्वयंप्रकाशमानज्ञानावभासनानर्हतया तेनाभिभूतम् आभासचैतन्यं ज्ञानात्मनैवावतिष्ठते, अतो ज्ञानस्य ज्ञानजन्यप्रकाशरूपफलशालित्वाभावात् न ज्ञानविषयत्वम्। अतश्चास्मिन् नास्ति कस्यापि दोषस्यावकाशः।

१ मः ॥—नैतल्लक्षणं युक्तं भवतः, ज्ञानस्य ज्ञानाविषयत्वस्वीकारे पूर्वोक्तासम्भवादिदोषाणां तादवस्थ्यात्, भवदुक्तवृत्तिवेद्यत्वादिकल्पनाया अयुक्तित्वात्। नहि प्रमाणपद्धतौ वृत्तिव्याप्यत्वं फलव्याप्यत्वं च किमपि सिद्धमस्ति, यत्र ज्ञाने वृत्तिव्याप्यत्वेन प्रमाणविषयत्वमङ्गीक्रियते, त्वया तत्रातिचतुरेण ज्ञानाविषयत्वं दुःसम्पादमेव, नहि एकत्र प्रमाणविषयत्वं तदविषयत्वञ्च वर्त्तितुमर्हतः। अतो यदि ज्ञानाविषयत्वेन वेद्यत्वं निषिध्यते, तर्हि असम्भवदोषो न परिहर्त्तुं शक्यते, यदि ज्ञानकर्मत्वं निषिध्यते तदा प्राभाकराणां मते ज्ञानाश्रयतया सिद्धस्य आत्मनः ज्ञानाविषयत्वम् अपरोक्षत्वं च अस्ति, **ज्ञानस्य ग्राहकतया सिद्धस्याविषयत्वेऽप्यपरोक्षतायास्तैरङ्गीकारात्** तत्र अस्य लक्षणस्य प्रवेशात् **गुरुमतानुसारिणामात्मनि अतिव्याप्तेः**। न च तल्लक्ष्यमेवेति वक्तव्यम्, यतो न भवतात्मनो ज्ञानाश्रयत्वमनुमन्यते।

८ मः ॥—एवं चेद् **व्यवहारविषयत्वे सति ज्ञानाविषयत्वम्** (८) इति लक्षणमस्तु। अस्माकं ज्ञानस्य ज्ञानमिदमिति व्यवहारविषयत्वं ज्ञानविषयत्वं च वर्त्तते, इति तत्र लक्षणसमन्वयः। घटप्रदीपादीनां ज्ञानविषयत्वात् तेषु नातिव्याप्तिः। प्राभाकरमते आत्मनि ज्ञानकर्मत्वानंगीकारेऽपि न ज्ञानाविषयत्वं तेषां सम्मतम्, अतः न तत्रातिव्याप्तिः। ज्ञानमिदमिति व्यवहारसिद्धये प्रमाणांगीकारात् नासम्भवकथाऽप्रवृत्त्यादिदोषप्रसंगः।

१ मः ॥—अहो प्रभावः स्वमताग्रहग्रहिलतायाः, मदुक्तदोषव्रजातमाकर्णयतोऽपि भवतो योऽयं तथाविधे प्रकारान्तरे प्रयत्नः, असौ श्रीमतः परं विस्मरणशीलतामेवावद्योतयति। अस्मिन् लक्षणे पूर्वपूर्वलक्षणोक्तानां सर्वेषामेव **प्राचीनदोषाणामनुषङ्गात्**। तथाहि, व्यवहारविषयत्वस्य भवतो ज्ञानात्मके

आत्मनि सुषुप्तिप्रलयमोक्षकालेषु अभावात् तत्राव्याप्तिः। अत एव असम्भवश्च। एवं व्यवहारविषयत्वांगीकारे ज्ञानविषयत्वस्य अवश्यम्भावित्वात् असम्भवदोषः प्रकारान्तरेण प्रसक्तः, न हि अज्ञाते ज्ञानमिदमिति व्यवहारः संभवति, चक्षुषी निमील्य विभाव्यतां तावदेतत्। अपि च, अख्यातिवादिनः प्राभाकरमतानुयायिनो मीमांसकाः शुक्तौ "रजतमिदम्" इति ज्ञानस्थले यथार्थज्ञानद्वयमातिष्ठन्ते, इदमिति प्रत्यक्षात्मकमेकमपरं रजतमिति स्मरणात्मकम्, तयोर्ज्ञानयोर्विषयभूतयोः शुक्तिरजतयोः संसर्गस्य ज्ञानविषयत्वं ते नाङ्गीकुर्वन्ति, तथात्वे तद्विषयकज्ञानस्य मिथ्यात्वापत्त्या "सर्वे प्रत्यया यथार्थाः" इति स्वसिद्धान्तो भज्येत, किन्तु विवेकाग्रहप्रसञ्जितसंसर्गस्य व्यवहारविषयत्वमङ्गीक्रियते एव, अन्यथा रजतार्थिनस्तत्र प्रवृत्तिर्न स्यादिति। ततः **शुक्तिरजतादिसंसर्गेऽख्यातिवादिनामतिव्याप्तिर**शक्यसमाधेया आपद्यते एव भवतः।

१० मः॥—तिष्ठतु एतत्, **स्वप्रतिबद्धव्यवहारे सजातीयपरानपेक्षत्वम्** (६) इति स्वप्रकाशलक्षणं भविष्यति। स्वनियतव्यवहारे स्वजातीयस्य अपरस्य कस्यचित् सजातीयस्य अपेक्षाभाव एव स्वप्रकाशत्वम्, असम्भवनिवृत्तये सजातीयग्रहणम्। नहि ज्ञानमिदमिति व्यवहारे ज्ञानसमानजातीयस्य अपरस्य कस्यचिदपेक्षा वर्तते, अतस्तत्र लक्षणसमन्वयः। घटादीनां प्रदीपादीनां च स्वप्रयुक्तव्यवहारे प्रकाशत्वादिना येन केनचित् धर्मेण समानजातीयानां प्रदीपादीनां चक्षुरादीनाञ्च अपेक्षा वर्त्तते, अतस्तेषु नातिव्याप्तिः। सुषुप्तिप्रलयमोक्षकालेषु व्यवहाराभावेन स्वप्रतिबद्धव्यवहारे परापेक्षाभावात् नाव्याप्तिः। ज्ञानस्य परापेक्षामन्तरेणापि व्यवहारसंभवान्नासंभवः। लक्षणेऽस्मिन् ज्ञानाविषयत्वस्य अनुपादानादेव प्राभाकराणां शुक्तिरजतसंसर्गेऽतिव्याप्तिपरिहारः।

१ मः॥—न ह्येतदपि भद्रमभिहितम् विद्वन्मन्येन भद्रेण भवता, यतो लक्षणेऽस्मिन्नपि **स्वप्रतिबद्धव्यवहारे स्वजातीयपरानपेक्षत्वस्य** प्रदीपादौ घटादौ च भावेन **अतिव्याप्तिदोष**स्तदवस्थ एव स्वाधिष्ठानमधितिष्ठति। न हि घटादिव्यवहारे घटादिजातीयस्य कस्यचिदपेक्षा वर्त्तते, यतः घटोऽयं, प्रदीपोऽयम् इत्याद्यभिज्ञानाम्, तथा ज्ञाने, शब्दव्यवहारे, हानादौ जलाद्याहरण-

वस्तुप्रकाशादिरूपार्थक्रियाव्यवहारे च स्वसमानजातीयघटप्रदीपादीनामपेक्षा वर्त्तते, सत्तया व्यापकसामान्येन सजातीयत्वविवक्षायां तु ज्ञानव्यवहारस्यापि सत्तया सजातीयानाम् अदृष्टकालेश्वरेच्छादीनां तज्जन्यतया अपेक्षासत्त्वात् लक्षणस्य असम्भवदोषो वरीवर्ति एव ।

११ शः ॥—अवेद्यत्वे सति अपरोक्षव्यवहारविषयत्वम् (१०)इति स्वप्रकाशस्य लक्षणं भवतु, घटप्रदीपादीनामवेद्यत्वाभावात् न तेषु अतिव्याप्तिः । पूर्वलक्षणघटकस्य सजातीयेत्याद्यंशस्य परित्यागादेव च न पूर्वोक्तासंभवदोषः । अवेद्यत्वेऽपि संशयविपर्ययरहितत्वात् "यत् साक्षादपरोक्षात्" इत्यादिश्रुतेश्च ज्ञानस्य अपरोक्षव्यवहारविषयत्वम् ।

१ मः ॥—भवदुक्तमेतल्लक्षणमपि प्रायेण पूर्वोक्तदोषसंदोहग्राहग्रासग्रस्ततया न भवदीयसमीहितसाधनायालम् । अवेद्यत्वेऽनुमानाद्यगोचरतया कथानवतारप्रसङ्गस्य दर्शितत्वात्, अपरोक्षव्यवहारविषयत्वमितिशब्देन प्रत्यक्षज्ञानविषयत्वस्य कण्ठोक्तत्वात् तद्विपरीतावेद्यत्वाभिधाने मम माता वन्ध्येतिवद् व्याघाताच्च, सुषुप्तिप्रलयमोक्षेषु अव्याप्तेश्च, तदा व्यवहारस्यैवासंभवेन तद्विषयताऽभावात् ।

२यः ॥—अयि भोः सखायः ! वेलाऽतिवर्त्तते, तिष्ठतु इदानीमस्माकमयं विचारसंरंभः । एत, वयमधुना राजसभामेव गच्छामः, अस्मदुपाध्यायपादा त्वत्र निर्णयं करिष्यन्ति ।

अपरे ॥—एवं तावद् भवतु, व्रजामो वयं राजपरिषदम् ।

इति स्वप्रकाशलक्षणपूर्वपक्षः ।

समाप्तं प्रथमदृश्यम् ।

---

# प्रति पत्रम्

श्री०संपादक-साहित्यपरिषत्, कलिकाता

अयं वृत्तान्तः स्वसमाचारपत्रे कृपयाऽवश्यं प्रकाशनीय इति सादरमस्माकं विज्ञप्तिः ।

भवदीयः

| | |
|---|---|
| फणीन्द्रपुरम् | खांडेकर इत्युपाह्वो भास्करशर्मा |
| वैशाखशु० ११ | पूज्यपादानां संचारकार्यवाहकः । |

अस्मिन्वर्षे श्रीसंकेश्वरकरवीरमठाधिपैः श्रीमज्जगद्गुरुश्रीशंकराचार्यपादैः फणीन्द्रपुरे भगवत्पूज्यपादश्रीमदाद्यशंकराचार्यजयन्त्युत्सवः कृतः । तदवसाने वैशाखशु० षष्ठ्यां श्रीमदाचायपादैर्ये केचिद्विद्वांसो धर्मपरायणा धर्मकार्यरताश्च सज्जना वैशिष्ट्यदर्शकोपाधिभिः सम्मानितास्तेषां नामान्युपाधयश्च प्रख्यापनार्थमधो लिख्यन्ते ।

| | |
|---|---|
| वे० शा० सं० आहिताग्नि बालाशास्त्री घाटे | धर्मशीलवैय्याकरणकेसरी |
| वे० शा० सं० पंढरीनाथशास्त्री घाटे ... | पण्डितरत्न |
| वे० शा० सं० गोविन्दशास्त्री वैद्य ... | वैय्याकरणमण्डन |
| वे० मू० नारायणभट्ट आर्वीकर ... | वैदिकशिखामणि |
| वे० मू० कृष्णभट्ट गोखले ... | श्रुतिकंठाभरण |
| वे० मू० गोविन्दभट्ट दशसहस्र ... | निगमालंकार |
| वे० मू० कृष्णभट्ट लांबे ... | आम्नायभूषण |
| वे० शा० सं० नारायण पैंकाजी पंडित ... | वेदान्तकेसरी |
| श्री० प्रो० गोपाल केशवगर्दे एम्०ए० ... | शास्त्रचिन्तामणि |
| वे० शा० सं० विद्याभूषण कृष्णशास्त्री घुले ... | विद्वन्मणि |
| श्री० पं० गोवर्धनशर्मा छांगाणी ... | भिषक्केसरी |
| श्री० गोपालशास्त्री राजवाडे ... | वैद्यचूडामणि |
| श्री० माधव रामचन्द्रदानी एम्-ए०,वेदान्ततीर्थ ... | विद्यालंकार |
| श्री० प्रो० सदाशिव गोविन्द सोमलवार एम्-ए० ... | विद्याभूषण |
| वे० शा० सं० शंकरनारायण आर्वीकर शास्त्री, काव्यतीर्थ ... | काव्यज्ञरत्न |
| श्री० आत्माराम बालाजी लोखंडे आयुर्वेदतीर्थ ... | पारदभूषण |
| श्री० सेठ नागरमल पोतदार ... | धर्मभूषण |
| श्री० रावबहादुर माधवराव किनखेडे बी० ए०, एल एल बी ... | धर्मधुरीण |

खांडेकर इत्युपाह्वो

पूज्यपादानां संचारकार्यवाहकः ।

# सुभाषितानि

[ कल्हनस्य ]

हितं लोकोत्तरं किञ्चिच्चिकीर्षोरुन्नतात्मनः ।
रोहन्ति हा धिक् प्रत्यूहा मितपुण्यतया नृणाम् ॥ १ ॥
वृत्तिं स्वां बहुमन्यते हृदि शुचं धत्तेऽनुकम्पोक्तिभि-
र्व्यक्तं निन्दति योग्यतां मितमतिः कुर्वन् स्तुतीरात्मनः ।
गर्वोपायनिषेवणं कथयति स्थास्नुं वदन् व्यापदं
श्रुत्वा दुःखमरुन्तुदां वितनुते पीडां नरः प्राकृतः ॥
अत एव विवेक्तॄणां यावदायुः स्वमानसे ।
जीर्णानि सुखदुःखानि दहत्यन्ते चितानलः ॥
कः स्वभावगभीराणां लक्षयेद्बहिरापदम् ।
बालापत्येन भृत्येन यदि सा न प्रकाश्यते ॥१।२२८
अभुक्ते मान्त्रिकैरन्ने नवे नागैर्न भ्युज्यते ॥
रागान्धानां कुतस्त्रपा ।२४५ ॥
सतीदैवतविप्राणामप्येकस्य प्रकोपतः ।
श्रुतो हि प्रतिवृत्तान्तं त्रैलोक्यस्यापि विप्लवः ॥
यात्याश्रितः किल समाश्रयणीयलभ्यां
निन्द्यां गतिं जगति सर्वजनार्चितां वा ।
गच्छत्यधस्तृणगुणः श्रितकूपयन्त्रः
पुष्पाश्रयी सुरशिरोभुवि रूढिमेति ॥

# पृच्छा

अयि भोः संस्कृतसाहित्यपरिषत्पत्रिकासम्पादकमहाभागाः, विदितमेवै-तद्भवतां प्रायेण यद् बृहत्पाराशरपूर्वखण्डसारांशे विद्यते जीवानां सुखदुःख-वर्णनाख्योऽतिसमीचीनस्त्रयस्त्रिंशोऽध्यायः। तस्य च तात्पर्यं सर्वात्मना प्रयतमानेनापि नापारि मयाऽवबोद्धुम्। परिषत्पत्रिकावाचकमहाभागेषु कैश्चिच्चेत् कृपया तत्रत्यानामादिमानां केषाञ्चन श्लोकानामाशयः स्फुटीक्रियेत तर्हि महानेवोपकारः स्यादस्मादृशां मन्दबुद्धीनाम्। तथाच तत्र सुजन्मना

आजन्ममृत्युपर्यन्तं जगतः सुखदुःखकम्।
ब्रूहि मे कृपया सौम्य विवाहादिसुतादिकम्॥

इति पृष्टो लोमश उवाच

सूर्याङ्गारागुमन्दानामंशान् संयोज्य संस्कृतः।
तदायुःशरदाद्यस्य भागं कृत्वा वदेत् फलम्॥
तद्भागे दुर्व्रतं वाच्यं द्यूनाप्ते पीडनं क्वचित्।
वेदोनाप्ते सुखं किञ्चित् षडूनाप्ते स्त्रिया भयम्॥
दशोनाप्ते हि हृत्पीडा भूपोनाप्ते हि भेषजम्।
विंशोनाप्ते स्फुटतनूं तत्त्वोनाप्ते श्रुतौ व्यथा॥

इत्यादि। कृपया श्लोकानामत्रत्यानां व्याख्यानं प्रदर्श्यानुग्राह्यपक्षे स्थाप्यतामयं जनः। कालचक्रदशानिर्णयप्रणाल्यपि नैव सम्यक्तयाऽवबुध्यते। साऽप्युदाहरणो-पन्यासेन स्पष्टीक्रियते चेद्भूयानेवोपकारः स्याद्बहूनां जिज्ञासूनाम्।

इति कश्चन विद्यार्थी।

---

# मेघनादवधम्

[ निबन्धकः—श्रीनित्यगोपालविद्याविनोदशर्मा ]

सप्तमः सर्गः

आसीत्तदा सुरभितं नगरं सुगन्धै-
स्तूर्यं ननाद मधुरं बलिमङ्गलोत्थम्।
दूराग्निकुञ्जभवनात् पिकनादमुग्धं
स्वर्णासनञ्च चलितं गिरिशप्रियायाः ॥ १ ॥

सम्भाष्य चाह विजयां भवभाविनीत्थं
ब्रूहि द्रुतं विधुमुखि क नु कस्य हेतोः।
को नाम मामसमये यतते प्रयष्टु-
मस्मिन्ननेहसि न मां समयष्ट कोऽपि ॥ २ ॥

संख्याय मन्त्रजपनैः कठिनीसनिपाता-
द्धासं विधाय मधुरं विजया समूचे।
शैलेशपुत्रि भवतीं रघुवंशकेतु-
र्वीरो महारथिवरो यजते युयुत्सुः ॥ ३ ॥

पूर्णं जलैर्घटवरं प्रविधाय तत्र
सिन्दूरविन्दुरचितं तव पादयुग्मम्।
नीलोत्पलाञ्जलिधरो रविवंशसूर्यः
सम्पूजयत्यहमिदं समदर्शमङ्के ॥ ४ ॥

भक्तोत्तमं तव दयां प्रति तं कुरुष्व
देवि प्रदेहि वरमिष्टमनन्यशङ्कम्।
उत्तार्य तं व्यसनसागरतोऽतिशीघ्रं
नाम स्वकं कुरु चिरादभये यथार्थम् ॥ ५ ॥

त्यक्त्वासनं कनकजं गिरिराजपुत्री
सोत्थाय चाह विजयां स्वसखीं समीक्ष्य ।
सेवस्व देवयुगलं नु यथाविधानं
भक्त्यालि यामि विजये दयितोऽस्ति यत्र ॥ ६ ॥

दन्तीन्द्रमन्थरगतिः शिवमोहिनीत्थ-
मुक्त्वा सुवर्णभवनं प्रविवेश रम्यम् ।
शच्या समं त्रिदशनाथमलं समर्च्य
स्वर्णासनस्थमकरोद्द विजया सयत्नम् ॥ ७ ॥

स्मेरा जया कुसुममाल्यवृतं सुकण्ठं
शच्याश्चकार कबरीं नवफुल्लपुष्पैः ।
ताराचितामिव तया परितो बभूव
वाद्यं चतुर्विधमगीयत नर्त्तकीभिः ॥ ८ ॥

कैलासपूरलमभूच्चकिता त्रिलोकी
जाता तथा श्रुतमधुध्वनि बालवृन्दम् ।
सुप्तं जहास मधुरं कुचितात्तमङ्के
मातुर्विनिद्ररमणीव रवैः प्रियाङ्घ्रेः ॥ ९ ॥

तस्थौ कुलं परभृतस्य वनेऽतिमूकं
योगिव्रजः समुदगाद्द वरलिप्सुरीशात् ।
मत्वा गतात् सुवरदात् करुणार्द्रचित्ताद्द-
दक्षेक्षणाद्द वृणु वरं मदिति प्रवक्तुः ॥ १० ॥

गेहं प्रविश्य गिरिजा कनकोपलोत्थं
चिन्तां चकार कथमद्य भवं निरीक्षे ।
स्तोकं विचिन्त्य मदनेन विहारयन्तीं
कुञ्जे रतिं स्मृतवती मनसा तदैव ॥ ११ ॥

तत्राऽऽववौ सुरभिवायुरतीव धीरो
नानाप्रसूनमधुभारवहः सुशीतः ।
दुर्गामनोरथ इवानतिकालपातं
तन्वीरिवाङ्गुलिहता रतिहृन्ननर्त्त ॥ १२ ॥

जग्मुर्द्रुतं भुवनजीवनवर्त्मनाऽमी
दाराः प्रसूनविशिखस्य शिवस्य शैलम् ।
देव्या नताश्चरणयोः सरसीव कल्ये
फुल्लाब्जिनी कमलिनी दयितस्य दूत्याः ॥ १३ ॥

सम्भाष्य तां सहसितं निजगाद गौरी
शम्भुः समाधिनिरतो वद केन कुर्वे ।
भङ्गं तदस्य ललने समुवाच नम्रा
सा मन्मथप्रियतमा सुमनोज्ञकेशी ॥ १४ ॥

रूपं विधेहि जनमोहनमाशु देवि
क्षिप्रं प्रशाधि वरभूषणयोजनेन ।
रम्यं कलेवरमहं करवै सुरम्यं
दृष्ट्वा भविष्यति शिवस्तव रूपमुग्धः ॥ १५ ॥

फुल्लप्रसूनसुषमां हृतलोकचित्तां
देवीं वनाधिवसतिं नवयौवनाढ्याम् ।
वीक्ष्यर्त्तुराजसमये ऋतुवृन्दनाथो
मोहं वद व्रजति किं न स रूपमुग्धः ॥ १६ ॥

मृष्ट्वा कचानथ रतिः सुसुगन्धितैलै-
र्वेणीं विधाय रुचिरां मणिमण्डनानि ।
कस्तूरिका-वकुल-कुङ्कुम-चन्दनानि
दत्त्वा च चित्रितवती चरणावुमायाः ॥ १७ ॥

धृत्वा मनोहरतरं भुवनस्य रूपं
शोभामवाप गिरिजा द्विगुणां सुमृष्टम् ।
स्वर्णं यथाथ मुकुरे वदनं ददर्श
फुल्लाब्जिनीव विमले सलिले रुचिं स्वाम् ॥ १८ ॥

स्मेरा जगाद कुसुमेषुवधूं मृडानी
सम्भाष्यतां तव हृदीश्वर आशु साध्वि ।
आह्वत्तदैव दयितं स्मरगेहलक्ष्मीः
कुञ्जे मधौ परभृतेव ऋतुक्षितीशम् ॥ १९ ॥

तत्राऽऽजगाम चपलं स हि पुष्पधन्वा
प्रोष्येव हृष्टहृदयं श्रुतदेशगीतः ।
शैलात्मजाह चल वत्स मया समीपं
शम्भोर्महातपसि रुद्धसमग्रवृत्तेः ॥ २० ॥

मायासुतो मकरकेतन आह भीतो
देवीत्थमादिश कथं चिरकिङ्करं माम् ।
प्राचीनवृत्तमधुनाऽपि स्मृतिं स्मृतेर्मे
यातं भृशं व्यथयतीति बिभेमि मातः ॥ २१ ॥

देहं विसृज्य भवती जनकस्य दोषाद्
दक्षस्य जन्म जगृहे गिरिराजपत्न्याम् ।
पूर्वं यदैव तव शोकविसृष्टभारो
विश्वस्य नाथ उपचक्रम उग्रयोगम् ॥ २२ ॥

तद्देवराजमघवा समदिक्षदेनं
दासं विहन्तुमविलम्बितमस्य योगम् ।
दुष्टक्षणेऽगममहं तपसि स्थितं तं
लक्ष्यञ्च पुष्पधनुषः कृतवान् कुबुद्ध्या ॥ २३ ॥

भालाग्निरुग्र उदगाद् भवभावनस्य
मां रोषभीषणरवं क्रमितुं भयार्त्तम् ।
सिंहो यथा गहनकाननमुग्रनादैः
सम्पूर्य धावति गजं प्रणिहन्तुमारात् ॥ २४ ॥

ज्वाला मया बहुविधा जननि प्रसोढा-
स्ता वेदयामि चरणे स्फुटितारविन्दे ।
सक्रन्दनं पवनचन्द्रभगादयोऽपि
हूता मयाऽमरगणा न तु केचिदायन् ॥ २५ ॥

भस्मीकृतोऽभवमहं वत मन्दभाग्यः
सद्यो भवेशदयिते क्षतसर्वचेष्टः ।
त्रासात् प्रियङ्करि नियुज्यमिमं क्षमस्व
रक्षार्त्तरक्षणपरे च विपन्नदासम् ॥ २६ ॥

मीनध्वजं भगवती स्मितशुद्धवाग्भि-
राश्वास्य प्राह सुभग व्रज निर्भयं त्वम् ।
सार्द्धं मया विगतशङ्कमतुल्यशक्ति-
र्जिष्णुर्भवान् मम वराज्जगतीह कृत्स्ने ॥ २७ ॥

सोऽर्च्चां करिष्यति तव ज्वलनः पुरा य-
स्त्वां भस्मसादकुरुताद्य मम प्रभावात् ।
प्राणान् सुरक्षति यथागदशक्तिमेत्य
क्ष्वेडोऽपि मन्त्रगुणतो हतमृत्युवीर्यः ॥ २८ ॥

आह प्रणम्य मदनश्चरणावुमायाः
का भीतिरस्ति भुवनेऽभयदाऽसि यस्य ।
त्वं मातरेष भृतको विनयं विधत्ते
केन प्रयास्यसि गृहाद् वद मोहिनीत्थम् ॥ २९ ॥

मत्तं भविष्यति जगत् प्रविलोक्य रूपं
भूमोहनं तव खलु प्रवदामि सत्यम् ।
तूर्णं तदैव जननि प्रभविष्यतीह
घोरं जगद्विघटकं प्रचुरं त्वनिष्टम् ॥ ३० ॥

देवासुरैर्विमथितस्तटिनीप्रियो यत्
पीयूषमङ्ग दितिजाः कुपिताः सुदुष्टाः ।
देवैः सुधाप्तिमुदितैर्जयघोषमत्तै-
श्चक्रुर्विवादमतिमात्रमहो सुधार्थम् ॥ ३१ ॥

सद्यः सुमूर्त्तिमतुलां स चराचरस्य
विश्वस्य मोहजननीमधरद्रमेशः ।
तं छद्मना धृततनुं प्रविलोक्य विश्वं
सम्मोहितं समभवच्छरविद्धमस्य ॥ ३२ ॥

पातुं तृषा तदधरामृतपूरकं ते
देवासुरा विगलितामृतगाढलोभाः ।
वेणीं समीक्ष्य फणिनोऽनमयन् फणान् स्वान्
निस्पन्दमन्दरगिरिः कुचयुग्मदृष्टेः ॥ ३३ ॥

स्वर्णावृतं धरति चेदियतीं सुकान्तिं
ताम्रं विचिन्तय शिवे परिशुद्धहेम ।
दध्यान्मनोहरतरां कियतीं न शोभां
श्रुत्वैव पर्वतसुता समसृष्ट मायाम् ॥ ३४ ॥

( क्रमशः )

# सौजन्यम्

[ निबन्धकः—ब्रह्मचारी ब्रह्मदेवः ]

वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः ।
करणं परोपकरणं येषां केषां न ते वन्द्याः ॥

सौजन्यं हि मनुष्यस्य परमो धर्मो येनाऽस्य सर्वं जीवनं सुखमयं कल्याणमयञ्च सम्पद्यते। समुपस्थितान्यपि प्रलोभनशतानि नैनं धर्मात्पथः प्रच्यावयितुं शक्नुवन्ति, समागतानि दुःखशतान्यपि नैनं विचालयितुं क्षमन्ते, एवं न कोऽपि अतिभारभूतोऽपि संसारभारः कथमप्येनं स्खलयितुं प्रभवति। सर्वदाऽप्यविनाभावेन वर्त्तमानं दुःखोदधौ निमग्नानुद्धर्तुं जायमानमानसभावनैव सौजन्यलक्षणम्। परकीयवेदनामालोक्य कस्य सचेतसो मानसं न दूयते। नूनमसौ बलिभोक्तृकाक इवोदरम्भरिर्भूतलभारभूतो नरपशुरेव वक्तुं युज्यते, यस्य चेतः परेषां वेदनया नोद्विग्नं संजायते। दयेति या नाम शक्तिर्वर्णिता बौद्धग्रन्थेषु वेदान्तग्रन्थेषु वा, सौजन्यमपि नाममात्रभिन्ना सैव, न वस्त्वन्तरं घटपटादिवत्।

यद्यपि सुजनता निसर्गसिद्धा प्रतीयते, तथाऽपि पूर्वजन्मकृतकर्मविपाकात् क्वचिदुपलभ्यते क्वचिन्न, केचन जन्मत एवाहिंसा परमो धर्मः इति श्रुतिवाक्यमूर्त्तय इव भवन्ति, अन्ये मातुरुदरसकाशादेवातिनिष्ठुरमनसः पाषाणहृदयाश्च समुत्पद्यन्ते। यथा क्षत्रियकुलप्रसूतोऽपि महात्मा गौतमबुद्धोऽहिंसामयजीवनयापनान्मूर्त्तिमत्येवाहिंसासीत्, परं वधकगृहोत्पन्नस्य बालस्य दयालेशोऽपि नास्ति, अतोऽनुमीयते यत्सौजन्यं न निसर्गसिद्धमपि तु पूर्वकृतकर्मणां विपाक एव। व्रणरुधिरमास्वादयन्ती व्रणं चिराय घटयन्ती मक्षिकेव निसर्गसिद्धानां कुटलजनानां वाग्बाणविन्यासोऽपि

महते दुःखाय सम्पद्यते। नूनं कुटिलजनानां हृदयं न कस्मिन्नपि क्षणे पले वा शान्तिनिकेतनं सदयं वा भवति, तेषान्तु परेषामुन्नतिं वीक्ष्य सर्वदैव दंदह्यते चेतः। तदिदं कौटल्यं न लाभाय, तेन नेदमुपादेयमपि तु अनुपादेयमेव, उपादेयञ्च स्यौजन्यमिति। कौटल्यं सौजन्यं वा द्विविधं व्यक्तिगतं जातिगतं च। यथा व्यक्तिनिष्ठं कौटल्यं सौजन्यं वा निसर्गसिद्धं तथैव जातिनिष्ठं कौटल्यं सौजन्यं वा निसर्गसिद्धमिति कथनन्तु न किमप्यसामञ्जस्यमुद्वहति। न चेदं कथनमयथार्थम्, अपि तु प्रत्यक्षप्रमाणसिद्धम्, ऐतिहासिकानां सततं परिश्रमोऽमुमेवार्थं द्योतयति, नीतिकुशलानां प्रयत्नोऽपि पुष्णाति अमुमेवाभिप्रायम्, नास्त्यत्र संदेहलेशोऽपि। व्यक्तिनिष्ठं कौटल्यं न तथा जगदाकुलयति, यथा जातिनिष्ठं कौटल्यं सर्वं जगद् मधुमक्षिकेव नीरसं कुरुते, आह कश्चित्कविः—

'व्रजन्ति ते मूढधियः पराभवं, भवन्ति मायाविषु ये न मायिनः।'

इति। तदिदं केषांचिन्नये चिन्त्यम्। अस्माकन्नये तु आततायिन एव ते ये कुटलं व्याहरन्ति, 'आततायिनमायान्तं हन्यादेवाऽविचारयन्नि'ति न्यायेनावश्यमेव ते पशुमारं हत्वा भूतलादपसारणीयाः। नहि तेषां स्थितिर्जगदुपकाराय भवति अपि तु जगदपकाराय, तेषां प्रलय एव जगदुपकाराय भवति।

"सज्जनानां परिरक्षणं दुर्गतानाञ्च शिक्षणम्"

इत्येतदेव संक्षेपेण सौजन्यविषय उक्त्वा विरमामि। अलमतिविस्तरेण बुद्धिमद्वर्येष्विति।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| June, 1934. | १८५६ शकीये ज्यैष्ठे<br>१७श-वर्षस्य २य संख्या | Vol. XVII No. 2 |


## उपोद्घातः।

"गुणदोषकषास्तत्र सन्तो वक्ष्यन्ति तत्त्वतः।
अतद्विदां मत्सरिणां ह्रासो नाऽऽदरगोचरः ॥"

इतिपूर्वकं भाणोऽयं शृङ्गारलीलातिलकं इदंप्रथमतया प्रकाश्य समर्प्यते सहृदय-समक्षम्। अस्य च कर्ता भास्करो नाम कविः, य ऊषषोडशहायन एव बहु-शास्त्रकोविदः कविवरैश्चाधिष्ठितां कुक्कुटपुराधीशस्य विक्रमदेवस्य सभामलंचकार, तदैव ग्रन्थमेनं तदीयप्रेरणया निर्ममे चेति महदिदं विस्मयस्थानं सहृदयानाम्। 'अधरीकृतामृतधारामधुरमधुनिष्यन्दनी' कृतिरियमौदार्यमाधुर्यसौष्ठवलालित्यादिगुणगणैर्नितरां भूषिता विजयते। अयमेव च विषयोऽस्य काव्यरत्नस्य सांप्रतमुपलभ्यमानेषु भाणेषु महनीयं स्थानमाधत्ते इति। कवेर्जीवनकालादिकमन्यत्राविलंवितमेव प्रदर्शयिष्यामिः।

अण्णामलै विश्वविद्यालयः
अण्णामलै नगर
१-६-३४।

के० रामपिषारटि, यं-ए.

# शृङ्गारलीलातिलकः

श्रीरस्तु

( नान्द्यन्ते सूत्रधारः )

सूत्रधारः—

स्वस्यां विश्वसृजो मनो दुहितरि व्यापारयामास यो
मध्येवारिधि बद्धवान रघुपतिस्सेतुं च यद्वैभवात् ।
नष्टाङ्गोऽपि चकार नष्टतपसं यश्चन्द्रचूडामणिं
सोऽयं चापभृतां वरो विजयते विश्वैकवीरः स्मरः ॥१॥

अपि च,

इन्दिरानवकटाक्षलोभिनो मन्दमेव गलिता गदाभृतः ।
कुन्दकुड्मलसिता स्मितप्रभा कन्दमुत्खनतु कल्मषस्य वः ॥२॥

( सहर्षम् ) सर्वथा सिद्धार्थाः स्मः यद्वयमभिनयगीतवादित्रनृत्तादिरसार्णवनिमज्जनोन्मज्जनस्खलनप्लवनजनितमदमत्तैर्मनीषिभिर्देवस्य विक्रमभूपतेर्लालाटिकैः परिपूर्णया परिषदा सबहुमानं समादिष्टास्स्मः यथा—"सखे, सकलविधरूपकनिरूपणनिपुण ! अधरीकृतामृतधारा मधुरमधुनिष्यन्दनी तत्रभवतो भास्करकवेर्भाणरूपा भारती भवतैवाभिनयविषयीक्रियताम्" इति । तद्यावदात्मीयां ताम्रवर्णीमाहूय संगीतकृत्ये नियोक्ष्ये । ( नैपथ्याभिमुखमवलोक्य ) आर्ये, अस्मादृशोचितविद्यामुक्तावलीताम्रवर्णि ताम्रवर्णीतस्तावदागम्यताम् ।

( प्रविश्य नटी )

नटी—अ०अ इअ म्हि । अणंतरकरणि० [?] आणवेहि । ( आर्य, इयमस्मि । अनन्तरकरणीयमाज्ञापय । )

सूत्रधारः—प्रवर्तमानमृतुमधिकृत्य प्रस्तूयतां संगीतकम्। किमन्यत् परिषदः प्रथमप्रसादनसाधनम्।

नटी—तह (तथा)। (गायति)

एऽकाणं हिअआणं पिऊसं कालकूटमण्णाणो।
मलअमंदाणिलओ मअणामंचाउ वेइ मी उववणे ॥३॥
[एकेषां हृदयानां पीयूषं कालकूटमन्येषाम्।
मलयमन्दानिलो मदनामात्यो वात्यस्मिन्नुपवने ॥]

सूत्रधारः—(सशिरःकंपम्) साधु संगीतकं येनाकृष्यमाणचित्ता इव लक्ष्यन्ते पारिषद्याः।

नटी—होदु। अऽअ किं सुदं तुए कइमस्सि णिबन्धणे अज्जमिस्साणं अणुराओत्ति। (भवतु। आर्य किं श्रुतं त्वया क[तम]स्मिन् निबन्धने आर्यमिश्राणामनुराग इति)

सूत्रधारः—आर्ये श्रूयताम्। अस्ति केरलेषु भास्करनामा कविवरः।

नटी—(सादरम्) तेण हि तं एऽव पुऽवं वऽणेदु। (तेन हि तमेव पूर्वं वर्णयतु।)

सूत्रधारः—(निश्वस्य) अवर्णनीयमप्यस्मादृशैराचार इत्येतावदेन-मनुवर्णयामि।

वाग्देवताकेलिरङ्गभूमीकृतमुखाम्बुजः।
सोऽयं देव्या च मेदिन्या तिलकत्वेन धार्यते ॥४॥

अपि च,

अम्भोधिगम्भीरमतिरूपषोडशहायनः।
शृङ्गारलीलानुभवो यस्य प्राग्जन्मजः किल ॥५॥

तेन च कविना,

गुणदोषकषास्तत्र सन्तो वक्ष्यन्ति तत्त्वतः।
अतद्विदां मत्सरिणां हासो नाऽऽदरगोचरः ॥६॥

इतिपूर्वकं प्रबद्धमिदं श्रीविक्रमदेवेन राजराजोपमेन राजराजेनानेक-

कविभिरानीयोपायनीकृतेषु निबन्धनेषु निर्धार्य नियुक्तमित्यार्यमिश्राणामाज्ञापना।

नटी—अ०छरिअं अ०छरिअं। सो कइ उपसोलसहायणो०त्ति अ०च०भुदं। अहवा पंचसदिअससमु०भिण्णा वि म०लिआए अहिरामो आमोदो पसूण०स। ( आश्चर्यमाश्चर्यम्। स कविरुपषोडशहायन इत्यत्यद्भुतम्। अथवा पञ्चषदिवससमुद्भिन्नाया अपि मल्लिकाया अभिराम आमोदः प्रसूनस्य )

सूत्रधारः—अथ किम्।

( नैपथ्ये )

युवयोरयं भागिनेयो भर्गदासः प्रथमरंगप्रवेशकुतूहलकण्टकितकलेवरोऽभिनवभाणाभिनयानुरूपिकां भूमिकामादायाऽलंकुरुते नैपथ्यद्वारभूमिम्।

सूत्रधारः ( श्रुत्वा नैपथ्याभिमुखमवलोक्य ) अये अयमित एवावतिष्ठते वत्सः। ( तं प्रति ) वत्स, रमणीयतर एव तेऽयं वेपः। तथाहि,

स्निग्धांगरागच्छुरिताङ्गयष्टिर्मुग्धाङ्गनापाङ्गचकोरचन्द्रः।
कौसुंभवासाः कनकांशुकोद्यदुष्णीषबन्धो धृतवेत्रदण्डः ॥७॥

वत्स, का पुनस्तवाभिनयानुसारिणी गाथकी। ( पुनस्सस्मितम् ) विदितमेवैतत्।

पृष्टमात्रे मया यत्ते दृष्टिरासीदधोमुखी।
प्रत्यङ्गपुलकोद्भेदैः स्वेदैश्चालंकृतं वपुः ॥८॥

भवतु प्रवेशानन्तरं प्रथममभिनेयमिदानीमेव प्रस्तुतम्। ( नटीं प्रति ) आर्ये नन्वावामप्यन्तेवासिप्रतिबिंबितप्रयोगप्रकाशप्रेक्षणकुतुकिनौ तावत् प्रेक्षकावेव भवावः।

नटी—अ०अ मएवि एदं ए०व व०तुं आर०धं ( आर्य मयाऽप्येतदेव वक्तुमारब्धम्।

( निष्क्रान्तौ )

स्थापना।

( ततः प्रविशति विटः )

विटः—( स्वशरीरं विलोक्य ईषल्लज्जां निरूप्य )

प्रभातवातेन पयोजगन्धिना प्रबोधितोऽहं प्रिययोपगूहितः ।
गतोऽस्मि रोमाङ्कुरकंचुकावृतं, वपुस्तदद्यापि तथाविधं स्थितम् ॥९॥

( प्राचीं दिशं विलोक्य ) अये, ततः प्रभृति नातीवातीतस्समयः । कुतः,

पूर्वाब्धौ विनिमज्ज्य तामसमलं संमार्ज्य रक्तांशुकं
धृत्वा वासवपत्निया* च ककुभा सख्या समं सांप्रतम् ।
संकेतं चरमेतराचलमहाशृङ्गाग्रमासेदुषी
कान्तस्यांशुमतः प्रतीक्षत इव प्राप्तिं दिनश्रीरियम् ॥१०॥

अपि च,

लोलेक्षणाः किल समाकुलमीनजालां
निष्पिष्टकोरककुलां मृदितस्तनाश्च ।
अभ्युल्लसत्कमलचञ्चलचञ्चलीकां
लोलालकावलिविराजितवक्त्रलक्ष्म्यः ॥११॥

भ्रष्टावशिष्टकुचकुंकुमरूपितांग्यः
किंजल्कपुञ्जशबलां† कमलायताक्ष्यः ।
निर्यान्ति केलिनिलयेभ्य इमा हसन्त्यः
कल्लोलिनीं मदमतंगजभुक्तमुक्ताम् ॥१२ ॥

---

* "अपि माषं मषं कुर्याच्छन्दोभङ्गं त्यजेद्गिरम्" इति वचनादियङ् । तथाच कुमारसम्भवे कालिदासः—त्रियम्बकं संयमिनं ददर्श । यद्वा वासवपत्नीवाचरति इति पत्नीयतेः क्विपि निष्पन्नस्य पत्नीशब्दस्य तृतीयैकवचने रूपम् । क्विबन्तस्य धातुत्वानपायात् "अचिश्नु धातु—"इति इयङ् ।

† एतच्चिन्त्यम् । "अन्यतो ङीष्" (पा० ४।१।४०) इति ङीष्विधानात् । तथाच काव्यालङ्कारसूत्रवृत्तौ वामनः—शबलादिभ्यः स्त्रियां टापोऽप्राप्तिः (५।२।४५) इति ।

अहो, अहं पुनः प्रियतमावियोगादियन्तं समयं महान्तमजीगणम्। तथाहि,

विरहे प्राणनाथानां क्षणो यूनां हि वत्सरः।
मेलने हारलतया व्यवधानं महाद्रिणा ॥१३॥

( सचिन्तं निश्वस्य ) कथमेवं सति सखा सत्यकेतुस्सारसिकाऽसङ्गमं सहते। सत्यमेव मयाऽसह्यमदनवेदनासन्दह्यमानतनुर्दृष्टः।

कलयन् कुवलयमालां म्लानां निश्वासवायुना बलवत्।
निजया किल तनुलतया तनुताबलतस्तुलां नीताम् ॥१४॥

अपि च, अरे कुसुमायुध, यत्त्वं भुवनैकधनुर्धरो मदन इति श्रूयसे तन्नोपपद्यते। कुतः,

अलसमुकुले निद्राभङ्गादधीरकनीनिके
वलनविलसद्वक्त्राम्भोजं मुहुर्मुहुरीक्षणे।
उपह्वतवती यत्सा तेनैव मां निभृतं हतं
विकिरसि शरैरेवं वीरः पुमान् विदधाति किम् ॥१५॥

एवमादिकमनेकमसंबन्धमालपन् अग्रगतं मां विवृतद्वारायितया* विरहवेदनयाऽचकथत्—सखे भद्रसेन

पुराऽ†पतिष्ठामृतबिन्दुना समः कटाक्षपातो मयि यस्सुखावहः।
स एव शल्योपमतां गतोऽधुना परो रिपुर्नाम पराङ्मुखो विधिः ॥१६॥

मया तु तदा 'कया पण्डितया ते गण्डसीमा पाण्डिम्ना मण्डिता' इति पृष्टेन तेनैवमेव प्रतिपन्नं 'सत्यं सौदामनीसलिलमादातुकामोऽस्मि' इति। अहं पुनरपि निर्बन्धाय प्रवृत्तः—'सखे मा मैवम्।

यूनामनुरागजुषां संघटने पटुतरोऽस्मि वेत्सि न किम्।
अपि च तवापर आत्मा भद्रमना भद्रसेन एव न किम् ॥१७॥

---

* तथाच कुमारसम्भवे कालिदासः—"स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति।

† अपतिष्टेति पदं चिन्त्यम्, पततेः परस्मैपदित्वात्।

तत्सर्वं सत्यं संभाषय*। इदानीं किं धिक्कृतवराधरं धैर्यं धारयसि' इति। तेन पुनः 'अन्यस्मै कस्मै वयस्याय व्याख्यास्ये' इतिपूर्वकं सर्वं संक्षिप्य समुदीरितम्। मया प्रतिश्रुतञ्च,

सिद्धसाध्यं करिष्ये त्वामुत्तरेऽहन्यहं न चेत्।
कार्तान्त्यां दिशि मार्त्ताण्ड† उदेष्यति न संशयः ॥१८॥

इति। इदानीं तु बहुधा मे हृदये वर्तते—

स्वकौशलं फलयति वा पयोजभूः
कथन्नु वा मनसिभुवो मनोरथः।
भवान्तरे कृतसुकृतौ•किमेतकौ
कथं विधेर्विलसितमस्मदुद्यमे ॥१९॥

( सोद्वेगम् ) अथवा कृतं सन्देहेन।

माध्वीकधाराधिकमाधुरीक-
वाग्धाटिकातूलिकयाऽस्य रूपम्।
पूर्वाधिकश्रीकमहं वितन्वल्लँ-
लिखामि तस्याः खलु चित्तभित्तौ ॥२०॥

अथ तदर्थमेव सन्नह्ये। ( परिक्रामन् विचिन्त्य ) अथवा चित्रसेनस्तावदिमामवस्थान्न वेद। स खलु विरते दिने मया नियुक्तः 'नूतना काचित् कथा ते कथनीयाऽस्ति। तत् प्रातरेवागम्यताम्' इति। स तथेति प्रस्थित इदानीमपि न न्यवर्तत। तत् प्रतिपालये प्रियवयस्यागमनम्। ( क्षणं स्थित्वा पुरो विलोक्य ) अये, अयमायाति वयस्यः।

सन्नांसस्स्रस्तभूषो मुकुलितनयनस्स्पष्टदष्टाधरोष्ठः
स्विन्नस्वच्छाङ्गयष्टिः कुचभरयुगलीबिम्बितोरःकवाटः।
आरक्तोऽयं नखाग्रैशिशुशशधरवद्भाति कण्ठे च तस्मात्
काचित् कामास्त्रनिर्यच्छिखिनि शलभिताऽनेन नूनं निवृत्ता ॥२१॥

---

* स्वार्थे णिच्।

† केरलेषु प्रायेण मार्त्ताण्ड इत्येव प्रयुज्यते।

स्वागतं प्रियवयस्यस्य। किं ब्रवीषि—'अपि मे जातः कालविलम्बः' इति। नातीव। कस्ते विलम्बहेतुः। किं ब्रवीषि—'सर्वं सविस्तरं वक्ष्यामि। प्रथमं कथ्यतां सा नूतना कथा। श्रोत्रं मां त्वरयति' इति। तेन हि श्रूयताम्। किं ब्रवीषि—'अवहितोऽस्मि' इति। अस्ति सारसिका नाम।

जाता पुरारातिपुरोपकण्ठे काचिन्मृगाक्षी कमनीयगात्री।
लावण्यसारव्ययनिर्ममेण विनिर्मिता किं नु चतुर्मुखेण ॥२२॥
तां वर्धमानां तरुणेन्दुवक्त्रां क्रमेण तारुण्यमशिश्रियद्यत्।
*तत्सर्वलोकंजयमेकमस्त्रं बभूव चूतांकुरसायकस्य ॥२३॥
स मन्दहासस्स कटाक्षपातो वाणी सुधासारजिदप्यमुष्याः।
जन्मान्तरोपार्जितपुण्ययोगात् पुण्यात्मभिः कैश्चिदलम्भि पुंभिः ॥२४॥
घनोपमा तद्घनकेशदामा मनांसि पुंसां हि निबन्धुकामा।
भाति त्रिलोकीजयशंसिनीव सितेतरा स्वान्तभुवः पताका ॥२५॥
बालेन्दुवक्रे निटिलाख्यचापे सीमन्तरेखात्मकमेकमस्त्रम्।
सन्धाय सर्वां दिशमद्य जेतुं सन्नह्यते सा रससायकोऽद्य ॥२६॥
केचिन्मनोजं मदनं वदन्ति मीनोद्भवं केऽपि मुकुन्दसूनुम्।
प्रामादिकं तत्सकलं न सत्यमनङ्गनामा तदपाङ्गजन्मा ॥२७॥
रागेण बिम्बाख्यफलं यतोऽभून्माधुर्यसारेण सुधास्रवश्च।
नवप्रवालोऽप्यधरो म्रदिम्ना तं हन्त तस्या अधरं वदन्ति ॥२८॥†
विभज्य संयुज्य कलास्स्वकीया निमज्ज्य चोन्मज्ज्य च वारिराशौ।
सदाऽपि चन्द्रो यतमानमेवं कदाऽपि तस्या मुखसाम्यमेति ॥२९॥
स चानतिह्रस्वकृशः कृशाङ्ग्याः कण्ठप्रदेशोऽपि तथा विभाति।
यथा यदाश्लेषरसानभिज्ञान् स्वान् बाहुदण्डांस्तरुणा निनिन्दुः ॥३०॥

---

* संज्ञायां "भृतॄवृजि—" [ पा० ३।२।४६ ] इति सूत्रेण संज्ञायामेव कर्मणि सुपि च जयतेः खचो विधानात् सर्वलोकञ्जयमिति पदं चिन्त्यम्।

† तथाच नैषधे श्रीहर्षः—
अधरं किल बिम्बनामकं फलमस्मादिति भव्यमन्वयम्।
लभतेऽधरबिम्बमित्यदः पदमस्या रदनच्छदं वदत्॥

तस्या भुजेनैकनरेण जय्यो मृणालनालो जलदुर्गसंस्थः ।
तथा महाकाननदुर्गसंस्थो नवश्शिरीषप्रसवः परेण ॥३१॥
यद्यत् त्रिलोक्यामुपमानभूतं तत्तद् व्यतीत्याद्य कुचौ तदीयौ ।
कमप्यदृष्ट्वात्मसमानमन्यमन्योन्यमुत्पीडयतः प्रकामम् ॥३२॥
हे हेमकुम्भाभिनुतौ कुचौ वां परस्परं मा कलहो वृथा स्यात् ।
इतीव माध्यस्थ्यमगान्मृगाक्ष्या घनाञ्जनाभा नवरोमरेखा ॥३३॥
सुमध्यमायास्सुकुमार—

( इत्यर्धमुक्त्वा ) किं ब्रवीषि—'किमप्रसिद्धवद् वदसि तां मम । मत्त इति मा गणय । न चाहं तस्याः कान्तिसंपत्तिं त्वद्वचनामृताभिषिक्तां पूर्वाधिकश्रीकां नाभिलषामि । नूतना कथा मां त्वरयति' इति । किं तथा । किं ब्रवीषि—'अथ किम्' इति । सा कदाचित् पुरारातिपुरोत्सव-दर्शनोत्सुका

शाणोल्लीढशशाङ्कबिम्बवदना शातोदरीमञ्जरी
तांबूलीदलगर्भगण्डविलसत्स्वेदांशुचेतोहरा ।
अर्धालक्ष्यपयोधरावृततनुस्स्वैरं सखीभिर्वृता
मन्दं मन्दमुपेत्य कुञ्जरगतिः पर्यष्करोद्वेदिकाम् ॥३४॥

किं ब्रवीषि—'ततस्ततः' इति । ततश्च

सुविमलेषु मनस्सु विलासिनां
बहुषु नैकतया प्रतिबिम्बिता ।
मुकुरपञ्जरमध्यगतेव सा
कतिपये समये शुशुभेतराम् ॥३५॥

अनन्तरं सा सकलजनहृदयहरणविहितविश्रमयाऽपि वपुषस्सुषमया सख्युस्सत्यकेतोरन्तरङ्गं विशेषतो मुमोष । स खल्विदानीम्

चन्द्रं निन्दति चन्दनं न सहते मन्दानिलाद्वेपते
कुन्दामोदमपाकरोति मधुपां संशीर्यते झंकृतैः ।
शूलारोहणमित्यवैति नितरामारामवासं नय-
त्येवं केसरधूसरीभवदशेषाशान्तरान् वासरान् ॥३६॥

किं ब्रवीषि—'कथमियमवस्था ते श्रवणपथमवतीर्णा' इति। तस्यैव मुखतस्सत्यकेतोः। किं ब्रवीषि—'कथं तत्र प्रसङ्गो जातः' इति। इमां दशां किंचिदवगत्य चरितं यथावदवजिगमिषुणा मया रहसि निर्बन्धपृष्टस्सर्वं स्पष्टं समाचष्ट। किं ब्रवीषि—'किं त्वया प्रत्युक्तम्' इति।

सिद्धसाध्यं करिष्ये त्वामुत्तरेऽह्न्यहं न चेत्।
कार्तान्त्यां दिशि मार्त्ताण्ड उदेष्यति न संशयः ॥३७॥

किं मम पृष्ठे ताडयन् ब्रवीषि—'निपुणोऽसि' इति। मा मैवम्। त्वामेव परं सखायं मत्वा मयैवं प्रतिश्रुतम्। किं ब्रवीषि—'त्वमेव तस्यास्सदनं याहि। अहं तु तस्याः कमितारं कोपिनं कुलिशाभिधानं कपटचाटुभिरन्यत्राऽऽक्रक्ष्ये'* इति। अद्य तेन हि गम्यतामचिरेण। स्वस्त्यस्तु। शिवस्तेऽस्तु पन्थाः। ( परिक्रम्य सानन्दमवलोक्य ) इमां वेशवीथीं यावदवतरामि। ( अवतीर्यावलोक्य ) इदं तत्सारसिकासदनम्। अत्र वर्तत इवेदानीम्,

सारसिका सा रसिका सारसिकामोदसारभारवहा।
सादरसुखिता मरुता निद्राशेषार्धमीलिताक्षियुगा ॥३८॥

( पुनर्विलोक्य ) अत्र कोऽयमध्यलिन्दमन्यतोमुखमास्ते। भवतु यथा दर्शयेयास्मि। ( उच्चैः ) कोऽत्र ( इत्यर्धोक्ते भयेन विरम्य ) स एवायं सख्या निर्दिष्टस्सारसिकारमणः कुपित इव लक्ष्यते। तथाहि,

आताम्राधरगण्डनेत्रनिटिलश्चक्रायितभ्रूलतो
निश्वासानिलवेपमानमलिनीभूतोत्तरीयांशुकः।
बाहादण्डलसत्करालकरवालोत्कंपदृश्यानल-
ज्वालाभीषण एष वीक्षत इतो रूक्षेण यच्चक्षुषा ॥३९॥

तदस्य गमनानन्तरमेवोपसर्पामि ( तिष्ठन् विचिन्त्य ) किन्तु खल्वस्येदानीं कोपकारणम्। ( पुनस्सशिरःकम्पम् ) भवतु ज्ञातम्। अस्यैव गृहिण्या कोपानलोत्पत्तौ अरण्या भवितव्यम्। यथा

---

* "आक्रंस्ये" इत्यवाऽऽत्मनेपदं चिन्त्यम्।

अवगत्य परत्र लालसामयमेनामरुणाननो भवन् ।
दिनभामहिलोकगामिनीमयमाकाश इव क्षपामुखे ॥४०॥

( पुनर्विचिन्त्य ) स पुनस्सत्यकेतुरित्येव भवितव्यम् । कुतः,

पद्मेक्षणा पद्मवर्णा पद्मगन्धिश्च याऽबला ।
आत्मार्थिनं सा पुरुषमिच्छत्येव न चापरम् ॥
पुमानीदृश एवैनां नूनमिच्छति नापराम् ॥४१॥

इत्यादिवचनादनयोरेतल्लक्षणलक्ष्यत्वाच्च । ( पुनर्विलोक्य ) अयमुत्थितः ।

कंपयन् पृथिवीं कृत्स्नां पदक्षेपभरानताम् ।
निजाय निलयायैव प्रस्थितो मृगराजवत् ॥४२॥

यावदुपसर्पामि । ( उपसृत्य ) अयि, सारसायतनयने सारसिके ( अन्तःपुरप्रवेशं निरूप्य सविषादमात्मगतम् ) किमियमधोमुखी तिष्ठति । न शृणोतीव मे चाटुवचनम् । ( अयि सारसेति पुनः पठति । पुनरपि न शृणोति, सहस्ततालं तदेव पठति, सविषादं स्वगतम् ) अहो अस्या मदनावेशः । ( पुनस्ससन्तोषम् ) अथवा फलितमस्मद्व्यवसितम् । भवतु । प्रबोधये* । ( हस्तेन चालयन् । प्रकाशम् ) अयि सारसायतनयने सारसिके

जागर्षि वा स्वपिषि गच्छसि वा प्रयासि†
किन्नासि किन्न्वसि नु सुख्यसि दुःख्यसि त्वम् ।
को देश एष कतमः कमलाक्षि काल
इत्यादि वेत्सि किमु सुन्दरि धिग् दशां ते ॥४३॥

किं ससंभ्रममुत्तिष्ठसि । किं ब्रवीषि—‘मृष्यतामबुद्धिपूर्वकमेतदशेषम्’ इति । मा मैवम् । समयोरन्यतर इतरं प्रति नैवं वक्तुमधिकारी । नाप्युत्थातुम् । तस्मादास्यतामास्यताम् । किं ब्रवीषि—‘किमावां समौ’ इति । नहि नहि भ्रमादेव निगदितमिदम् ।

---

* “बुधयुधनशजनेङ्प्रद्रुस्रुभ्यो णेः” [ पा० १।३।८६ ] इति सूत्रेणात्र परस्मैपदेन भवितव्यम् ।

† तिष्ठसीति भाव्यम् ।

आलोललोचनविलासकलाविलोलि-
ताशेषलोकहृदयाः क्व कृशाङ्गि यूयम् ।
तत्तद्विकासशिथिलीकृतधैर्यबन्धा-
स्त्वादृक्षु चातकवदाकलिता वयं क्व ॥४४॥

किं ब्रवीषि—'वाग्मिनां पुरः किमपि न वक्तव्यं संवृत्तम्' इति। तथाऽपि त्वया सह संभाषणलालसं मे मानसम् । किं ब्रवीषि—'तिष्ठन्तु नाम चाटुवचनानि । उपविश्यतामस्मिन्नवीने शयनपुटे । उपहृतान्यमूनि तांबूलदलादीन्युररीक्रियन्तामत्रभवता' इति । ( तथेत्युपविश्य तांबूलचर्वणादिकमभिनीय ) किं ब्रवीषि—'कस्तावत्तवेदानीमागमनहेतुः' इति ।

मादृशो मृगशावाक्षि त्वादृशां निकटं सदा ।
प्राप्नुवन्ति यतो हेतोस्तत एवाहमागतः ॥४५॥

किं ब्रवीषि—'अलममूभिर्वक्रोक्तिभिः । अपकपटं कथय' इति । नन्वहमपि किंचित् प्रष्टुकामोऽस्मि । किं ब्रवीषि—'मत्प्रश्नप्रतिवचनप्रदानानन्तरं सर्वं पृच्छ' इति । नहि नहि । अहं प्रथमम् । किं ब्रवीपि—'तर्हि तथा' इति । श्रूयताम्—

अयि भवति सन्नतभ्रूरभिभवतीयं बलीयसी चिन्ता ।
अपि च त्वत्प्राणसमः कुपित इवाऽऽलोकि को हेतुः ॥४६॥

किं पुनरपि विषादं न मुञ्चसि । सर्वमवगतमनेनेति चेन्मा भैषीः । वपुषैव नन्वावयोर्द्वैधंभावः * । ( स्वगतम् ) अहो नु खलु द्रढीयानस्यास्तद्गतो रागबन्धः । या ह्येवं निर्बद्धाऽपि न वक्तुमारभते । ( अन्यतो विलोक्य साश्वासम् ) अये, इयमायात्यस्या वयस्या नवचन्द्रिका । काममुष्याः मुखतस्सर्वमवगतदेश्यमप्यवगमिष्ये† । (प्रकाशम्) अयि, रसिकजननयनचकोरचन्द्रिके नवचन्द्रिके क इदानीं दूयते देशः । किं केवलं हासं कुरुषे । किं ब्रवीषि—

---

* अत्र सुमागमश्चिन्त्यः ।

† "अवगमिष्यासि" इति पठनीयम् ।

'पीयूषस्रवसंमितानि वचनान्येतानि युष्मादृशां
यावद्यौवतमेव धीर निपतन्त्यस्मासु कोऽयं क्रमः।
इति विचिन्त्यैव हसितम्' इति। को भेदः,
युष्माकं चलनीलनीरजरुचां बाले विलासो दृशा-
मित्थं सन्नतगात्रि चित्तहरणात् पश्चात् कियत्तिष्ठति ॥४७॥

अलमनावश्यकव्यवहारैः। प्रश्नोत्तरं वद। किं ब्रवीषि—'शृणोत्वार्यः। अस्याः खलु वयस्यायाः कृतेऽहमत्रभवन्तं दिदृक्षुः प्रस्थिता पश्चात् पथिमध्ये चित्रसेनमुखादत्रैवाऽऽगतं भवन्तमश्रौषम्' इति। ( सहर्षमात्मगतम् ) अवगतमेवास्या दर्शनप्रयोजनम्। तथाऽप्यजानन्निव पृच्छामि। ( प्रकाशम् ) अथात्रभवत्या अस्मद्दिदृक्षा किंप्रयोजनिका। किं ब्रवीषि—'यतो हेतोरत्रागमनमत्रभवतः' इति। ( स्वगतम् ) मन्ये विदितमनया सकलं चित्रसेनमुखादिति। ( उभे विलोक्य सहर्षातिशयम् )

अस्मभ्यमव्याहतबाहुवीर्यो ध्रुवं प्रसन्नो भगवाननङ्गः।
अनन्यसाहाय्यवलोपलभ्यं कार्यं करस्थं यदभूद् गरीयः ॥४८॥

( सूर्यं पश्यन् किंचिदिव त्वरां निरूप्य ) अहो विचारितां वेलामतिक्रामति समयः। तथाहि

तरुणतामिमे सरसिजाकरा अरुणिमानमप्यरुणसारथिः।
जहति केकिनो विहरणोत्सवं वहति नो मही तुहिनशीकरान् ॥४९॥

तदधुना प्रस्थिता वयं भवतीभ्यामनुमोदितव्याः। किं ब्रवीषि—'पुनर्दर्शनावसरानुदेशेनाद्यानुज्ञायेम' इति। श्रूयताम्,

प्रथमसमागमसमुचितभूषणवपुषा सहितस्सुहृदा।
नलिनी न यदा नयनं रमयेन्नयनपथं वामुदयेय तदा ॥५०॥

( प्रस्थितः ) नवचन्द्रिके, किं ब्रवीषि—'निभृतं किमप्युच्यते कान्तोऽस्याः कोपस्येव सन्निवेशविशेषस्तस्मात् काऽपि चिन्ता ममेति' इति। ( सस्मितम् ) मा भैषीः। किं न श्रुतं 'तमेव वञ्चयितुं गतश्चित्रसेनः' इति। किं ब्रवीषि—

अधुनाऽस्मि गृहीतशल्या संवृत्ता' इति । अथ किम् । साधयाम्यहम् । ( सानन्दं परिक्रामन्नात्मावस्थां विमृशति )

निर्भरपरस्पररागमुद्रितयोर्मेलनाय नववयसोः ।
उद्धृत एव सदाऽहं बद्धामोदं नयामि नाम दिवसान् ॥ ५१ ॥

अपि च,

सुभगानप्यनुभोगान् मध्ये मध्ये यथेष्टमाकलयन् ।
जलजदललोचनानां परमेष्ठी भद्रसेन इति गदितः ॥५२॥

कस्य पुनरन्यस्येदृशी सुखवृत्तिः ।

तपन्ति ये वर्ष्म तपोभिरुत्कटैर्मतिञ्च शास्त्रार्थविचारणादिभिः ।
तेषामनाघ्रातमनोजतेजसां(१) कालान्तरेऽल्पं सुखमस्ति वा न वा ॥५३॥

( निमित्तं सूचयन् )

स्पन्दते नयनं वामं करो वामेतरोऽपि मे ।
फलप्राप्तिः कथं नु स्यात् परस्परविरुद्धयोः ॥५४॥

परस्परप्रतिषेधादुभयमपि न स्यादिति वा विप्रतिषेधे परं कार्यमिति*वा भवतु । ( पार्श्वयोरालोक्य ) अये ! अतीतमिव चन्दनलताया मन्दिरम् । ( तिष्ठन्विचिन्त्य ) नाहमेतावदन्तिकागत एनामसंभाव्य गच्छामि । ( निवृत्य ) इदं तन्निलयनम् । यावत् प्रविशामि । ( प्रविश्य सविषादम् ) किमियं मामालोक्य कुपितेव वैमुख्यमाचरति । तथाहि,

स्थलकमलदलश्रीमोषिणैषा पदेन
क्षितिमिह विलिखन्ती सुष्ठु सन्तिष्ठमाना ।
मलिननयनलक्ष्यं मानमालंबमाना
मदयति मदिराक्षी मानसं मामकीनम् ॥५५॥

---

(१) कालान्तरे निर्वृतिरस्ति वा न वा इति पाठान्तरम् ।

* विप्रतिषेधे परं कार्यम् इति भगवतः पाणिनेः परिभाषासूत्रम् [१।४।२] । तथाचोद्भटः श्लोकः—

निजपतिराद्यः प्रणयी हरिर्द्वितीयः करोमि किं गोपि ।
शृणु सखि पाणिनिसूत्रं विप्रतिषेधे परं कार्यम् ॥

भवतु प्रसादयितुं प्रयतिष्ये । ( उपसृत्य ) आर्ये चन्दनलते मा मा मान*-मनुष्ठेयम् ।

अपधीरयतीदमंग मामरुणिम्नाऽऽकुलितं मुखाम्बुजम् ।
अपराचलशृङ्गसङ्गिनस्तुहिनांशोरनुकार्यतां गतम् ॥५६॥

अपि च,

भ्रमरो मम लोचनात्मकः स्मितशोभा-मकरन्दलालसः ।
†भ्रमतेऽधिकमप्रसन्नतामवलोक्याऽऽननपंकजे तव ॥५७॥
करुणां कुरु मय्यहेतुना कलहेनैष भृशं विशीर्यते ।
अथवा वद कारणं प्रिये सदृशीं तस्य करोमि निष्कृतिम् ॥५८॥
अरुणाधर एष वेपते हरिणापांगि यथा यथा तव ।
अपि मे हृदये तथा तथाऽङ्कुरते‡ कोऽपि विषादवेपथुः ॥५९॥

( स्वगतम् ) अहो नास्याः कोपस्य कोऽपि लघिमा लक्ष्यते । किं पुनः करवाणि । भवतु । प्रणमामि । प्रणतिप्रसाद्यस्तरुणीजनो नाम । ( बद्धाञ्जलिः प्रकाशम् )

अयमञ्जलिरङ्गनामणे चरमस्स्याद् यदि न प्रसीदसि ।
अपराधमबुद्धिपूर्वकं प्रवदन्ति प्रणतिप्रतिक्रियम् ॥६०॥

( दण्डवत् पतितुमिच्छति । पुनस्सरोमाञ्चम् )

गृहीतपाणिरनया यमानन्दमहं लभे ।
तं वेदवेदान्तविदो न विन्दन्ते न संशयः ॥६१॥

( मुखमालोक्य सस्पृहं स्वगतम् ) अस्याः खलु प्रशान्तकल्पकोपायाः,

रक्तारक्तेक्षणांभोजं स्फुरितास्फुरितेक्षणम् ।
मुखं पूर्वाधिकश्रीकमिदं हरति मे धृतिम् ॥६२॥

---

* मानशब्दस्य क्लीबलिङ्गेऽपि क्वचित् प्रयोग उपलभ्यते ।

† अत्राऽऽत्मनेपदं चिन्त्यम् ।

‡ अत्राप्यात्मनेपदं चिन्त्यम् । अङ्कुरशब्दात् क्विपि निष्पन्नस्य धातोः परस्मैपदस्यैवोचितत्वात् ।

तदागामिनीं यामिनीमनया सफलीचिकीर्षामि। ( प्रकाशम् ) किं ब्रवीषि— 'भवन्तमेवाऽऽगन्तुकमालोक्य सादरमभिमुखीभवन्तीमिमामनादृत्य यद्-गतोऽसि, ततो मय्यविवेकेन्धनो दुर्वहगर्वगन्धवहैकबन्धुः कोऽपि कोपानल उदजरीजृंभिष्ट। तस्येदानीमार्यवचनामृतरलसमुक्षितस्य नामापि न श्रूयते इति संवृत्तम्' इति। (सस्मितम्। स्वगतम्) को न्विदानीमत्र न लीयते। ( प्रकाशम् ) अयं हि युष्मादृशां संप्रदायः। ( स्वगतम् ) कथमस्या आकूत-मवगन्तव्यम्। भवतु वक्ष्यामि सूचकाक्षरम्। किं भविष्यति, ( परिसरवर्तिनीं पद्मिनीमवलोक्य विवर्त्य प्रकाशम् ) आर्ये, पश्य,

अधिष्ठितां हंसवरेण पद्मिनीं न सन्निधत्ते भ्रमरो विशंकितः।

किं ब्रवीषि—

'विवञ्चयित्वैनमसूक्ष्मदर्शिनं सुखेन भुञ्जीत वृथैव शंकते' ॥६३॥

इति। ( हर्षातिशयमभिनीय, सस्मितं पुनस्तत्रैव भ्रमरपटलीमङ्गुल्या निर्दिश्य ) आर्ये, भ्रमरपटलस्यास्य पश्य महतीं विचिकित्साम्। यथा,

मन्दीकृतमकरन्दं विकसदिदं किमु पिबामि कमलवनम्।
किमुत विकसिष्यमाणां* नवमधुरां कुमुदिनीं प्रतीक्षिष्ये ॥६४॥

इति। ( सहासम् ) किं ब्रवीषि—अकाण्डे विचिकित्सतो मुग्धानमून् भ्रमर-कानहमुपदिशामि। हे भ्रमर,

विजहिहि विगतमरन्दान्यब्जान्यथ भजस्व कुमुदवनम्।
कालातिपात एको विघ्नस्ते किन्न सोढव्यः ॥६५॥

इति। ( स्वस्य गमनस्य कालातिपातं नाटयन् प्रस्थितः। सानुरागानन्द-विश्वासबहुमानौत्सुक्यस्मितम् ) अचिरेण पुनरावयोर्दर्शनं भूयात्। किं ब्रवीषि—'तावत्समयं स्मरणीया वयम्' इति। किन्तावदिति। आ जीवनान्तं स्मरिष्यामि। अद्य खलु त्वां विना विद्यन्त एव सुलभास्सुहृदस्त्रिलोक्यां मे न। ( नैपथ्ये )

भो भोः काञ्चनोष्णीष! क्षणं तिष्ठ।

---

* विकसिष्यन्तीम् इति साधु।

विटः—किमिदमस्या अनुचारिणो मामाह्वयन्तीव। ( विमृश्य ) बहवः काञ्चनोष्णीषाः। मया कस्संबन्धः। ( इति गच्छति)

( नैपथ्ये )

आ अस्माभिराहूतोऽपि अनाकर्णितकेन क्व यास्यति। अथवा बधिरोऽसि।

विटः—इदं मां प्रति न भवेत्। अदृष्टश्रुतपूर्वाय कः कुप्यति। ( पुनरपि गच्छति )

( नैपथ्ये )

इतो विलोकनमात्रं किं न दास्यसि।

विटः—भवत्ववलोकये। तेन को दोषः। ( तथा कुरुते )

( नैपथ्ये )

कुण्डिनग्रामं प्रति कथं पन्थाः।

विटः—हुम् ( इति विहस्य ) अहो मा कुप्यत। सम्यगवबोधयामि।

( नैपथ्ये )

कुत्र जिह्वा ?

विटः—विजहित कोपमवहिताः श्रृणुत।

गत्वा किंचन दक्षिणां दिशमितो निष्कण्टकेऽयं यथा
द्रष्टव्यं द्रमिडाभिधस्य धनिकस्योच्छृंगमट्टालकम्।
पश्चात् पश्चिमतः पुरीं नरपतेः पश्येत दृश्यश्रियं
यत्राऽऽस्ते खलु सैष कुण्डिनपतिस्स्वर्गे सुरेन्द्रो यथा ॥६६॥

( नैपथ्ये )

अहो अस्य दुर्वहो गर्वः, योऽयं मार्गक्रमानुदेशेऽपि भङ्गिमन्विच्छति।

विटः—किमसूयया। यूयमपि भङ्ग्या वदत।

( नैपथ्ये )

*पलायन्तु पलायन्तु वृषल्यः ( किलिकिलिशब्दश्च।)

---

* पलायन्तां पलायन्ताम् इति पठितव्यम्।

विटः—( आश्वासं नाटयन् ) गतोऽयं सानुचरो द्विजवरः। वयमपि प्रकृतमनुसरामः। ( परिक्रम्यावलोक्य ) इयं सा नारायणी नाम। निजपुरोपरिसरे प्रियसखीपरिवृता सावशेषलज्जा कन्दुकलीलालालसा दृश्यतरशरीरसुषमा दृश्यते।

तथाहि,

आतप्ताञ्चितकाञ्चनद्युतिमुषा निर्व्याजकान्त्या स्वयं
स्रंसत्कुन्तलभारसंकलितया साकं भ्रमन्ती मुहुः।
मध्येनीलवलाहकं विलुठतो विद्युल्लतातेजसः
कुर्वाणा विपरीततामिव विभात्येषा कुरंगेक्षणा ॥६७॥

अपि च,

घर्मांभःकणिकांकुरैर्द्विगुणितान् हारानुरोजन्मनः*
अर्द्धस्रस्तकरोपरुद्धवसनं धत्ते नितंबं गुरुम्।
पातोत्पातविधायिकन्दुकमनु व्यापारिते लोचने
बिभ्राणा कलयत्यसौ मम मनो नो कन्दुकं सुन्दरी ॥६८॥

यावदुपसर्पामि। ( उपसृत्य )

लीलां लोचनसुखदामङ्गानीमानि सादितानि च ते।
पश्यन् विरमेति वचो वक्तुमवक्तुं न शक्नोमि ॥६९॥

तथापि,

विरम विशालाक्षि पुनः क्लान्तिस्स्याल्लीलया न जानीषे।
तान्तां तान्तव तावत्तनुलतिकामुपहराक्ष्णोर्मे ॥७०॥

( निजश्रवणमङ्गुल्या स्पृशन् )

अयमेव नाथते† मधुकरः
श्च्योतमानं सरसिजादानम्रादनिलाहतेः।
परागपालीशबलं मधु पायय मा चिरम् ॥७१॥

---

* अत्र विसन्धिदोषः स्फुट एव।

† अत्राप्यात्मनेपदं चिन्त्यम्।

( स्वगतम् ) नेयं प्रतिवक्तुमारभते। केवलं व्रीडावकुण्ठितवदनारविन्द-मवतिष्ठते। ( विचिन्त्य ) एवं भवतु। ( प्रत्यक्षमितरां प्रति ) किमियमवदना तिष्ठति। किं ब्रवीषि—'किन्न जानासि कैशोर एव सविशेषह्रीकामत्रभवतीम्' इति। कामं जानीमहे। किं तु नेयं कैशोरसुलभा लज्जा। कुतः,

विलिखत्यवनीतलं पदा स्थलपंकेरुहदीप्तिदस्युना।
पुलकांकुरिताङ्गवल्लरी स्मयमाना निभृतं नतानना ॥७२॥

( नैपथ्ये )

आर्ये चन्दनलतिके कुत्राऽऽस्ते भद्रसेनः। किं ब्रवीषि—इत इदानीमेव निर्गत इति।

विटः—( आकर्ण्योच्चैः ) अयमयमिहास्मि।

( नैपथ्ये )

आगम्यतामागम्यताम्।

विटः—आर्ये कार्यगौरवात् प्रस्थितोऽस्मि। किं ब्रवीषि—'अचिरादनन्तरं दर्शनं भूयादित्यतः किमन्यत् प्रार्थनीयमस्माभिः' इति। अथ किम्। नारायणि त्वमपि,

यद्यक्षमाऽसि वाक्येन रुध्यमानेन लज्जया।
अपांगेन मृगापांगि पाथेयं प्रतिपादय ॥७३॥

( परिक्रम्य सहर्षम् ) अयमयमायाति सहस्ततालं प्रहसंश्चित्रसेनः। ( सह-सोपसृत्य ) त्वरयति मां ते मुखोद्योगः। तत् सर्वं सविस्तरं कथय। किं ब्रवीषि—'एवं करोमि किं तु प्रच्छायशीतलं वटविटपिमण्डपमाश्रित्य सुखा-सीनौ भवावः' इति। ( तथा कृत्वा ) किं ब्रवीषि—'शृणोतु वयस्यः' इति। अवहितोऽस्मि। कथ्यतामामूलचूडम्। किं ब्रवीषि—'यावदहं भवन्तमाम-न्त्र्य वञ्चनोपायं चिन्तयन् प्रस्थितोऽस्मि तावदक्षिमुखमागता नवचन्द्रिका। तदेव मङ्गलसूचकमिति समाश्वस्तं हृदयम्' इति। विदितमेतत्। ततस्ततः। किं ब्रवीषि—'ततश्च सा निजनामधेयार्थानुरूपं मन्दस्मितपूर्वकं सारसिका-समवस्थां मे निवेदितवती' इति। ततस्ततः। किं ब्रवीषि—'अनन्तरं

सन्तोषतरंगितान्तरंगतो मत्तस्त्वद्व्यापारस्तद्विषय एवेत्यवगत्य निर्वृतहृदया निवृत्ता तत्रभवती' इति। एतावत्पर्यन्तमवगतमस्माकम्। अनन्तरकथाया-मावेगः। किं ब्रवीषि—'कथं विदितम्' इति। वक्ष्यामि। इदानीं प्रसङ्गभङ्गो मा भूत्। ततस्ततः। किं ब्रवीषि—'ततश्च तस्यानिष्टकुलाचलपत्रपाटन-कुशलतया कुलिशस्य कुलिशस्य निलयनमधिगतेन मया,

कोपाङ्गारोद्गिरण*निरतैर्निश्चलैर्दृष्टिकोणैः
प्लुष्टप्रायं स किल कलयन् पार्श्वसंस्थं समस्तम्।
धुंधुध्वानैश्चरणहतिभिश्चालयन् सालशैलान्
साक्षाद्दृष्टस्स्वपुरनिकटे सञ्चरन् प्राक्प्रतीचम्॥७४॥

अपि च,

नैसर्गिकाभिनवताम्रसमानरुञ्चि प्रोत्कंपितानि पुनरुत्कटरोषवेगात्।
श्मश्रूणि तान्यसकृदूर्ध्वमुखाकृतीनि कुर्वन् त्सरुग्रहकिणस्थपुटेन दोष्णा॥

अहं तु नवचन्द्रिकामुखादवगतावस्थः परिजननिवारितोऽपि प्राह्लादीं वृत्ति-मनुतिष्ठन्नेवमवादिषम्' इति। किं तत्। किं ब्रवीषि—

'भो भोः शौर्यसरित्पते मृगयया पर्युत्सुके निश्चलं
पश्यत्यद्य भवत्यदन्ति मनुजाञ्छार्दूलहेला इति।
त्वामुद्दिश्य वदन्ति सर्व इति यत्तत्त्वं न वा तत्ततो-
जानासीत्युदितं गुणाय भवते दोषोऽस्तु मा मां प्रति'॥७६॥

इति। ततस्ततः। किं ब्रवीषि—

'ततस्तैर्लोल्लासी ज्वलन इव कीलालशकलैः
सकोपो वात्याभिर्दववदहनवद्वा प्रववृधे।
अतः पश्चाद् भूतामहह तदवस्थामयि सखे
फणीन्द्रो जिह्वानां द्विगुणितसहस्रेण गणयेत्'॥७७॥

अनन्तरमयमन्तःपुरमधिगम्य परिगृहीतफलककृपाण एवांगणस्थलमवातरत्।

ठात्कारयन् फलकेनोरुमूले प्रप्लुत्योच्चैरेव षट्सप्तकृत्वः।
प्रातिष्ठते (?)महते काननाय यावत्तावत् प्रोक्तमेतन्मया च॥७८॥

* टु वम उद्गिरणे इति धातुपाठे निपातनादस्य साधुत्वम्।

तदपि श्रूयताम्, इति। अथ किम्। किं ब्रवीषि—

'भो भोः शौर्याम्बुनिधे मृगयानैपुण्यशालिने भवते।
नैतन्निवेदितव्यं* तथाऽपि नियुनक्ति† मां सख्यम् ॥७९॥

तस्माद् विज्ञापयामि

यावन्मनुष्यजातेर्विरतिं प्राप्नोति मुखभवः शब्दः।
तावद् मन्दोत्थानाः श्रूयन्ते नाम दुष्टमृगाः ॥८०॥

इति इति। ( सहर्षम् ) सखे सम्यगुपायो निर्मितः।

भवति भवादृशि सख्यौ भवति कथं मे प्रतिश्रुतेर्भंगः।
वसति वसुदेवसुते सत्रा विजयस्य कुत्र न विजयः ॥८१॥

ततस्ततः। किं ब्रवीषि—'सोऽयं सशिरःकंपं मामेवमवादीत्—"सम्यगुपलक्षितमेवैतत्। अथाहं सकलजनेषु कुंभकर्णायमानेषु उत्थाय काननं प्रक्षोभयिष्ये। मम कण्डूतिशमनाय जगतां हिताय वा भवतु।

उभौ सहायौ यामिन्यां वनायोत्तस्थुषो मम।
धराधरोत्तरं धैर्यं करवालधरः करः ॥८२॥"

इत्यादिकमनेकमात्मन औन्नत्यमालपन्नन्तःपुरमगात्। अहमप्यात्तमोदमावृत्तोऽस्मि' इति। ( हर्षातिशयं नाटयन् ) सर्वथावयोर्गृहीतशल्यता संवृत्ता। अथवा सारसिकासत्यकेत्वोः। नहि नहि। कुसुमायुधस्य, उत विरिंचस्य। न खल्वेतदेतेष्वेकैकयत्नसुलभं भवति। किं ब्रवीषि—'धूमज्योतिस्सलिलमरुतां सन्निपातः खलु सलिलवृष्टिं संपादयति' इति। अथ किम्। किं ब्रवीषि—'अथ कुत्र प्रस्थातव्यमस्माभिः' इति। ( ऊर्ध्वमवलोक्यौष्ण्यबाधां रूपयन् ) क्षणमिहैव निवसामोऽमुष्मात् कठोरातपनिवारणनिपुणात् वटविटपिनिकटान्न न मे चरणौ प्रसरतः। इदानीं हि,

---

* "निवेदयितव्यम्" इति साधु।

† "स्वराद्यन्तोपसर्गादिति" वक्तव्यम् इति वार्त्तिकेनावात्मनेपदेन भाव्यम्।

मन्दाक्रान्तो गगनमकुटं कर्शितांगोऽपि विश्वं
भानुश्शाणोल्लिखितनिशितैर्भानुभिः पोप्लु पीति ।
कोशापेतो द्विगुणितविषो जायते नन्वहीन्द्रः
सर्वेषां स्यात् प्रथिमनि सति स्वप्रतापस्य मूर्च्छा ॥८३॥

( दिशो विलोक्य )

जलाशयाः पश्य चतुर्षु दिक्ष्वपि ज्वलन्ति वेदान्तविदां प्रपञ्चवत् ।
मृगा न यद्वञ्चितकास्तृपार्दितास्त्यजन्ति साक्षात् सलिलेऽपि संशयम् ॥८४॥

किं ब्रवीषि—'सम्यगुपलक्षितं वयस्येन । तथाह्यस्य शाखाशिखासु शाखिनः,

लक्ष्यन्ते पक्षिणोऽमी निजनिजदयितापक्षतिद्वन्द्वसञ्जत्-
कीटन्यक्कारचुञ्च्वा विमलतरसरस्तोयमादाय चञ्च्वा ।
आत्तानन्दं पिबन्तः प्रणयपरवशाः प्रेयसीपीतशेषं
किन्नाहो नन्दनीयं सरसिजधनुषस्सर्वसाधारणत्वम् ॥८५॥

( साश्चर्यम् )

दीनः खल्वध्वनीनः प्रसभमुपगतस्सेवते यां सुखार्थी
सा छाया संकुचन्ती तरुवरनिकटं सादरं सेवमाना ।
तस्यास्ताम्रायताक्ष्याःअपि बत कुलिशस्यापि वा सत्यकेतो-
रेषाऽवस्थेति साक्षादिव वदति सखे पश्य मध्याह्नलक्ष्मीः' ॥८६॥

इति । अहो अवसरज्ञता भगवतः पवमानस्य ।
तथाहि,

पुरा भ्रामं भ्रामं मलयशिखरिण्येष पवनः
पुनस्स्पर्शं स्पर्शं वनजवनमात्तान् परिमळान् ।
इदानीं तन्वीनामुपहरति संस्विन्नवपुषां
प्रतिद्रव्यं लिप्सुर्मुखपरिमलाख्यं दृढमिव ॥८७॥

अपि च

प्रत्यंगं प्रमृशन्नयं मृदुतरं प्रेम्णा परेणाऽऽङ्कलो
मा मा याहि सखे दिवाकरकराघातेन दैन्यं महत् ।
एवं सान्त्वयतीव मां शिशिरयन् शीताकरैश्शीकरै-
रापत्कालसुहृत् सुहृत् खलु सखे दुर्हच संपत्सुहृत् ॥८८॥

( नैपथ्ये )

रत्नांगुलीयविलुठत्किरणानुविद्ध-रक्ताङ्गुलीविलसदग्रकराधिवर्ति ।
शुद्धौदनोपभरितं मणिभाजनं वां मध्याह्नभुक्तिविषये*नियुनक्त्यमुष्याः ॥८९॥

विटः ( आकर्ण्य )—अये तत्रभवत्या बालपावत्या इव स्वरः । मन्ये सा खलु नौ विश्रान्तिभाजौ विलोक्य उपचितोपकरणा सविनयं भोजनायापेक्षते । आवाभ्यां तु सदृशानुरागतरुणजनसमागमसंचितोद्यमतया विस्मृता भोजन-कथा । अथाऽस्या मनोरथमावयोरुदरं च पूरयावः । ( निष्क्रान्तः )

( ततः प्रविशति सुप्तोत्थितो विटः )

विटः—( ससंभ्रमं स्वच्छायामुपक्रम्य ) अहो नु खलु द्वादशपदीमतिक्रान्त-स्समयः । मया पुनरियान् कालो लंघितो नावगतः ।

कुतः

मन्दमन्दचलदुल्लसद्वलयमञ्जरीमधुरशिञ्जितैः-
स्पन्दमानमणितालवृन्तभवमन्दमारुतसुखावहे ।
शारिकोदरसहोदरे शयनसंपुटे सुलभनिद्रया
शारिकामधुरभाषिणीमकुटमालयाऽस्मि विवशीकृतः ॥९०॥

इदानीं तु

शोभासारजिहीर्षुणा बलवता म्लानेन पंकेरुहा-
ण्यारुण्येन च वारुणीं दिशमिता ये केचिदंभोधराः ।
चक्राणां हृदयांबुजानि च मनागुत्कण्ठया चुंबिता-
न्येषा किं तु शनैश्शनैः कुमुदिनीहर्षं परं वर्षति ॥९१॥

---

* नियुङ्क्ते इति साधु ।

मया तावत् सुप्तोत्थितेन सविधे संविष्टश्चित्रसेनो न दृष्टः। मन्ये प्रथमप्रबुद्धः स सुखसंविष्टं मामप्रबोध्य सारसिकासन्निधिं प्रति प्रस्थित इति। अहमपि तावत् सत्यकेतोस्समीपं प्रयास्यामि। ( त्रिचतुरं परिक्रम्य ) अये संप्राप्त एवास्मि सत्यकेतुसद्मनस्सविधम्। ( अग्रतो विलोक्य ) सोऽयं प्रियवयस्यः प्रियतमाविरहदहनदह्यमानदेहो दृश्यते। कष्टं भोः!

अजस्रसंप्रस्रवदस्रधारे कालोन्मिषत्केतकबर्हगौरे।
विन्यस्य विस्रत्कटकं कराब्जं कपोलकाण्डे लिखितो यथास्ते ॥६२॥

अपि च

शशभृदिव विभाते भानुना भग्नभानुः
शरदि विगलितापो वारिवाहोऽपि यद्वत्।
गतदिवसविकासस्सूनपुञ्जो यथा वा
तदिदमपगताभं रूपमद्यापि रम्यम् ॥६३॥

( श्रवणमवधाय ) किमपि किमप्ययमात्मना मन्त्रयते। तदहमवहितश्शृणवानि। ( तथाऽवतिष्ठते )

( नैपथ्ये )

तस्यास्तामरसानुकारि वदनं तत्तादृशं वीक्षणं
सा चान्तर्गतमन्दहासमधुरा स्वच्छा कपोलस्थली।
ईषद्दर्शितमुग्धकुन्दमुकुलप्रस्पर्द्धिदन्तप्रभा-
संकीर्णाऽप्यधरद्युतिस्सुकृतिना केनानुबोभूय्यते ॥६४॥

विटः — अस्य हृदयमजस्रमनन्यपरायणम्। भवतु पुनरपि श्रोष्यामि।

( नैपथ्ये )

स्थिरो धीरः क्वाहं जलविमथनः क्वासौ च मदनः
सलीलालोलालोकितमनु पतेत्तन्मय्यनुपमम्।
अयं कालो विद्याभ्यसनविहितो मे विंशवयसः
क्व विद्या तद्वक्त्रे हृदि विलुठमाने* स्मेरसुभगे ॥६५॥

---

* विलोठमाने इति साधु।

आः

का कान्ती रुधिरास्थिमांसवसिकापूरे शरीराह्वये
सा सा निर्जिततप्तकाञ्चनशिखाकान्तिः कदा द्रक्ष्यते ।
हे चेतस्त्यज निन्द्यवस्तुषु रतिं किं नो नियन्ताऽस्ति ते
किं किं निन्द्यमिति स्वभावमधुरास्तत्तादृशा विभ्रमाः ॥९६॥

अहो मम महीयसी मन्दभाग्यता यथा मम भद्रमनसो भद्रसेनस्यापि भग्नप्रतिज्ञता संवृत्ता एवं मन्दभाग्यस्य किमनेनार्थजीवितेन ।

विटः—नायमवसरः कालहरणस्य यदयमतिनिष्ठुरमालपति । ( उपसृत्योच्चैः ) किं किं भद्रसेनस्य भग्नप्रतिप्रतिज्ञतेति ।

यदा सुमेरोश्चलनं पतनं वा विहायसः ।
भविता भद्रसेनस्य तदा भंगः प्रतिश्रुतेः ॥९७॥

तदलमधुना दुर्विषहेण विषादेन ।

जलधेरिव शिशिरकरो जलधरनिकरः शिखावलस्येव ।
जलजाकरस्य रविरिव जनोऽयमुदितः पुरो ननु ते ॥९८॥

( पाणिना पाणिं परिगृह्योत्थाप्य ) उत्तिष्ठोत्तिष्ठ । किमधुना विषयाकुलत्वं न मुञ्चसि । किं न जानीषे परिणतो दिवसः ।

पश्यैष दूरपतितो जलधौ खरांशुः
स्वच्छायवञ्चितमृगेन्द्रसमानधर्मा ।
आर्तामनन्यशरणां स्वकराभिमर्शै-
राश्वासयेत् कुमुदिनीमचिरात् सुधांशुः ॥९९॥

( सहर्षम् ) किं ब्रवीषि—'पततु पतङ्गः पयोराशौ । किमस्माभिः कर्तव्यम्' इति । श्रूयताम् । कर्तव्यानि ते पृथक् पृथङ्निर्दिशामि ।

अस्रस्रावकषायितं प्रथमतः प्रक्षालयेदं मुखं
पश्चादञ्जनपंकसंकलिततां संपादयाक्ष्णोर्युगे ।
बाहू योजय कंकणैर्निवसने धत्स्वाप्यनर्घे उभे
अंगेष्वारचयानुलेपनममन्दामोदिभिर्वस्तुभिः ॥१००॥

किंच

मैरेयं मधु मानसोद्यमकरं पानीयमानन्दत-
स्तांबूलच्छदनं त्रयोदशगुणं संस्वादनीयं पुनः।
अन्यान्यप्युचितानि तानि कलयस्वानङ्गसंदीपना-
न्येतानि त्वयि पौनरुक्त्यमुररीकुर्वन्तु सर्वाण्यपि ॥१०१॥

किं ब्रवीषि—'कथमहममूनि हृदयविदारणैकपरायणानि कर्माण्यनुतिष्ठेयम्' इति। यदुक्तं भवता 'पुराऽपतिष्ट—' पूर्वश्लोकावधिरिति तद्वैपरीत्यमचिरादुपेष्यसि। किं ब्रवीपि 'कथम्' इति। अहो विदितमपि वस्तु तत्कथाशोश्रूयिषया किमविदन्निवाभिनयसे। एह्येहि समयोऽतिक्रामति। पन्थानमवगाह्य सविस्तरं वक्ष्यामि। ( पाणिना पाणिं परिगृह्य परिक्रामन् ) श्रूयतामेतद्येन मन्ये श्रवणौ कृतार्थयसे। ( अस्ति सारसिका नामेत्यादि पूर्वश्लोकद्वादशकपाठपूर्वकम् )

सुमध्यमायास्सुकुमारमस्या मध्यप्रदेशाहितवासभूमि।
तवाधिरोढुं हृदयं तदीयं सोपानमाभाति वलित्रयाख्यम् ॥१०२॥
उभौ दधातामुपमानभावं तदीयनाभीमयपल्वलस्य।
अगाधतायामनुरागसिन्धुर्यस्त्वद्गतोऽस्यास्तव तद्गतश्च ॥१०३॥

( सस्मितम् ) किं लज्जामुपक्रमसे।

सुवर्णवर्णौ मृदुलावतीव हस्तावुभौ कश्चन हस्तिराजः।
नभस्तलस्थो दधते यदि स्यात्तदा तदीयोरुनितंबवैरि ॥१०४॥
क्रमात् कृशे नातिकृशे सुवृत्ते नात्यायते केचन यज्ञयष्टीः।
व्यधत्त तस्याः पदयोर्विधाता मारस्तयोर्मार्दवमप्यदत्त ॥१०५॥
आचार इत्यादृतयावकार्द्रे समञ्जु शिञ्जन्मणिनूपुराढ्ये*।
पदे तदीये सति मञ्जु कूजन्मधुव्रते कोकनदे क्व शोभा ॥१०६॥
वाणी सुधां ह्रेपयतीव तस्या गाने किमाभिः परिवादिनीभिः।
औचित्यहीना भणति क्रिया वा तस्या हिमानीव दिनप्रभायाः ॥१०७॥

---

* तालैः शिञ्जद्वलयसुभगैरिति कविकुलचूडामणेः प्रयोगमनुस्मरतैवमुपनिबद्धं कविना। वस्तुतस्तु शिञ्जदिति रूपं चिन्त्यम्।

किं बहुना,

"प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः" * ।
इत्याद्युपाकर्ण्य वचः कवीनां विवृद्धमन्युर्विदधे विधिस्ताम् ॥१०८॥

अद्य खलु वयस्य,

तस्यां शोभासरस्यां पुलिनतलसमुज्जायमानैकनाल-
†स्फायत्कोशद्वयोद्यद्दरशिरसि निरूढामलांभोरुहिण्याम् ।
सान्द्रानन्दाभिधाने क्वचन जलनिधौ दूरनिर्मग्नपूर्वं
स्वात्मानं स्नापयिष्यन् परिलपसि कथं पानमाल्यानुलेपैः ॥१०९॥

किं ब्रवीषि—सखे, आवेगवेपथुना मे चरणविक्षेपा न स्थिरीभवन्ति । इदमप्यन्धतमसमत्युत्कटं वर्तते । तथाहि

सर्वं च निम्नोन्नतसालशैलशालाशिलामार्गमृगादिजालम् ।
एकाकृतीकारयितुं पटीयान् पश्यैष को नाम महेन्द्रजाली ॥११०॥

सर्वथा गन्तुमनीशोऽस्मि संवृत्तः' इति । दृढमवलंबस्व मेऽग्रहस्तम् । (कतिचित् पदानि गत्वा दिशो विलोक्य) किमपि शिथिलितोऽयमन्धकारबन्धः । (प्राचीं विलोक्य सविस्मयम्) अयमुदितभूयिष्ठ एव भगवानमृतदीधितिः । तथाहि,

देवानां मदिरायितः पशुपतेर्देवस्य चूडायितः
कोकानां क्रकचायितः कुमुदिनीदेव्याश्च जीवायितः ।
ताराणां तरुणायितस्तनुचकोरीणां च भाग्यायितो
दीपः कश्चन मार्गदर्शनविधौ मारेण ते दर्शितः ॥१११॥

भो महाजनाः

---

* कु.स. ३।४६

† "स्फायन्निर्मोकसन्धीन्" इत्यादिप्रयोगदर्शनादनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वमाश्रित्य कथञ्चित् समर्थनीयम् ।

दीनां दीनामहिममहसः पादघातैः कठोरै-
भीतां भीतां तिमिरनिकरैर्निर्दयं ग्रस्यमानाम् ।
दिष्ट्या दृष्ट्वा परिणतदयो दिग्वधूटीं कराग्रै-
रादत्तेऽयं कथयत कथं युज्यतेऽस्मिन् कलंकः ॥११२॥

किं ब्रवीषि—'कियानितः पन्थाः' इति ( सस्मितमङ्गुल्या निर्दिशन् ) सखे पश्य पश्य, तुहिनरश्मिमिश्रणसंजातसविशेषदृश्यश्रीकशशधरोपलघटित-गवाक्षाभिन्नवीक्षणविगलदविरलाश्रुमिश्रितस्त्वद्विरहकातरां तत्रभवतीमनु-शोचन्निव सोयं प्रासादो यत्राऽऽस्ते तत्रभवती । या खलु,

चकोरिका चन्द्रमिव चातकीव वलाहकम् ।
चक्रवाकाङ्गनेवार्कं त्वामेव हृदि वीक्षते ॥११३॥

किं ब्रवीषि—'इयानपि मे योजनायते पन्थाः' इति ।

मनसा प्रेमपूरेण कटाक्षामृतमादिमम् ।
पायं पायं तदेवास्यास्सञ्चरद् द्रुतमेष्यसि ॥११४॥

( परिक्रम्य ) पश्य, संप्राप्तावेवावां सारसिकासदनसन्निधिम् । ( सावधानमालोक्यांगुल्या निर्दिशन् ), भो वयस्य निपुणं निरूप्यताम् । यत्कृते त्वया यादृशी दशेयमनुभूयते सैव तव जीवितसर्वस्वायमाना तादृशी-मेव दशामनुबोभूयमाना नवचन्द्रिकाचित्रसेनाभ्यां कथं कथमपि समा-श्वास्यमाना कुसुमशयनमधिशयानाऽपि दुर्विषहविरहदहनदह्यमानाङ्गी दृश्यते । (सनिश्वासम् ) किं ब्रवीषि—एषैषा,

नयनमषिकामिश्रैर्बाष्पैर्मलीमसिताननना
श्वसितपवनाघातैः कोष्णैर्गतप्रभिताधरा ।
कृशकृशतनूरास्ते कामं तथाऽप्ययथापुरा
नयनसुखदा कान्तिर्या काचन प्रविजृंभते ॥११५॥

( सरोमाञ्चम् )

अरुणसरसिजाभं कोमलं पाणिमेकं
विगलितवलयं चेदेवमेवातिरम्यम् ।
मम वपुषि विधास्यत्युच्चदुद्दामहर्षं
यदि किमपरमस्मात्साधु संसाधनीयम् ॥११६॥

इति । श्रूयन्तां चास्या भवद्विषयाणि परिदेवितानि ।

( नेपथ्ये )

भगवन् कुसुमधन्वन् बद्धाञ्जलिरियमियदभ्यर्थये ।
पुष्पेषून् क्षणसमयं च वर्षयस्व स्वात्मानं यमय निशीथिनं च कामम् ।
किंतु त्वं सकृदपि दर्शयस्व कान्तं नो चेन्मां विजहि किमद्य वैशसेन ॥११७॥
प्रेमार्द्रांश्चतुरगभीरमुग्धमन्दानानन्दं सततममन्दमादधानान् ।
प्रत्येकं मयि पतितांश्च तान् कटाक्षान् पश्येयं सकृदपि विश्वसुन्दरस्य ॥११८॥

विटः—अहह सखे, आत्मानमेवोद्दिश्यानन्यशरणमालपन्तीमेनां कथमुपेक्षसे । किं ब्रवीषि—

'प्रणयेन करुणया वा त्वरया कृपया कयाऽपि वा त्वरया ।
विभ्रान्तचित्तवृत्तिः कर्तव्यं किमिति नो जाने' ॥११९॥

एह्येहि अहं जानाम्येव । ( हस्तं गृहीत्वाऽन्तःपुरं प्रवेश्य ) पश्य सखि यन्निमित्तं रेखामात्राण्यलघुपरितापानि च वहसि सखा समागतस्सोऽयम् । चित्रसेनोत्तिष्ठोत्तिष्ठ । किं न स्मरसि सुमहान् कोऽपि कार्यभारो वर्तते ( चित्रसेनस्य पाणिं गृहीत्वा प्रस्थितः ) कार्यभारान् त्वर्यते । किमस्त्यनन्तरं युवयोः प्रियमाचरणीयम् । सर्वमप्यत्र सुकरमवधार्यताम् किमवचनेन वामवधीरयथ । नवचन्द्रिके, किं ब्रवीषि—'इमौ वक्तुं न शक्नुतः' इति । अहमेव तावद् ब्रवीमि ।

निवारितस्स कुलिशः शल्योऽप्यपहृतोऽनयोः ।
पुनरुक्तं भवेदद्य पुनर्यत् प्रार्थ्यते मया ॥१२०॥

तथाऽप्येतावदस्तु ।

(भरतवाक्यम् )

भूचक्रवालमहिता महतां कवीनां भग्नार्गलास्सुललिताः प्रसरन्तु वाचः ।
भूतिं परामुपगता भुवनैकवीरा भूपाश्च तेषु सुरलोकतरुर्भवन्तु ॥१२१॥

इति निष्क्रान्तः

निर्लज्जतायाः कस्याश्चिन्निर्बन्धाद् रचितं मया ।
इदं हासैकसक्तानां विदुषामस्तु तुष्टये ॥१२२॥

अथवा

श्रेयो हि मे तदिदमद्य महाजनानां हासास्पदं भवति चेदिदमेव भूयः ।
पूज्यो जडैरिति [हि] यत्तदपेक्षयाऽपि हास्यो महद्भिरिति यद्वरमेतदेव ॥१२३॥

शुभमस्तु ।

समाप्तोऽयं भाणः ।

# श्लोकसूची

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषन् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| July, 1934. | १८५६ शकीये आषाढे<br>१७श-वर्षस्य ३य संख्या | Vol. XVII No. 3 |

## सरलचित्सुखीसारम्

स्वप्रकाशविचारः

[ निबन्धकः—स्वर्गत-रमेशचन्द्रसांख्यवेदान्ततीर्थः ]

### राजसभा

[ विदूषकः—अन्ये पारिषदाः पण्डिताश्च यथार्हासनमुपविष्टाः ]

विदूषकः ॥—ही हा भो अद्यास्मिन् महाराजस्य महति अभिषेकमहसि भूरिभोजनेन उदरपूरं पूर्णाः सर्वे पौरजानपदा दिग्विदिगागता च महती जनता। अयमपि ब्राह्मणो मोदकखण्डादिभिः प्रचुरोपचारैः पर्याप्तमाचामितः, रसना च मे सुरसरसपूरैररसना जाता। आसीन्मे मनसि महती आशा यत् रसभरितैः सङ्गीतकैरपि एवं कर्णौ मे संतृप्तौ भविष्यत इति, किन्तु नु भो मदहष्टदोषाद् दग्धमुखैः सङ्गीताचार्यैः किमप्यन्यत् प्रकल्पितम्, मन्ये तेऽद्य अतिभोजनजनिताजीर्णशमनाय गृहं गत्वा निद्राप्रमोदमनुभवन्ति। ममाधन्यतया एते च रम्भाभक्षणदक्षाः शुष्ककलहशूरा जरन्मीमांसकाः समवेताः, न जाने

किमनिष्टमापादयन्ति, एतेषामतिरासभभैरवरवैश्चित्कारैर्विदीर्णकर्णस्य गुरुभोजनजारको दिवास्वापोऽपि दुर्लभो भविष्यति, तदत्र का नु मे गतिः ? ( विचिन्त्य ) भवतु एवम्, एतैस्तूलैः कर्णौ पिधाय यावन्न वयस्य आगच्छति तावदिहैव शयित्वा निद्रादेवीमुपासे । ( साङ्गभङ्गं शयित्वा उदरं मार्जयन् )

अजीर्णदारिके देवि गुरुभोजनसाधिके ।
एहि निद्रे नमस्तुभ्यमुदरम्भरिसेविते ॥

( नेपथ्ये वैतालिकौ गायतः )

आत्मा स्वयंज्योतिरनन्तशास्त्रै-
र्यो लक्ष्य एवास्ति गुहानिगूढः ।
तमेव विज्ञाय विमुक्तदुःखो
जयत्ययं ब्रह्मविदीश्वरो नः ॥

'न खिद्यते नो विषयैः प्रमोद्यते
न सज्जते नापि विरज्यतेऽसौ ।
स्वस्मिन् सदा क्रीडति नन्दति स्वयं
निरन्तरानन्दरसेन तृप्तः ॥'

विदूषकः ॥—( श्रुत्वा सहसा सत्रासमुत्थाय ) अये स्वपुण्यैर्लब्धाऽपि अपगदातुलराजभोगं दैवाद् वैराग्यवातेन विकलचेता विषयनिर्विण्णोऽयं महाराजो धूर्त्तबकैर्वैतालिकैः स्तूयमानो हविषेद्धपावक इव इत एवाभिवर्त्तते । भवतु तूष्णीम्भूत्वा पश्यामि तावदस्य मत्तस्य चेष्टितम् ।

( ततः प्रविशति सानुगो राजा राजगुरुश्च )

राजा ॥—( राजगुरुं प्रति )

देव, महाननर्थ एव प्रतिभाति समुपभोज्यमानोऽसौ संसारगोचरः सुखकणिकाचयः परिणामतापसंस्कारदुःखमयो रजोगुणपरिणामः ।

क्षाराब्धिमग्नस्य यथैव जन्तो-
रूर्ध्वं प्रसृतः खलु तैलबिन्दुः ।

भोगाय नालं भवतीह तद्वत्
संसारमोहैः कलितस्य शातम् ॥

'कथं तरेयं भवसिन्धुमेतं
का वा गतिर्मे कतमोऽस्त्युपायः ।
जाने न किञ्चित् कृपयाऽव मां प्रभो
संसारदुःखक्षतिमातनुष्व ॥'

गुरुः ॥—वत्स, कथमेवं कातरोऽसि ?
'मा भैष्ट विद्वंस्तव नास्त्यपायः !
संसारसिन्धोस्तरणेऽस्त्युपायः ।
येनैव याता यतयोऽस्य पारं'
स एव मार्गस्तव सुप्रशस्तः ॥

'अस्त्युपायो महान् कश्चित् संसारभयनाशनः ।
तेन तीर्त्वा भवाम्भोधिं परमानन्दमाप्स्यसि ॥
वेदान्तार्थ-विचारेण जायते ज्ञानमुत्तमम् ।
तेनाऽऽत्यन्तिकसंसारदुःखनाशो भवत्यलम् ॥'

अतः—'संन्यस्य सर्वकर्माणि सर्वेशे परमात्मनि ।
क्रियतां पण्डितैर्धीरैरात्माभ्यास उपस्थितैः ॥'

विदूषकः ॥—[ उपसृत्य ] जयति जयति महाराजः । भो वयस्य, कथमेवं महदिदमकण्टकं राजसुखं दुःखं दुःखमिति कृत्वा विगतकच्छानां धूर्त्तभिक्षूणाम् मतमनुहरन् भृशमतिखिद्यसे । किं न श्रुतं त्वया सकलविबुधवरिवसितस्य सुरगुरोर्बृहस्पतेर्वचनजातम् ? उक्तं हि तेन,—

त्याज्यं सुखं विषयसङ्गमजन्म पुंसां
दुःखोपसृष्टमिति मूर्ख-विचारणैषा ।
व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहितान् हितार्थी ॥

श्रूयन्तां तेनैव प्रणीतानि सूत्राणि,—चैतन्यविशिष्टः कायः पुरुषः, काम

एव एकः पुरुषार्थः, मरणमेव मोक्षः। यच्च नरकमिति श्रूयते तदपि इहैव दृश्यते। तदुक्तम्

भोजनं मांसरहितं शयनं सुन्दरीं विना।
पादचारेण गमनं नरकं किमतः परम्॥

राजा॥ वयस्य, कथमेवं प्रलपसि? देवगुरुणा किल दैत्यानां मोहनार्थम् आत्मजिज्ञासौपयिकदेहात्मतत्वविज्ञानाय च एवमतिमूढानामुपदिष्टम्, तदपि किं ते ब्राह्मणस्य विदुष आस्थेयम्। श्रूयताम् आत्मनो हितम्—

'लब्ध्वा कथञ्चिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम्।
यः स्वात्ममुक्त्यै न यतेत मूढधीः स आत्महा स्वं विनिहन्त्यसद्ग्रहात्॥'

[ विदूषकस्य हस्तं हस्तेन गृहीत्वा ]

तदेहि वयस्य, अद्यास्मद्भाग्योपचयाद् इहैव बहवो द्वैताद्वैततत्त्वनिपुणाः साक्षात्कृतात्मतत्त्वा विपश्चितः समागताः, तेभ्यः समुचितमुपदेशं लब्ध्वा कृतार्था भवेम। उक्तं हि—

दुर्लभं त्रयमेवैतद् दैवानुग्रहहेतुकम्।
मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः॥

तदद्य यदि परमेश्वरानुग्रहात् अत्र महापुरुषा विद्वांसः समागताः तत् पुनीमहे आत्मानं तेषां दर्शनेन। [ अग्रत उपसृत्य ] भो भोः पण्डितवर्याः! कृतार्था वयमद्य भवतां साक्षात्कारेण, भवतु ममेयं प्रणतिततिर्विद्वच्चरणसरोजेभ्यः। पण्डिताः, [ हस्तमुद्यम्य ]

'यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्त्तेति नैयायिकाः।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः॥'

( नेपथ्ये छात्राणां विवादकलकलः )

विदूषकः॥—अयमारम्भः शुभाय भवतु, एते किल कलहपरायणा वराका बालकाः समागच्छन्ति। एते हि शैशवादेव कलहे कदलीतण्डुलभोजने च

अभ्यासं प्रमोदं च लभन्ते। एतैः किल स्वयं क्रोधनैः अन्यान् अक्रोधं शिक्षयद्भिः स्वयम् अनुपार्जितवित्तैः शाठ्येन परोपार्जितवित्तैर्जीविकां वर्त्तयद्भिः परपुष्टैः द्विजैः न केवलम् अपरे प्रतार्यन्ते अपि तु स्वयमपि संसारसारभोगापहान्या प्रवञ्च्यन्तेतराम्।

प्रथमश्छात्रः ॥ (प्रविश्य) अहो धार्ष्ट्यं, स्वप्रकाशात्माद्वैतवादिनामेतेषां बालिशानाम्, अस्मासु आन्वीक्षिकीविद्यामधीयानेषु जीवत्सु कथमेषां वाचां विस्तरः प्रसारमासादयेत्? अहो आश्चर्यम् एते खलु मया श्येनपातभयात् कपोता इव मूकपदवीं नीता अश्वाण्डस्येव स्वप्रकाशस्य आम्रेडने मनाग् न लज्जन्ते अपि!

अपरे अन्तेवासिनः ॥—भ्रातः, विद्वद्भूयिष्ठायामस्यां परिषदि कथमेवं प्रगल्भसे? जनकस्येव सकलशास्त्रविदुषोऽस्य राजर्षेः पुरतोऽस्यार्थस्य अद्यैव विनिर्णयो भविष्यति।

कश्चिद् वेदान्ती ॥—(प्रथमं लक्ष्यीकृत्य) वत्स, किमेवं प्रभाषसे अश्वाण्डमिति।

प्रथमश्छात्रः।—आर्य, पथि केनचिद् वेदान्तिना पठ्यमानं "प्रमाणनख-निर्भिन्नमहामोहामरारये। नमस्कुर्मो नृसिंहाय स्वप्रकाशचिदात्मने॥" इति श्लोकं श्रुत्वा विप्रतिष्ठमानस्य मे पुरत एते वराकाः तदर्थनिर्वचने नितरामसमर्था जाताः, अत उच्यते मया यथा अश्वडिम्बमिति शब्दो अज्ञजनमुखेषु चरति न त्वस्य अभिधेयभूतः कश्चिदर्थोऽस्ति, एवं वेदान्तिनां स्वप्रकाशशब्दोऽपि, तदर्थस्य लक्षणप्रमाणाभावेन प्रमातुमशक्यतया नास्तित्वमेवाङ्गीकर्तुं युक्तम्, नहि लक्षणप्रमाणयोरभावेऽर्थसिद्धिर्भवितुमर्हति, तथात्वे गगनकमलिनीस्रजा मौलिप्रसाधनम्, कूर्मरोमकर्पटपरिधानम्, शशशृङ्गधनुर्धारणञ्च प्रसज्येत।

वेदान्ती ॥ कल्याणिन्, कथं लक्षणप्रमाणाभावः स्वप्रकाशपदार्थस्य। यद्यपि स्वप्रकाशपदार्थस्य स्वरूपप्रकाशाय लक्षणप्रमाणापेक्षा न भवति एव, तथाऽपि प्रतिवादिनां तत्र असम्भावनादिदोषावरणवारणाय भवत्येव लक्षण-प्रमाणयोरप्रतिहतः प्रसरः।

राजा ॥—(स्वगतम्)

केचिद् द्वैतं वदन्ति प्रमितिसुनिपुणास्तत्त्वमित्युच्चवाचः
स्वाद्वैतं लक्षयन्ति श्रुतिमुखवचनैः केचिदन्ये त्ववाचः।

**अपरोक्षव्यवहृतेर्योग्यस्याधीपदस्य नः ।**
**सम्भवे स्वप्रकाशस्य लक्षणासम्भवः कुतः ॥***

एतदर्थश्च,—

**अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वमेव स्वप्रकाशलक्षणम् इति ।**

तार्किकः ॥—भो अद्वैतवादिन् ! एवं निर्वचनमभिदधतो निर्वचनभाव एव भवतः सार्धीयान् प्रतिभाति नः । भवद्भिः किल आत्मनः अशेषविशेषरहिततया निर्धर्मकत्वमङ्गीक्रियते, तथा प्रतिज्ञाय इदानीं पुनर्लक्षणलोभात् **अपरोक्षव्यवहारयोग्यतालक्षणधर्माङ्गीकारे अद्वैतवादिनां** युष्माकम् **अपसिद्धान्त** आयात्येव । व्यवहारदशायां कथमपि अक्षपस्य भवतः तादृशधर्माङ्गीकारेऽपि **मोक्षदशायां तदसम्भवात् अव्याप्तिश्च लक्षणस्य ।**

वेदान्ती ॥—ननु तादृशं योग्यत्वं ज्ञानात्मनः **स्वरूपमेव**, न त्वतिरिक्तम् , येनापसिद्धान्तापातः अव्याप्तिर्वा भवेत्, यतः बन्धमोक्षादिसकलावस्थायामात्मनःस्वरूपमक्षतमस्त्येव ।

तार्किकः ॥—स्वरूपस्य स्वेतराव्यवच्छेदकत्वात् न लक्षणत्वम्, अपि च तादृशव्यवहारयोग्यत्वस्य आत्मस्वरूपत्वम् , व्यवहारयोग्यत्वस्य **व्यवहारनिरूपणीयत्वात् ज्ञानस्वभावस्यापि आत्मनः सप्रतियोगित्वप्रसङ्गः ।** तथाच अन्यनिरूपणाधीननिरूपणत्वेन आत्मनः स्वेतरनिरपेक्षनिरूपणत्वं हीयते, ततश्च पुनरपि अपसिद्धान्तापातः ।

वेदान्ती ॥—भोः तार्किक, निर्वचनविद्याचतुरोऽपि अभिप्रायमबुद्ध्वा कथमेवं भाषसे ? यथा भवतां गुरवो गुणाश्रयत्वं द्रव्यत्वमिति द्रव्यलक्षणस्य, उत्पत्तिकाले घटादौ गुणाभावेन अव्याप्तिमाशङ्क्य गुणवत्त्वात्यन्ताभावानधिकरणत्वं द्रव्यलक्षणार्थमभिहितवन्तः, तथैव द्रव्यत्ववत् अस्माकमपि अपरोक्षव्यवहार-

* नः अस्माकं पक्षे अपरोक्षव्यवहृतेः प्रत्यक्षव्यवहारस्य योग्यस्य ( व्यधिकरणे षष्ठी ) तथा अधीपदस्य संविदविषयस्य स्वप्रकाशस्य सम्भवे सति, स्वप्रकाशस्येतिपदम् उपर्यपि सम्बध्यते द्वारमध्यस्थमणिवत् । अतस्तस्य स्वप्रकाशस्य लक्षणासम्भवः कुतः ? न कुतोऽपीति योजना ।

योग्यत्वात्यन्ताभावानधिकरणत्वं अपरोक्षव्यवहारयोग्यत्वशब्दार्थौ भविष्यति, तथा सति कदाचित् तादृशव्यवहारयोग्यत्वाधिकरणे तदत्यन्ताभावस्य अभावात् न मोक्षादौ अस्य लक्षणस्य अव्याप्तिः। नापि अपसिद्धान्तः, काल्पनिक-धर्माणां संसारदशायामभ्युपगमात्। अत एव भवतामत्र असहिष्णुतामभि-लक्ष्य सम्यगुक्तं सुरेश्वराचार्यवर्यैः,—

"अक्षमा भवतः केयं साधकत्वप्रकल्पने।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम्॥" इति।

पञ्चपादिकाचार्याणां स्वप्रकाशात्मचरणानाम्,—

"आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्माः।
अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते॥" इति

वचनाच्च आत्मनो व्यवहारदशायां सधर्मकत्वं सिद्धम्। एतेषां धर्माणा-मतद्व्यावृत्तिरूपतया आरोपितवस्तूनामभावस्य रजताभावस्य शुक्तिस्वरूपतावत् स्वाधिकरणरूपत्वेन च स्वप्रकाशात्मस्वरूपता सिद्धा। मोक्षदशायां च विवक्षित-धर्माभावेऽपि कदाचित् सत्त्वेन तदत्यन्ताभावानधिकरणत्वस्य गुणाश्रयो द्रव्यमितिवत् सिद्धं लक्षणम्।

अपरोक्षव्यवहारयोग्यघटादौ अतिव्याप्तिपरिहारार्थमवेद्यत्वे सतीति विशेषणम्। नहि ते अवेद्या ज्ञानप्रकाश्यत्वात् तेषाम्। नातोऽतिव्याप्तिः। न च एतावदस्तु लक्षणम्, किम् अपरोक्षव्यवहारयोग्यमिति विशेषणेन इति वाच्यम्, तथा सति अतीतानागतयोर्विषययोः नित्यानुमेयेषु च धर्मा-दिषु अवेद्यत्वसत्त्वात् तत्रातिव्याप्तिः स्यादिति अपरोक्षव्यवहारयोग्यत्वमितिपदो-पादानम्, न हि तेषु अपरोक्षव्यवहारयोग्यत्वं वर्त्तते अतो न तेषु अतिव्याप्तिः।

तार्किकः॥—ननु तेषां धर्मादीनाम् अपि आगमवेद्यत्वम् अभिजानता भवता कथं तत्र अतिव्याप्तिमाशंक्य अपरोक्षव्यवहारयोग्यत्वपदस्य सार्थक्य-मभिधीयते? तेषामपि वेद्यत्वेन न कथमपि तत्र अवेद्यत्वं सम्भवति, अतोऽवेद्यत्व-विशेषणेनैवातिव्याप्तिपरिहाराद् विफलम् अपरोक्षव्यवहारयोग्यत्वमिति विशेषणम्।

वेदान्ती ॥—**नैवम्**। इन्द्रियद्वारेण निर्गतान्तःकरणस्य योग्यविषयसंयोगेन विषयावच्छिन्नचैतन्यस्य याऽभिव्यक्तिः सैव प्रमाणफलमित्युच्यते, तादृशफल-व्याप्यत्वमेव वेद्यत्वमित्यभिधीयते। धर्मादीनामिन्द्रियागोचरत्वात् न तत्र शब्दप्रमाणेन किञ्चित् फलं जन्यते अतः **फलव्याप्यत्वलक्षणवेद्यत्वस्य तत्राभावात्**। एवं सति भवतामशक्यपरिहारा अवेद्यत्वविशेषणेन धर्मादिषु अतिव्याप्तिः। यतः **तत्र विशिष्टशब्दप्रमाणबलात् तदाकारधीवृत्तिसमुल्लासादेव** तद्विषयकाविद्यावरणनाशाद् व्यवहारः, न तत्र फलव्याप्यत्वमिति **वेदवादिनां प्रक्रिया**। एवमतीतानागतादिष्वपि वेदितव्यम्। **न च योगिनां** तत्र इन्द्रिय-सन्निकर्षात् **प्रत्यक्षगम्यतया अपरोक्षत्वम्**, अत एव फलव्याप्यत्वम् अस्त्येव **धर्मादीनाम्** इति वक्तुं शक्यम्, शास्त्रतत्त्वं विदुषा भवता, **चोदनैकप्रमाण-वेद्यत्वात् तेषाम्**, अवदातमेतत् 'चोदनालक्षणोऽर्थः धर्मः' इत्यत्र जैमिनीये।

तार्किकः ॥—अहो मौग्ध्यम् स्वपक्षाग्रहग्रहिलता च भवतः, योगिनो हि सर्वज्ञाः, तेषां योगजधर्मजन्यालौकिकसन्निकर्षबलाद् धर्मादौ अपि इन्द्रिय-संयोगात् जायते प्रत्यक्षवेद्यता, ततश्च तत्र फलव्याप्यत्वमस्त्येव। अन्यथा, **एतावता** भवदुक्तप्रकारेण हि **सर्वदर्शित्वाभावो योगिनां** प्रसजति। अतः सुस्थिरं तावद् भवल्लक्षणस्य अपरोक्षव्यवहारयोग्यत्वमिति दलस्य वैफल्यम्।

वेदान्ती ॥—न एवम्, **सर्वदर्शित्वशब्देन** तेषाम् इन्द्रिययोग्य**सर्वद्रष्टृत्वस्य विवक्षितत्वात्**। एतदेवोक्तं श्रीमद्भिः श्लोकवार्त्तिककृद्भिः कुमारावतारकुमारिल-भट्टपादैः—

> **यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।**
> **दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता॥**

योगजधर्मेण इन्द्रियादीनां शक्त्यतिशयमेव लब्ध्वा दूरसूक्ष्मादिग्रहणसामर्थ्यम् आप्नुवन्ति योगिनः, न तु तेन अयोग्यवस्तुदर्शनसामर्थ्यं लभन्ते, अन्यथा तेषां श्रोत्रादीनामपि रसादिग्रहणसामर्थ्यं स्यात्। **अतो धर्मादिव्यवच्छेदार्थम् अपरोक्षव्यवहारयोग्यत्वे सतीति विशेषणं** संगच्छतेतराम्।

तार्किकः ॥—**ननु** तथाऽपि **अज्ञाने अन्तःकरणे तद्धर्मेच्छासुखदुःखादिषु**

शुक्तिरजतादिषु च लक्षणातिव्याप्तिस्तदवस्था, भवतां मते तेषामपि विषयचैतन्याभिव्यक्तिरूपफलव्याप्यत्वाभावेन अवेद्यत्वात् तथा अहमज्ञ इत्याद्यपरोक्षव्यवहारयोग्यत्वाच्च ।

वेदान्ती ॥—अस्मदभिप्रायमसंविदानेन नैतद्युक्तमभिहितं भवता, सत्यम् अस्ति तेषाम् अज्ञानादीनाम् अवेद्यत्वम्, किन्तु तेषां न अपरोक्षव्यवहारयोग्यता, साक्षिचैतन्ये तेषाम् अध्यस्ततया एव सिद्धेः। तस्य साक्षिचैतन्यस्य च साक्षादपरोक्षरूपतया तत्रारोपितानामपि अज्ञानादीनां तेनैव अपरोक्षत्वं व्यवह्रियते, न तु तेषामपि साक्षाद-परोक्षता अभ्युपगम्यते, अतस्तेषु अपरोक्षव्यवहारयोग्यताया अभावेन न लक्षणस्य अतिव्याप्तिदोषः ॥

तार्किकः ॥—ननु तथाऽपि "रजतमिदं पश्यामि" "अज्ञं मां जानामि" इत्यादि रूपमपरोक्षमिति व्यवहारदर्शनात् तद्योग्यता तत्र अवश्यकल्पनीया, यत्र यद्व्यवहारोऽस्ति तत्र तद्व्यवहारयोग्यत्वनियमस्यापरिहार्यत्वात् । तस्मात् शुक्तिरजतादिषु पुनरतिव्याप्तिर्लक्षणस्य ।

वेदान्ती ॥—भो विद्वन्, नैतद् युक्तम्, नहि यत्र व्यवहारोऽस्ति तत्र तद्व्यवहारयोग्यत्वनियमो विद्यते, रजतादिव्यवहारायोग्येऽपि शुक्तिशकलादौ रजतादिव्यवहारदर्शनाद् उक्तनियमस्य भङ्गेन अज्ञानादौ इदमपरोक्षमित्यादिव्यवहारे सत्यपि वस्तुतः तादृशयोग्यताभावः अङ्गीकार्यः, ततश्च अपरोक्षव्यवहारयोग्यताभावात् न तत्रातिव्याप्तिर्लक्षणस्य ।

तार्किकः ॥—ननु यदि चैतन्ये अध्यस्तानां शुक्तिरजतादीनामपरोक्षव्यवहारयोग्यता नाङ्गीक्रियते, एवं सति अवेद्यत्वविशेषणस्य न व्यवच्छेद्यमस्ति, घटादीनां वेद्यत्वेन तद्व्यवच्छेदाय हि अवेद्यत्वमिति विशेषणमुपात्तमित्युक्तं प्राग् भवता, इदानीम् अध्यस्तानाम् अधिष्ठानचैतन्यस्यैव अपरोक्षतया न आरोपितरजतादीनां पृथक् अपरोक्षता अङ्गीक्रियते एवमुच्यते, एवं सति त्वन्मते घटादेरपि अध्यस्ततया अपरोक्षव्यवहारयोग्यताऽभावात् अपरोक्षव्यवहारयोग्यत्वमितिदलस्य तत्र अप्रवेशात् अतिव्याप्तेरभावेन किं व्यवच्छिद्यते अवेद्यत्वे सतीति विशेषणेन ।

वेदान्ती ॥—**नैवं शक्यते वक्तुम्, व्यवहारदशायां तेषां प्रत्यक्षप्रमाण-विषयाणां घटादीनाम् अपरोक्षव्यवहारयोग्यत्वाङ्गीकारात्।** व्यवहारो हि चतुर्विधः, तथा चोक्तम्,—

"अभिज्ञा चाभिवदनमुपादानं तथैव च।
तथा चार्थक्रिया चेति व्यवहारश्चतुर्विधः॥"

इति। अतो घटादीनां जलाहरणाद्यर्थक्रियोपलम्भात् अपरोक्षव्यवहारयोग्यता अङ्गीक्रियते, अज्ञानादीनां च तथाऽर्थक्रियाया अभावात् अज्ञानसत्ताभावेन च न अपरोक्षव्यवहारयोग्यता अभ्युपगमार्हा।

तार्किकः ॥—**तथाऽपि अवेद्यत्वे सति अपरोक्षत्वमेव लक्षणमस्तु** किं व्यवहारयोग्यतापदोपादानेन? अपरोक्षत्वशब्देन अविद्यादीनाम्, अवेद्यत्वे सतीत्यनेन च घटादीनां व्यावृत्तेः **व्यभिचाराभावात्।**

वेदान्ती ॥—**सत्यम्** एतत्, तथाऽपि लक्षणस्य व्याघातदोषाशंकावारणाय कर्त्तव्यमेव योग्यतापर्यन्तानुसरणम्, तथाहि, घटादीनां प्रत्यक्षविषय-तयैव प्रत्यक्षताव्यवहारः न तु प्रत्यक्षज्ञानरूपतया, एवं ज्ञानात्मनोऽपि प्रत्यक्ष-विषयतयैव प्रत्यक्षत्वमिति शङ्का स्यात्, तथा च अवेद्यत्वेन प्रत्यक्षाविषयस्य प्रत्यक्षविषयत्वमित्येव लक्षणार्थे कल्पिते मम माता वन्ध्या इतिवत् वदतो व्याघातः स्यात्, अतः **अपरोक्षज्ञानविषयत्वेनैव घटादेः अपरोक्षत्वाङ्गी-कारात्, अत्रापि तथात्वाद् व्याघात इति विभ्रमो मा भूदिति तद्व्यवहारेणैव प्रतिवादिनामपि संप्रतिपन्नेन तदेव स्फुटीक्रियते इति।**

तार्किकः ॥—एवं व्यवहारयोग्यतापादानेऽपि तथैव व्याघातदोष आपतति, व्यवहारो हि ज्ञानमपि भवति, तथा सति प्रत्यक्षव्यवहारयोग्यत्वशब्देन प्रत्यक्षज्ञानविषयत्वं लभ्यते, अवेद्यत्वे सति इत्यनेन प्रत्यक्षज्ञानविषयताभावः अभिधीयते, ततश्च प्रत्यक्षज्ञानाविषयत्वे सति प्रत्यक्षज्ञानविषयतायोग्यत्वमित्यर्थे नास्ति व्याहतिपिशाचिकादशनदंशनदुःखादितस्ततो दंद्रम्यमाणस्यापि ते मोक्षः।

वेदान्ती ॥—मैवं वादीः, शब्दविज्ञानकुशलो हि भवान् जानात्येव योग्यता-ऽपि शब्दज्ञाने कारणमिति, अवेद्यत्वे सतीति विशेषणादेव न अपरोक्षव्यवहार-

योग्यशब्दस्य प्रत्यक्षज्ञानविषयतायोग्यत्वरूपार्थः प्रतीतियोग्यतामारोढुमर्हति, अत एव व्यवहारयोग्यताशब्देन शब्दप्रयोगरूपव्यवहार एव स्वीकर्त्तव्य **इति न कश्चिद् दोषः ।**

तार्किकः ॥—**कथं तर्हि अवेद्यस्य व्यवहारयोग्यत्वम् ?** नहि कदाचित् कस्यापि अज्ञाते कोऽपि व्यवहारः सम्भवति, अतः व्यवहारसिद्धये ज्ञानविषयता अवश्यमङ्गीकार्या, तथात्वे पूर्वोक्तव्याघातदोष एव प्रसरति ।

वेदान्ती ॥—केनाभिप्रायेण भवतैतद् वाक्यं प्रयुक्तमिति स्फुटमभिधेयम्, **किमिदमवेद्यत्वे सति व्यवहारविषयत्वं न स्यात् इत्यनिष्टप्रसञ्जनम् ? उत व्यवहारविषयत्वाद् वेद्यत्वानुमानम् ?**

तार्किकः ॥—शृणु, पर्वतो यदि निर्वह्निः स्यात् तदा निर्धूमः स्यात् इत्यादौ यथा आपादकेन वह्न्यभावेन धूमाभाव आपाद्यते एवं ज्ञानं यदि अवेद्यं स्यात् तदा व्यवहारविषयो न स्यादिति आपाद्यते, अतो व्यवहारविषयत्वस्वीकारे वेद्यत्वमेव युक्तं ज्ञानस्य ।

वेदान्ती ॥—नैवं वक्तुं शक्यते भवता वेद्यत्वस्य व्यवहारविषयत्वस्य च केवलान्वयितया तदभावरूपयोः **आपाद्यापादकयोरुभयोरपि ( परेषां )** भवताम् **अप्रसिद्धेः ।** आपाद्यापादकयोर्व्याप्तिः क्वचित् प्रमितेति अवश्यमेवाभ्युपेया, यथा निर्वह्नित्वनिर्धूमत्वयोः जलह्रदादौ, तद्वदत्र आपाद्यापादकयोर्नास्ति कुत्रापि प्रमितत्वं भवतः, नहि भवता कस्यचिद्वस्तुनः अवेद्यत्वं व्यवहाराविषयत्वं वा अङ्गीक्रियते, यत्र व्याप्तिग्रहः स्यात् अतस्तादृशव्याप्तिग्रहासम्भवात् नैवमापादयितुं शक्यते श्रीमता ।

तार्किकः ॥—मा भवतु एवमापादनम्, मया तु व्यवहारविषयत्वेन वेद्यत्वमनुमीयते ।

वेदान्ती ॥—नैवं वक्तव्यम्, लक्षणविचारे अनुमानविचारस्य अप्रतिज्ञातत्वेन तद्विचारे भवत एव निगृहीतत्वापातात् । प्रमाणविचारे प्रतिज्ञाते **तस्य सप्रतिसाधननिरासममये निराकरिष्यमाणत्वात् । तस्मादनाविलं स्वप्रकाशलक्षणम् ॥**

(इति सरल-चित्सुखीसाररूपकप्रतिरूपके काव्ये स्वप्रकाशलक्षणोपपत्तिः )

# रवीन्द्रनाथः

[निबन्धक—को० श्रीनिवास-कृष्णः]

आधुनिकेषु भारतीयकविषु रवीन्द्रनाथ एव सार्वभौमः। तस्य गद्य-पद्य-कीर्तनादय उपनिषद इव सूक्ष्मार्थवादिनः, भगवद्गीतेव भक्तिपूर्वक-ज्ञानानुष्ठानोपदेशकाः, आंग्लसाहित्यमिव स्वातन्त्र्यरसापूरिता विलसन्ति। तेषां श्रोत्रमनोहरं संगीतं हृदयानन्दकरं नवरससाकल्यम्, सकलेन्द्रियाह्लादकरं विविधविचित्रपात्रवर्णनं रसिकजनमनांस्याह्लादयन्ति। ताश्च सूक्तयो भारतीयानां नवीनोत्साहम्, सनातनं पारमार्थिकं धर्मम्, अहिंसारतिम्, शाश्वतम् उत्तुंग-मनोरथम्, अमृतत्वनिदानभूतत्यागशीलताञ्च विशेषतो उपश्लोकयन्ति। ताश्च सूक्तयः प्राचीनविद्यासुनिबद्धमूला आधुनिकजगदनुरूप भारतवर्षस्य महिमान मुद्घोषयन्ति। तैवश्वरूप्यविभवैः निखिलजनमानसोल्लासकुशलैः रवीन्द्र-नाथो भूमण्डले सर्वत्र मान्यते।

पुण्यवतां वंशे जातः, नृत्तगीतकलासु, पुराणेतिहासत्रय्यादिषु च बाल्यात्प्रभृति सुस्निग्धः, निजपित्रा महर्षिणा कृतोपदेशः स्वकल्पनाकौशलेन, अप्राकृतप्रेमप्रकर्षेण च प्रत्यक्षीकृतनिखिलजनमनोवृत्तिः, उत्तुंगकवितारसामो-दितान्तरंगः, गंगातरंगानिलसेवितेषु रमणीयोद्यानालङ्कृतेषु जनपदेषु कृताधिवासः, कविकुलनाथो रवीन्द्रनाथः भारतदेशसुचरितपरिपाक एव। नाम्नैव यो विकसितरसिकजनहृदयो, दिगन्तरालप्रसारितकीर्तिमयूखः प्रति-दिवसनवनवीभूतयशःप्रसरः सर्वत्राप्रतिहतगती रविमनुकुर्वन् यथार्थनामा भवति। विशाले च भूमण्डले स एवाज्ञानतिमिरनिरसनचतुरेषु रविरिवाद्वितीयो दृश्यते। स भारतदेशीयोऽपि सकलभुवनैकभूषामणिः, विविधविचित्रभाषा-चारदर्शनानुगतं लोकं स्वकान्त्या ज्ञानानुरागमहिम्ना चाऽऽकर्षति।

तस्य प्रजा अप्राकृता, अनितरसाधारणा; सा हि वस्तुतो दैवी। नृत्तगीत-कलादिषु न काऽपि रीतिस्तेन कृता न वालंकृता। तस्य भक्तिसुधास्यन्दिकीर्तनानि

नित्यानन्दमयं परं देवं चक्षुर्विषयतां नयन्ति। तस्य कृतिषु परमात्मा आत्मानं विवृणुते। सच्चानन्दयोरैक्यं तस्य सूक्तिषु नितरां दृश्यते। उपनिषत्-प्रसिद्धम् एकमेवाद्वितीयं वस्तु तस्य काव्येषु स्वेच्छया विहरति। तस्य कृतिषु जीवात्मपरमात्मनोरैक्यं रामसुग्रीवयोरिव भिन्नत्वेऽप्यभिन्नत्वं सम्यक् प्रदर्शितम्। तस्य पद्यानि पारमार्थिकानुरागप्रपूरितानि, जीवात्मपरमात्मनोर्विप्रलंभसंभोगात्मक-शृङ्गाररसप्रधानानि, उत्तुंगकल्पनाविलसितानि अत्यन्तमृदुलपदनिर्मितानि च।

तस्य कृतिषु पद्यनिचयः सकलजनमानसोल्लाससंगीतः, कमनीयकवितारसा-मोदिनः परमपुरुषार्थसंपादकः कवीश्वरस्य उत्तुंगमनोभावं प्रदर्शयति। तत्र कविरुपनिषदां सूक्ष्मार्थम्, आधुनिकजनसमूहसुखबोधार्थम् मंजुलपद-संयोजनैर्निजसूक्तिभिराविष्करोति। तथाहि :—सर्वं खल्विदं चिदचि-दात्मकं वस्तुजातं आनन्दास्पदम्। आनन्दो हि शाद्वलस्य नीलिमा, चण्ड-मारुतस्य गरिमा, उत्पत्ति-प्रलययोर्महिमा। त्रिदशचापो नवाम्बुदस्यानन्दो-द्भवः। 'तद्ध्यानन्दं ब्रह्मेति व्यजानात्।' सर्वेषु सर्वत्र सर्वथानन्दम्। अत एव सर्वं खल्विदं ब्रह्म।

प्राणस्यापि प्राणो जगत्प्राण आनन्दमयः। को ह्येवान्यात्कः प्राण्याद् यद्येष आकाश आनन्दो न स्यात्' इति श्रुतेः। स एव पुष्पं समुल्लासयति, स एव अतर्बहिश्च तत्सर्वं शरीरं व्याप्य आह्लादयति। यश्चानन्दप्रवाहश्चेतनस्य शरीरान्तः प्रवर्तते। स एव अहोरात्रम् अतन्द्रितो विश्वं सर्वमाक्रामति। प्रकृतिश्च आनन्दप्रवाह-प्रवर्तित-विविध-विचित्र-सत्वासत्वानाम् आनन्द-दान-कुशलं कर्मण्यभिरुचिमुत्पादयति। अत एव 'कुर्वन्नेवेह कर्माणि जिजी-विषेच्छतं समाः' इति श्रुतिः।

कर्मणा आनन्दोद्भवात् आनन्दप्रदत्वाच्च मनोवाक्कायानां परिशुद्ध-भावस्याऽऽवश्यकत्वं व्याकरोति। आनन्दस्य महिमा एव श्रद्धाम् उत्साहं विजयं च ददाति। 'यो वेदनिहितं' सर्वम् आनन्दे 'सन्तमेनं ततो विदुः'। आनन्दस्य जगदीशत्वात् 'कर्म ब्रह्मोद्भवं'। 'अस्ति ब्रह्म च कर्मणि।'

आनन्दमयः परमात्मा न आयतनेषु वसति परं तु क्षेत्रे आतपक्लान्त-

शरीरस्य कृषीवलस्य समीपे वर्तते। नियमः प्राणायामो निमिलिताक्षं ध्यानं च न परमात्मप्राप्तिहेतुभूतानि ; किन्तु पामरैस्सह निरन्तरसंश्लेष एव आनन्द-प्रसादकः। परमात्मनि स्वयमेव प्रवृत्ते जन्म-स्थेम-प्रलय-रचनायाम् कथं वा कुत्र वा मोक्षो निर्मीलिताक्षं ध्यानशीलस्य। सर्वेश्वरः सर्वदा विश्वस्य योगक्षेमं वहति। तेषामभ्युदयार्थं स्वयमेवातिमानुषं कर्म कुर्वन् क्लिश्यते। पुनरपि औपनिषदी वाणी स्मारिता—'कुर्वन्नेवेह कर्माणि जिजीविषेत्' इति।

'साधने'ति सुप्रसिद्धे ग्रन्थे रवीन्द्रनाथः स्वस्य कृतिषु प्रतिपादितं सर्वं पारमार्थिकं भारतवर्षीयं तत्त्वं संग्रहेण प्रकाशयति। स्वस्य 'शशिखण्डे'ति (Crescent Moon) प्रसिद्धे काव्ये निजबालसौहार्दं सूचयति। बालेषु परमात्मनो निरन्तरसान्निध्यं च प्रकटयति। तत्र गार्हस्थ्यं च परमधर्मं प्रस्तौति। 'फलसंग्रहे'ति (Fruitga-thering) प्रसिद्धे काव्ये आत्मनो परमात्मसाक्षात्कारं प्रपञ्चयति 'गीताञ्जलिरि'ति अन्वर्थके ग्रन्थे सर्वगुह्यतमं कर्मयोगं ज्ञानयोगचोदितं विषयीकरोति। इत्येतेष्वित इतरेषु च ग्रन्थेषु पारमार्थिकानुरागामोदितं विषयमेव आविष्करोति।

---

# सुभाषितानि

(कह्लनस्य)

आशाः काञ्चनपुष्पकुट्मलकुलच्छन्ना न काः क्ष्मातले
सौजन्यामृतवर्षिभिस्तिलकितं सेव्यैर्न किं मण्डलम्।
पन्थानः सुचिरोपचाररुचिरैर्व्याप्ता न कैः संस्तुतै-
स्तेषामत्र वसन्ति निह्नुतगुणाः कालेन ये मोहिताः ॥२।४०॥

भाव्यर्थस्याबुधाः कुर्युरुपायं स्थगनाय यम् ।
स एवापावृतं द्वारं ज्ञेयं दैवेन कल्पितम् ॥७७॥

दग्धाङ्गारकदम्बके विलुठतः स्तोकोन्मिषत्तेजसो
वेधा वह्निकणस्य शक्तिमतुलामाधातुकामो हठात् ।
तन्निर्वापणमिच्छतः प्रतनुते पुंसः समीपस्थितेः
सन्तापद्रुतभूरिसर्पिषि घटे पानीयकुम्भभ्रमम् ॥७८॥

कल्पद्रुमाश्च सन्तश्च नार्हन्ति समर्शार्षिकाम् ।
अर्थिना प्रार्थिताः पूर्वं फलन्त्यन्ये स्वयं यतः ॥३।६४॥

वदान्यः संविभागेभ्यः पूर्णं कुर्यादनुग्रहम् ।
छाययाऽप्याययन् दद्यात् फलान्यपि महीरुहः ॥६६॥

भुञ्जानाः पवनं सरीसृपगणाः प्रख्यापिता भोगिनो
गायद्भृङ्गनिवारका निगदिता विस्तीर्णकर्णा गजाः ।
यश्चाभ्यन्तरसम्भृतोष्मविकृतिः प्रोक्तः समी स द्रुमो
लोकेनेति निरर्गलं प्रलपता सर्वं विपर्यासितम् ॥१६४॥

रत्नोज्ज्वलाः प्रविकिरन्ल्लहरीः समीरै-
रब्धिः क्रियेत यदि रुद्धतटाभिमुख्यः ।
दोषोऽर्थिनः स खलु भाग्यविपर्ययाणां
दातुर्मनागपि न तस्य तु दातृतायाः ॥१६७॥

अन्तर्ये सततं लुठन्त्यगणितास्तानेव पाथोधरै-
रात्तानापततस्तरङ्गवलयैरालिङ्गय गृह्णन्नसौ ।
व्यक्तं मौक्तिकरत्नतां जलकणान् संप्रापयत्यम्बुधिः
प्रायोऽन्येन कृतादरो लघुरपि प्राप्तोऽर्च्यते स्वामिभि : ॥२०ः

खिन्नस्य हि विपर्येति तत्त्वज्ञस्यापि शेमुषी ॥२०३॥

# मेघदूतम्

[ निबन्धकः—श्रीनित्यगोपाल-विद्याविनोदः ]

रसपूर्णं खण्डमिव काव्योद्यानपारिजातायमानं मेघदूतं नाम भुवनविदितं खण्डकाव्यं तत्रभवतः कविकुलशेखरस्य वाग्-देवीवरपुत्रस्य कालिदासस्य सुधामुखलेखनीमुखनिर्गलितम्। कालिदासः कदा कुत्र कुतो जातः, कस्मात् कथं वा प्राप्तविद्य इत्यादिप्राक्तनतत्त्विककौतूहलगर्भे प्रश्ने चिररहस्य-नमसाच्छन्नेऽपि "कविषु कालिदासः" "उपमा कालिदासस्य" "कालिदास-कविता नवं वयः सम्भवन्तु मम जन्मजन्मनि" इत्येवंविधबहुलसनातनजन-वादास्तनाप्तवाक्यं जगदीश्वरमिव आर्यावर्त्तसम्भवानामस्माकं विश्वासपूतं हृदयनन्दिरं सुचिरमध्यारोपयन्। स हि कविशिरोमणिर्वैदिकान् पौराणिकदैतिहासिकात् कुतश्चित् प्राक्तनात् कथाकाव्याद् वा कविताकरा-देनत् काव्यरत्नं संगृहीतवानेतस्मिन् विदुषामनैकमत्यं चिरप्रथितम्। अत्र केचिदाहुः—सुविख्यातनाम्नो महाकवेर्घटकर्परस्य "यमककाव्य"मवलम्ब्य कालिदासेनैतत् काव्यमुपनिबद्धमिति। कदाचिद् वा कुतश्चिद्धेतुपारतन्त्र्यात् स्वप्रेयसीविधुरस्य कवेरेवायं प्रेमार्णवस्योद्वेलितोच्छ्वास इति केषाञ्चिन्मतम्। मेघदूतस्यान्यतमः प्रधानव्याख्याता महामहोपाध्यायः सूरिर्मल्लिनाथः पूर्व-मेघस्यादिमश्लोकस्य टीकायां "सीतां प्रति रामस्य हनूमत्सन्देशं मनसि निधाय मेघसन्देशं कविः कृतवान् इत्याहुः" इति लिलेख। उद्धृते वाक्यांशे "कविः कृतवान् इत्याहुः" इति लेखदर्शनात् सुधियो मल्लिनाथात् पूर्वमपि एतन्मतं तदातनकोविदगोष्ठीषु सुप्रचारितमासीदिति विस्पष्टं प्रतीयते। काव्यस्यैतस्य कतिभिस्तावदाभ्यन्तरीणप्रमाणैर्वयमेतं कल्पमेव सुसमीचीनं मन्यामहे। तथाहि, कविगुरोर्वाल्मीकेरमरसङ्गीतस्य श्रीरामायणस्य किष्किन्ध्याकाण्डस्याष्टाविंशसर्गवर्णितं जलदकालं तथा लङ्काकाण्डस्य पञ्चमसर्गचित्रितं सीतार्थं रामविलापं साभिनिवेशमधीयान्तिमे कल्पे एव

वयं नितरामास्थां धारयामः। प्रथमं तावन्मेघदूतादस्मन्मतानुग्राहकं प्रमाणजालमुद्धृत्य पश्चादुपजीव्यकाव्ययोस्तुलनामूलकं समालोचनं विधातुं प्रयतिष्यामहे। अथ पूर्वमेघस्य प्रथमश्लोकस्य चरमपादद्वये दृष्टिगोचरमात्र एव "जनकतनया" "रामगिरी" ति पदद्वयं सुविदितरामायणोदन्तमस्माकं मानसपथमुपस्थापयति। निर्वासितरामचन्द्रस्य सुचिरं तत्राधिष्ठानमेव तत्पर्वतस्य रामगिरिसंज्ञालाभनिदानमित्यस्माकं समूलमनुमानम्। यतो विचक्षणो मल्लिनाथष्टीकायां रामगिरेरित्यस्य "चित्रकूटस्ये"ति प्रतिपदं व्यवहृतवान्। अपि च रामायणस्यायोध्याकाण्डीयषोडशाधिकशततमसर्गस्य—"ये तत्र चित्रकूटस्य पुरस्तात् तापसाश्रमे" इत्यादिद्वितीयश्लोके वयं "चित्रकूटस्य" "आश्रमे" इति—पदयुगलं शब्दत उपलभामहे। कृत्स्ने तु रामायणे कुत्रापि "रामगिरि"रिति पदं दृष्टिपथं नावतरति। अपरञ्च शब्दकल्पद्रुमाभिधानके प्रामाणिके शब्दकोषे "चित्रकूट"शब्दस्य व्याख्याप्रसङ्गे "पुरा रामो वनं गत्वा प्रथमे यत्र वासमकरोत्। अधुना बुन्देलखण्डाख्यदेशः कामता इति ख्यातः", तथा रामगिरिशब्दस्य व्याख्यायां "चित्रकूटपर्वतः, यथा—कश्चित् कान्ताविरहगुरुणे"त्यादि मेघदूतीयपद्यसमुद्धारेऽस्माकमनुमानं द्रढयतीत्यलमतिप्रपञ्चेन। एवञ्च मेघदूतस्य द्वितीयश्लोके "आषाढस्य प्रथमदिवसे" इत्यादिरचनाया भावः रामायणीय-किष्किन्ध्याकाण्डस्याष्टाविंशसर्गस्य द्वितीयपद्यस्य "अयं स कालः सम्प्राप्तः" इत्यादि वर्णनाया निःशेषं सादृश्यमनुहरति। किं बहुना, मेघदूतीय"प्रथमदिवसे" "मेघमाश्लिष्टसानुम्" इत्यादिपदानि रामायणीय"अद्य" "गिरिसन्निभैर्मेघै"रित्यादिपदसमभावानीत्यत्र नास्ति कश्चित् विप्रतिपत्तिलेशः। ततो मेघदूतस्य तृतीयश्लोके नभसि सन्नद्धं नवजलधरं निरीक्ष्य विरहिणो यक्षस्य यथा कामोद्दीपनं रामायणीयश्लोकेऽपि तथैव रामविरहवर्णनमुपलभ्यते। एवं मेघदूतस्य पूर्वमेघे यथायथोत्तरोत्तरं मेघसन्दर्शनं, विद्युद्विलसनं, नगाः, नद्यः, प्रदेशाः, इन्द्रगोपः, सुरधनुः, कुटजकुसुमं, वलाकाः, चातकाः, आम्रपाकः,

जम्बुपरिणामः, नीपविकाशः, कन्दलीकलिकाः, केतकीहासः, चित्तवैरस्यं यावन्ति वर्षावर्णनाङ्गानि संदृश्यन्ते तावन्ति सफलान्येव प्रकृतरामायणीय-तत्तच्छ्लोकेषु सुस्पष्टं परिलक्ष्यन्ते। विशेषतश्चोत्तरमेघस्य "इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा" इत्याद्यूनत्रिंशश्लोकः अस्मदुपजीव्यानां वन्द्यपादानां मल्लिनाथानां युक्तिमुक्तिञ्च समर्थयतेतराम्। कुतूहलञ्चेत् प्रस्तुतकाव्ययुगलपाठेन पर्यालोचनया च अस्मन्मतं समीचीनं न वेति परीक्षणीयम्। अस्माभिर्यावदालोचितं तावता पूर्वमेघस्य साङ्गवर्षावर्णन-मेव कालिदासस्य प्रधानतमं प्रतिपाद्यम्, तथा तत्र तत्र तात्कालिकार्यावर्त्तस्य चतुरस्रभूगोलवर्णनमिषेण चित्रकूटतः कैलासपर्यन्तं तदानीन्तनप्रख्यात-नगनगरनगरीणां तदधिष्ठातृदेवानां प्रथिततीर्थदेशसरोवराणाञ्च सरसं सुरम्यं विचित्रं ललितं श्रवणसुभगञ्च विवरणम् आनुषङ्गिकतया प्रदत्त-मुपलभ्यते।

सौन्दर्यचित्रणमेव कविप्रतिभाया एकको निकषः। सौन्दर्यसारनिधे-र्विश्वरचयितुरिदं जगदशेषसौन्दर्यनिकेतनम्। सृष्टावस्यां जले स्थलेऽ-नलेऽनिले फले प्रसूने नभस्तले भूतले रसातले दिव्यन्तरीक्षे स्वर्गे वा सदा सर्वत्रैव समं तस्य सुन्दरपुरुषस्य मोहिनी सौन्दर्यलीला अनुक्षणं विल-सतितराम्। जडश्चिन्मयो वा सर्व एव भावः सर्वथा सर्वसौन्दर्याधारः। प्रकृतेरहेतुकप्रसादात् प्राक्तनसुकृताद् वा येषां "नैसर्गिकी प्रतिभा, बहु निर्मलं श्रुतम्, अमन्दः काव्याभिनिवेश"श्चेति काव्यसामग्रीकारणं करतलगतं, केवलं तेषामेवान्तर्दृष्टिः सौन्दर्यग्राहिणी स्यात्। वाग्मातुरपारानुग्रहेण कालिदासो दुरधिगमसौन्दर्यसिद्धौ निपुणं सिद्धहस्तो बभूव। अतः स स्वकीयायामपूर्वसृष्टौ पूर्वमेघे प्राकृतिकसौन्दर्यस्य परां सीमां प्रकटय्य कैलासशीर्षविराजमानां सर्वर्त्तुसुखाममरावतीसखीमलकामध्यारोढुं सोपानमिव निर्ममे। एवं स जडसौन्दर्यविश्लेषणमुखेनान्तरसौन्दर्य-सुषमामुद्घाटयितुकाम भूसौन्दर्यात् श्रेष्ठतरं स्वर्गसौन्दर्यमिवोत्तरमेघं चित्रयामास। अत्र तस्याघटनघटनापटीयसी कल्पनातुलिका ऐन्द्रजालिक-

रङ्गैः त्रिलोकीनिकषायमाणामलकां यक्षभवनं प्रेयसीविरहावस्थां प्रियार्थं स्वसन्देशं सविस्तरमङ्कितवती। स्थूलारुन्धतीप्रदर्शनन्यायेन अतीन्द्रिय-ब्रह्मव्याख्यानमिव जडसौन्दर्यवर्णना-शलाकया समुन्मीलितदृशां सहृद-यानां समक्षं कविरतः परं मानवहृदयसाररत्नं प्रेम सुव्याख्यातुमना इव विरहमथितमानसप्रतिबिम्बमुत्तरमेघं प्रदर्शयामास। कविस्तावत् "न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते" इत्यालङ्कारिकसूत्रमधिकृत्य प्रेममयं विरह-विधुरं स्वहृदयं स्वनिर्म्मिते मेघदूतादर्शे प्रतिबिम्बितं निरीक्ष्य स्वबिम्बदर्श-नोत्सुकः अर्भक इव आनन्दनिर्भरोऽभूत्। स तु स्वप्रेयसीविरहभाव-विभावितस्वान्तबाह्यः श्रीमन्महाप्रभुरिव महाभावोन्मादितः चरमकोटिप्राप्तं प्रेमवैचित्त्यमास्वादयन् जगति सर्वेषां सुखास्वादानाय तदास्वादनरीतिमाधुरीं प्रचारयामास। वयं तावत् प्रायेण प्रवृत्तिसुलभभोगसुखाभिरता मिलन-भङ्गभीरवः निवृत्तिसम्मतं त्यागमूलं विरहानन्दं (Melancholy delight) चिन्तयितुमप्यनीशाः किमुतानुभवितुम्। अतिभोगस्यातृप्तिरिव केवलं मिलनस्य अन्धावसाद एव फलम्। सम्भोगशृङ्गारमये मेलने वयमिह केवलं प्रत्यक्षं जडसौन्दर्यमुपास्महे। विप्रलम्भशृङ्गारात्मके विरहे तु यथा वयम् अनासन्नमप्रत्यक्षं दूरस्थं लोकान्तरितमपि प्रियजनमुपासितुं पारयामस्तथा शिक्षिता भवामः। रसगुरुः प्रेमकल्पतरुः कालिदासः स्वकल्पितप्रोषितविलासोचितधनेशसेवकयक्षमुपलक्ष्य सुदूरवासिन्यै सुन्दरी-ललामभूतायै शिशिरमथितपद्मिनीनिभायै विरहशीर्णायै स्वप्रेयस्यै अचेतन-मेघमुखेन सुदुःसहविरहव्यथागर्भं पुनर्मिलनसुखप्रकारं सन्दिश्य अनादि-वियोगदावानलदग्धस्य जीवकुलस्य मानसदूतेन निजप्रेष्ठरसिकेन्द्रचूडामणिं श्रीभगवन्तं प्रति चिरमिलनप्रार्थनां सङ्केतितवान् न वेति सुधीकविभिः सर्वथा विभाव्यमित्यलम्।

# प्रतिवचनम्

स्मर्यत एव प्रायेण प्रियपाठकमहाभागैर्यन् पत्रिकाया व्यनीतायां संख्यायां पृच्छाद्वितयं प्रकाशितम्, तदानीं च स्थानाभावान्न पारितं स्वमतमस्माभिः प्रकटयितुमत एव सादरमाहूताः प्रियमहाभागाः प्रत्युत्तर-दानाय। विषीदामस्तमां पुनर्निवेदयितुं यत् सत्स्वपि पाणिनितन्त्रपारावारपारीणेषु साहित्यार्णवकर्णधारेषु वाचकधुरन्धरेषु नैकेनापि प्रेषितं प्रत्युत्तरं प्रश्नद्वितयस्य। अत एव यथामत्यस्माभिः प्रयत्यते समाधानाय शङ्कयोः।

प्रथमतस्तावत् कुत्रपदस्य पाणिनीयत्वमपाणिनीयत्वं वा विचार्यते। तत्र प्राग्दिशो विभक्तिः [ पा० ५।३।१ ] इति सूत्रस्थत्यदादिविषयश्चेतिचतुर्थ-वार्त्तिकव्याख्यानावसरे भगवता भाष्यकृता कुत्रेत्युदाहरणरूपेणोपन्यस्तम्। सप्तम्यास्त्रल् [ पा० ५।३।१० ] इति सूत्रभाष्येपि कस्मिन् कुत्र इत्युपलभ्यते। वैयाकरणेषु च भाष्यकारस्य प्रामाण्यं सर्वेषामेव सम्मतम्,

"यथोत्तरं मुनीनां प्रमाण्यम्।"

"यद्विस्मृतमदृष्टं वा सूत्रेकारेण तत् स्फुटम्।
वाक्यकारो ब्रवीत्येवं तेनादृष्टञ्च भाष्यकृत्॥"

इत्यादीनि वचनान्येवात्र साक्षिभूयमावहन्ति। अत एव नास्ति कुत्र-शब्दस्य पाणिनीयत्वे संशयलेशोऽपीति केचित्।

परं सर्वमेतदापाततो रमणीयम्। यैर्हि कुत्रशब्दस्यापाणिनीयत्व-मुद्धोष्यते तैरपि भाषायामेवास्यापशब्दत्वमभिप्रेयते न तु च्छन्दसि। तत्र "वा ह च च्छन्दसि" [ पा० ५।३।१३ ] इति सूत्रे "वा च" इति निपातद्वयो-पादानात् "विकल्पद्वयं पदत्रयम्" इति न्यायेन क्व कुत्र कुह इति पदत्रयस्य सर्वसम्मतत्वात्। अत एव कुत्रशब्दस्य भाषायां प्रयोगोऽपाणिनीय इत्येव प्रतिवादिन आशय इति निर्णीतम्। भाष्यवचनात्तु कुत्रशब्दस्य भपागतत्वं

निर्णेतुं न शक्यते भाष्येऽविशेषेणैव छान्दसपादानां भाषापदानां चोदाहरण-त्वेनापन्यासात्। प्राग्दिशो विभक्तिः [ पा० ५।३।१ ] इति सूत्रस्यैव तृतीय-वार्त्तिके इदमो विभक्तिस्वरश्चेत्यत्र स्वरार्थमेव इतः इह इति पदद्वयस्यो-पन्यासात्, स्वरस्य च प्राधान्येन छन्दोविषयकत्वात्। सप्तम्यास्त्रल् इत्यत्रापि यदुक्तं तत् पञ्चम्यास्तसिल् [ पा० ५।३।७ ] सप्तम्यास्त्रल् [ पा ५।३।१० ] इति सूत्रद्वितयस्य भाष्यरूपेण। तत्र च--'इदं पुनर्विचार्यते इमे तसिलादयो विभक्त्यादेशा वा स्युः परे वेति" इत्युपक्रम्य प्रवर्त्तितो विचारः। तेन तत्रापि विचारप्रसङ्गेनोदाहरणत्वेनोपनिबद्धस्य कुत्रशब्दस्य भाषाविषय-त्वमवधारयितुं न शक्यते। अत एव भाष्यकारवचनमत्र कुत्रशब्दस्य भाषायां साधुत्वं प्रमापयितुं नालमिति सिद्धम्।

इदानीमाचार्यस्य सूत्राणि पर्यालोच्यन्ते। तत्र चाष्टाध्याय्याः पञ्च-माध्यायस्य तृतीये पादे चत्वारि सूत्राणि—

सप्तम्यास्त्रल् ॥१०॥

इदमो हः ॥११॥

किमोऽत् ॥१२॥

वा ह च च्छन्दसि ॥१३॥

अत्र "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति" इति न्यायेन "सप्तम्यास्त्रल्" इत्युत्सर्गः, "इदमो हः" "किमोऽत्" इति द्वौ चापवादौ। तेन यथा इदम्शब्दात् ह एव, न तु कथमपि त्रल् तथैव किम्-शब्दादपि अदेव, न पुनः कथमपि त्रल्। अत एव भाषायां किम्शब्दात् ह एव न तु त्रल् इति सूत्रकारस्वरस इति निर्विवादम्। कैश्चित् पुनर्दुरा-ग्रहग्रहिलस्वान्तैः "प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित्" इत्यमरादि-प्रामाणिकप्रयोगोपपत्तये कुशकाशावलम्बनन्यायेन "वा ह च च्छन्दसि" इत्युत्तरसूत्रात् पूर्वसूत्रे वाकारमनुकृष्य इदम्शब्दादपि विकल्पेन त्रल् विधीयते। तेषां मतस्यासमीचीनत्वं स्फुटमेव। न हि भाष्यकारवचन-मन्तरेणास्माभिर्यथेच्छं योगविभागानुकर्षादिकं शक्यं विधातुम्। अत्र च

नास्ति भाष्यकारवचनम्। यद्यपि 'स्त्रीयश्छागः शिरोभागेऽपि निकृत्येत जघनभागेऽपि निकृत्येत' इति वङ्गीयानामाभाणकस्तथाऽपि प्रयोजनविशेषमन्तरेण को वाऽनुमन्मत्तो जघनभागे छागं निहन्याद्बल्यर्थम्। एवं को वा प्रेक्षावान् सूत्राणि विदधानः स्वायत्ते शब्दप्रयोगे केवलमाहोपुरुषिकामात्रादिदर्शयिषया पदानामयथाप्रयोगेण समुपजनयेद् व्यामोहं वाचकानाम्। कृताञ्जलिर्ह्याचार्यो दर्भपवित्रपाणिः शुचौ देशे प्राङ्मुख उपविश्य महता यत्नेन सूत्राण्यारचयति। अत एव मतमिदमेकीयमतत्वेनोल्लिखितं जयादित्येन। तथा च "किमोऽत्" इत्यत्र सूत्रे काशिका—"अलमपि केचिदिच्छन्ति। कुत्र। तत् कथम्? उत्तरसूत्राद्वावचनं पुरस्तादपकृष्यते।" अत्र केचिदित्यनेनास्वरसः सूचितः। अत्र हरदत्तः—"किमोऽद्वे"ति सूत्रं पठितव्यम्। "ह च च्छन्दसि" इत्यत्र चकारेण अतलोः समुच्चयादिष्टसिद्धिरिति तेषां भावः। भागवृत्तिकारस्तु भाषायामेतन्नेच्छति" इति।

अयं भावः—पाणिनिप्रणीतानां सूत्राणां द्विविधः पाठ उपलभ्यते—दण्डपाठः खण्डपाठश्चेति। तत्र दण्डपाठे सूत्राणां प्रश्लिष्टपाठात् "इदमो हः किमोऽद्वा ह च च्छन्दसि" इत्येवं रीत्या पाठः। तस्य च द्वेधा विभागः सम्भवति। इदमो हः, किमोऽत्, वा ह चच्छन्दसि इत्येवंरूप एकः, इदमो हः, किमोऽद्वा, ह च च्छन्दसि इत्येवंरूपो द्वितीयः। कुत्रशब्दस्य भाषायां साधुत्वमिच्छद्भिर्द्वैतीयीक एव पाठः शरणीक्रियते। परन्तु प्रामाणिकस्य खण्डपाठस्य परित्यागे कारणविशेषासद्भावात् कालिदासादिमहाकविनिबन्धेषु च कुत्रशब्दस्यानुपलम्भात् प्रचलित एव पाठः स्वीकरणीयः। अत एव भागवृत्तिकृताऽन्वर्थनामधेयेन विमलमतिना भाषायां कुत्रशब्दो नेष्यते। तन्मते कुत्रादिशब्दाः कालदुष्टा एवापशब्दाः। भागवृत्तिकृतो जयादित्यादर्वाचीनत्वेपि तस्य सर्वथा भाष्यानुसारित्वं सुप्रथितमेव। प्रतिपादितं चैतत् प्रमाणोपन्यासपुरःसरम् Indian Historical Quarterly इत्यत्र विस्पष्टमेव।

यद्यपि कौमुद्यां दीक्षितचरणैः किमोऽत् इति सूत्रविवरणे उक्तम्—"वाग्रहणमपकृष्यते। सप्तम्यन्तात् किमोऽद्वा स्यात्। पक्षे त्रल्" इति, तथाऽपि तट्टीकाकृद्भिः सर्वैरेवात्र प्रत्यवस्थितम्।. तथा च लघुशब्देन्दुशेखरे नागेशः—वाग्रहणमिति। "साहचर्याच्च कुत्रचित्" [ अमर० १।३ ] "नान्यत्र कुत्रापि च साभिलाषम्" [ नैषध० ३।६७ ] इति बहुतरप्रयोगदर्शनादिदमुक्तम् भागवृत्तिकारादयस्तु किमो भाषायां त्रलं नेछन्ति।· भाष्यस्वरसोऽप्येवम्" इति। बालमनोरमायां वासुदेवदीक्षितोऽपि—"केचित्तु किमोऽत् इत्यत्र उत्तर-सूत्राद्वाग्रहणापकर्षे प्रमाणाभावात् त्रलं बाधित्वा नित्यमेवात्प्रत्ययः कुत्रेत्यपशब्द एवेत्याहुः" इति।

अत एव कातन्त्रकृता सर्ववर्मणा कुत्रशब्दस्य साधुत्वाय किमपि सूत्रं न प्राणायि। टीकाकृताऽपि "किमः" इतिसूत्रस्य टीकायामुक्तम्—अयमपि त्रापवादः। कुत्रेति कैश्चिदिष्यते, भाष्यकारस्य पुनरसाधुरेवेति। पञ्जी-कृताऽप्युक्तम्—कुत्रेति कैश्चिदिष्यते। तद् भाष्यकारस्याप्यसाध्विति।

एवञ्च कुत्रशब्दस्य व्याकरणान्तरेषु प्रयोगानुरोधात् साधुत्वे स्वीकृते-ऽपि पाणिनिकात्यायनपतञ्जलिकाले भाषायां प्रयोगादर्शनात् पाणिनीयत्वं स्वीकर्तुं कथमपि न शक्यते इति विदुषां परामर्शः।

---

## कुत्रेति पदस्य वैदिकत्वनिरासः

[ निबन्धकः—श्रीहाराणचन्द्रशास्त्री भट्टाचार्यः ]

नत्वा शिवकुमारार्यं हाराणचन्द्रशर्मणा।
"कुत्रे"ति प्रयोगस्यात्र वैदिकत्वं निरस्यते॥

केचन निपुणमतयः "कुत्रे"ति पदस्य वेदमात्रविषयत्वमभिमन्यमानास्तस्य

लोके प्रयोगमसाधुं मन्यन्ते, "प्राचीनटीकाकृद्भिः कुत्रशब्दस्य भाष्यविरुद्धत्वप्रतिपादनमेवात्र बीजम्" अभिदधते च। "भागवृत्तिकारादयस्तु किमो भाषायां त्रलं नेच्छन्ति, भाष्यस्वरसोऽप्येवमेवे"ति "किमोऽत्" (५-३-१२) इति सूत्रस्थो लघुशब्देन्दुशेखरग्रन्थस्तेषामालम्बनभूतः।

यद्यपि पूर्वैर्गुरुभिर्लघुशब्देन्दुशेखरकाराणां श्रीमन्नागेशभट्टपादानां प्रामाणिकत्वमङ्गीकृतम् तथाऽपि तेषां सर्वथाऽभ्रान्तत्वं न केनाप्युद्घोषितम्। नागेशभट्टपादानां गुरुत्वमङ्गीकृत्यापि तेषामभ्रान्तत्वं नास्माभिरपि प्रतिज्ञातुं शक्यम्, भ्रान्तेः पुरुषधर्मत्वात्, नागेशभट्टपादानां च पुरुषत्वात्। अत एव नैयायिकनायकगदाधरभट्टाचार्यमहाशयैर्दीधितिकृतां प्रामाणिकत्वं गुरुत्वं चोररीकृत्यापि "नहि कस्यचिद् ग्रन्थकृतो विपरीतलेखनं युक्तिबलाद्वस्तुसिद्धौ बाधकम्" इत्युक्त्या दीधितिकृत्प्रतिपादितः सिद्धान्तः समुपेक्षितः प्रथमाव्युत्पत्तिवादे। तस्मादपर्यालोच्यैव महाभाष्यतात्पर्यं पूर्वोक्तलेखमात्रदर्शनेन नैव किम्शब्दोत्तरत्रल्प्रत्ययस्य लोकेऽसाधुत्वमध्यवसातुं योग्यम्। न च "कुत्रे"ति पदस्य लोके साधुत्वं मन्यमानानां सिद्धान्तकौमुदीकाराणां भाष्यतात्पर्यस्यानभिज्ञत्वेऽभिज्ञत्वे च शब्देन्दुशेखरकृतां किञ्चन बलवत् प्रमाणमुपलभ्यते प्रत्युत वैपरीत्यस्यापि बहुलमुपलम्भाद्विपरीतं निश्चेतुं शक्यते। नच नागेशमहोदयकृतं कौमुदीग्रन्थखण्डनं सर्वत्र साधु मन्यन्ते स्म पूर्वे गुरवः। "जरायाः" (३।३।१०१) इति सूत्रस्थस्य "इनादीन् बाधित्वा परत्वाज्जरस्" इति कौमुदीग्रन्थस्य भाष्यादिविरोधोपदर्शनेन नागेशभट्टैः कृतमपि खण्डनं भाष्याशयानाकलनपुरःसरमेवेति विदन्ति तत्सम्प्रदायरहस्यविदो विद्वांस इति न तत्र बहु वक्तव्यम्। एवमन्यानि तादृशानि बहूनि स्थलानि सन्ति यत्र भाष्यरहस्यवेदित्वमात्मनः प्रथयद्भिर्नागेशमहाभागैः खण्डितान्यपि दीक्षितमतानि रोचन्ते स्म पूर्वपण्डितप्रकाण्डेभ्यो नवीनमतापेक्षया भाष्याशयानुकूलत्वेन। सत्यवसरे सम्भावितायां च प्रयोजनवत्तायां तेषां चर्चा प्रवर्त्तयिष्यते।

न खलु "कुत्रे"ति पदस्य वेदमात्रविषयत्वं महाभाष्यकृद्भिः क्वापि

कण्ठरवेणोक्तम्। "किमोऽत्" "वा ह च छन्दसि" (४।३।१२-१३) इति सूत्रद्वयस्य भाष्यकारैरस्पृष्टत्वात् तादृशस्य कस्यचिद् भाष्यसन्दर्भस्य सूत्रान्तरेऽप्यनुपलम्भात्। अत एव नागेशमहाशयैरपि "भाष्यस्वरसोऽप्येवमेवे'त्यभ्यधायि न तु 'भाष्यसन्दर्भोऽप्येवमेवे'ति वक्तुमपारि। काशिकायां तु "त्रलमपि केचिदिच्छन्ति। कुत्र। तत्कथम्? उत्तरसूत्राद्वावचनमाकृष्यते" (४।३।१२) इत्येतावन्मात्रमभिहितम्। तत्र भाष्यकृदभिप्रेतत्वानभिप्रेतत्वयोः कापि समीक्षा नैव प्रावर्ति।

न्यासकारस्त्वत्र सर्वथा नीरव एव दृश्यते। पदमञ्जरीकारहरदत्तमिश्रेणात्र

"भागवृत्तिकारस्तु भाषायामेतन्नेच्छति"

इत्येव प्रत्यपादि, नात्र भाष्यसम्मतत्वासम्मतत्वयोश्चर्चायां लेखनी प्रयासिता।

प्रौढमनोरमाग्रन्थे भट्टोजिदीक्षितचरणा अनादृत्यैव विचारणां भाष्यविरोधाविरोधयोः प्रत्यपादयन्—

"यद्यपि भागवृत्तिकारो भाषायां त्रलं नेच्छति, वामनस्याप्यत्रैव स्वरसः; तथाऽपि वामनोक्तमेकदेशिमतमेवेह पुरस्कृतम्। बहुप्रयोगदर्शनाद्" इति। एवं च नागेशमहाशयेभ्योऽन्येन न केनापि प्रसिद्धेन टीकाकारेण "कुत्रे"त्यस्य लौकिकत्वे भाष्यविरोधोद्भावनेन विभीषिका व्यरचि। महाभाष्यव्याख्यातॄणां कैयटोपाध्यायानामपि वाचंयमत्वमत्र दृश्यते। तथाच नागेशभट्टैरेवात्र भाष्यविरोध उत्प्रेक्षितो नान्येन केनापीति सुस्पष्टं प्रतिभासते।

"कुत्रे"ति प्रयोगस्यातिप्रसिद्धत्वमकामैरपि नागेशपक्षाश्रितैः सत्यानुरोधेनाङ्गीकर्त्तव्यम्। तेन "स्थितस्य गतिश्चिन्तनीये"ति न्यायमनुसरद्भिर्दीक्षितपादैस्तस्य लोके साधुत्वं समर्थयमानैः स्वीयं बुद्धिवैशद्यमेव प्रकटितम्। न च नागेशोक्तिमात्रेण तत्र भाष्यविरोधो मात्रयाऽपि सम्भावनीयः। विचार्यमाणे भाष्यसन्दर्भे प्रत्युत तत्र भाष्यानुग्रहस्यैव लाभात्। तथाहि,—महाभाष्ये पञ्चमाध्याये तृतीयपादस्याद्याह्निके "पञ्चम्यास्तसिल्"

"सप्तम्यास्त्रल्" (५।३।७,१०) इति सूत्रद्वयी भगवता पतञ्जलिना सहैव विचारिता। तत्र तसिलादीनां विभक्त्यादेशत्वं प्रत्ययत्वं वेति विचारणायां प्रवृत्तायां विभक्त्यादेशत्वपक्षे "कुत्रे"ति प्रयोगे "अच्च घेः" (७।३।११९) इति सूत्रस्य प्रसक्तिरूपो दोष उद्भावितः। तस्यायमाशयः;—किम्शब्दोत्तरं ङौ विभक्तावागतायां विभक्त्यादेशत्वपक्षे ङेस्त्रलादेशे स्थानिवत्सूत्रेण (१।१।५६) त्रलादेशस्य ङिविभक्तित्वे "कु"शब्दस्य घिसंज्ञायां जातायाम् "अच्च घेः" (७।३।११९) इत्यनेन उकारस्य अकारे त्रलादेशस्य च औकारे कृते "वृद्धिरेचि" (६।१।८८) इति सूत्रेण वृद्धौ कृतायां "कौ" इति रूपमनिष्टं प्रसज्येत, इष्टं च "कुत्रे"ति रूपं न सिध्येत्। तस्माद् विभक्त्यादेशत्वपक्षो हेयः। प्रत्ययत्वपक्षश्चाश्रयणीय इति। अत्रेयं सूक्ष्मा विचारणा प्रादुर्भवति;—यदि "कुत्रे"ति पदस्य वैदिकत्वं स्यात्तदा तत्रानिष्टापादनं नैव सम्भवि। "जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधायाः" (वा. ७।३।१०९) इति कात्यायनवार्त्तिकेन "अच्च घेः" (७।३।११९) इति शास्त्रस्य वेदे वैकल्पिकत्वप्रतिपादनात्। तथाच "अच्च घेः" इति सूत्रस्य वेदे पाक्षिकी प्रवृत्तिः। एवं च "अच्च घे"रित्यस्य प्रवृत्त्यभावपक्षे विभक्त्यादेशत्वपक्षेऽपि "कुत्रे"ति प्रयोगो वेदे निर्बाध एव। न च "अच्च घेरि"त्यस्य वेदे प्रवृत्तिपक्षमाश्रित्यैव निरुक्तो दोष उद्भावितो भगवतेति नागेशपक्षपातिभिः शङ्कितुं योग्यम्, छान्दसे "गव्यूति"रिति प्रयोगे वलोपवारणाय दीक्षितैः प्रतिपादितस्योपायस्य दूषणावसरे "छन्दसि सर्वविधीनां व्यवस्थितत्वान्न वलोपप्रसक्तिस्तत्रत्ये गव्यूतौ" इत्युक्त्या नागेशमहाशयैरेव वेदे आपाद्यमानप्रयोगाभावस्य स्वयमेव प्रतिपादनात्। तयैव रीत्या "जसादिष्वि"ति वार्त्तिकबलेन "अच्च घेरि"त्यस्यात्राप्रवृत्त्या वेदे "कुत्रे"ति पदस्य निराबाधत्वसम्भवेन तत्र भगवतो दोषोद्भावनं भवन्मतेऽप्युन्मत्तप्रलपितं स्यात् तस्मात् पूर्वोक्तस्य "कुत्रे"ति प्रयोगे दोषोद्भावनपरभाष्यग्रन्थस्यासङ्गतिपरिहाराय सकलशिष्टजनप्रसिद्धस्य लोके "कुत्रे"ति प्रयोगस्यानुग्रहाय च लौकिकप्रयोगाभिप्रायेणैव भगवता

"कुत्रे"त्यत्र दोषः प्रतिपादित इत्यवश्यं मन्तव्यम्। एवं च "किमोऽत्" इति सूत्रे वाकारस्यापकर्षे पूर्वोक्तं भाष्यमेव मानमिति "कुत्रे"ति प्रयोगस्य लौकिकत्वे क्व भाष्यविरोध इति विभावनीयं निष्पक्षपालहृदयैः सुधीभिः। प्रत्युत "कुत्रे"त्यस्य प्रयोगस्य वेदमात्रविषयत्वस्वीकारे निरुक्तभाष्यासङ्गतिरेव बाधिका। न चोत्तरसूत्रात्पूर्वसूत्रे पदापकर्षो न प्रामाणिक इति वाच्यम्; उक्तभाष्यस्यैव तत्र प्रमाणतया जागरूकत्वात्। स्वीकृतश्च नागेशमहाशयैरपि "यरोऽनुनासिकेऽनुनासिको वा" (८।४।४५) इति सूत्रे "अनुस्वारस्य ययि परसवर्णः" (८।४।५८) इत्युत्तरसूत्रात्सवर्णपदापकर्षो भाष्याशयानुसारेणेति तत्रत्ये शब्देन्दुशेखरग्रन्थे स्पष्टम्।

नात्राधुना किञ्चन वक्तव्यतयाऽवशिष्यते। केवलं दीधितिकृदुक्त्यैवाऽयं लेखः परिसमाप्यते—

"मान्यान् प्रणम्य विहिताञ्जलिरेष भूयो
भूयो विधाय विनयं विनिवेदयामि।
दृष्यं वचो मम परं निपुणं विभाव्य
भावावबोधविहितो न दुनोति दोषः॥"

---

# स्वर्गतः कविराजशिरोमणिः

हा हन्त, महतीयमकाण्डोपनता दुरायतिर्नियतिर्भारतीयानां विशेषतो वङ्गीयानां यदिमे वैद्यकविद्याविचक्षणाः परिलुप्यमानप्राचीनभावधारैककर्णधाराः परम्परागतसदाचारपरिचर्यादीक्षितसर्वाध्यक्षजीवनाः कविराजशिरोमणयस्तत्रभवन्तः श्यामादासवाचस्पतयो व्यतीतसौराषाढस्याष्टादशदिवसे रजन्या द्वितीये यामे मानवसामान्यधिया समागता अपि वैवस्वतीदूततती· स्वप्रभावेणावधूय स्वकर्मविजितान् ज्योतिष्मतो वैराजाल्लोँकानवा-

लम्बन्त। न खलु समक्षं सर्वात्मना पितुरेव तद्गुणानधीयानस्य विनय-नयनिष्ठितस्य स्वर्गप्रतिरूपस्य तथाविधस्य तनयस्य, समक्षं पतिप्राणायाः सच्चरित्रायाः न केवलं शास्त्रानुशासनतः प्रकृत्याऽपि स्वार्धाङ्गीभूताया अर्धाङ्गिन्याः समक्षञ्च प्रभुतुल्यगुणपरम्पराणां शिष्टानां परिजनानां परिणामजर्जरं विशरारु शरीरं परिहरन्तः शोच्यास्तत्रभवन्तः कविराजशिरोमणयः, परमेकमौक्तिकैकधना वणिज इव तदपहारपरिमुषितधैर्यबन्धाः शिरोमणिशोभमानशिरसः सर्पा इव पुनस्तथाविधशिरोमणिप्राप्तिनिराशाः शोच्या वयमेव ये तथाविधान्यपहाय सुहृद्रत्नान्यन्धकारमेव केवलं परितः परिलोकयामः। कस्मै द्रुह्यामः कस्य वा आक्रोशामः कं वा शरणं यामः, न हि कश्चिद्दैवाय प्रभवेन्मनुष्यः। यथा याति तथा नोत्पद्यते, गतश्च पुनर्नावर्त्तते इति सर्वथा निराशाः स्मो मन्दभाग्याः।

महात्मनोऽस्य गुणग्रामाः कथमिवानया प्राकृतया लेखन्या लिख्यन्ताम्, कथं वाऽसर्वदृग्भिरस्मादृशैस्ते विशेषतो विज्ञाय साधारण्येनोपस्थाप्यन्तां वेति निश्चयमनधिगच्छद्भिरेकान्तत एव तस्मादसाध्यात् कर्मणः पराजीयते। परं महात्मनोऽस्यैवंविधे सामयिकेऽसामयिके वा लोकान्तरगमने नूनं प्रनष्टप्रवक्तृका वैद्यकविद्याः अप्रदानमलीमसा द्रविणराशयः अनाचरण-कलङ्किताः सदाचाराः, हृतैकपुत्रा वङ्गभूमिर्हृतसारं भारतवर्षमनाश्रया ब्राह्मण-पण्डिताश्चेति निश्चयतः सडिण्डिमघोषमुदाह्रियते।

अयञ्च महात्मा सुचिरं संस्कृतसाहित्य-परिषदः सहकारिसभापतिपदं समलङ्कृतवान्, सर्वथा च परिषदो हितार्थमात्मानं नियोजितवानिति महा-पुरुषस्यास्य स्वःप्रयाणेन शोकसागरमग्नया परिषदा नेदानीमस्य चरितादिक-मुपवर्णयितुं शक्यते। संख्यान्तरे सविस्तरं जीवनवृत्तं प्रकाशयिष्यते।

---

# समालोचनम्

**संस्कृतपद्यवाणी ।** संस्कृतपद्यप्रधाना त्रैमासिकी संस्कृत-पत्रिका । अध्यापकप्रवरेण श्रीमता कालीपदतर्काचार्यभट्टाचार्येण सम्पादिता । वार्षिकमूल्यं सार्धं रूप्यकम् । ११ चौधुरी लेन् श्यामबाजार कलकत्ता इत्यतः श्रीकार्तिकचन्द्रचक्रवर्त्तिना प्रकाशिता ।

कस्य वा न विदितः सर्वतन्त्रस्वतन्त्रधिषणः श्रीमान् कालीपदतर्काचार्य-महोदयः परिपत्पत्रिकाप्रणयिनः । पण्डितप्रकाण्डेन खल्वनेन सुचिरमति-निपुणं सम्पादिता संस्कृतसाहित्यपरिषत्पत्रिका ततश्चावसराभावादगतिकतया परित्यक्तं सम्पादकपदम् । इदानीन्तु सर्वत्रैव भारते वर्षे सुरभारत्या दुर्दशां समवलोक्य सुतरां दूयमानमानसः पुनरपि पद्यमयीं वाणीं समुज्जीवयितुं विनिबद्धपरिकरोऽयं महाभागस्तृणीकृतस्वार्थः प्रचारयति परमरमणीयां संस्कृतपद्यवाणीमिमाम् । प्रशस्यतमः खल्वयं समुद्योगस्तर्काचार्यमहाभागस्येति सावधारणं ब्रूमः । अत्र यथा विलसदर्थालङ्कारमधुराणां ध्वनिप्रचुराणां पद्यानां सन्निवेशस्तथैव श्रवणसुभगानां वैचित्रसाराणां यमकचित्रकाव्यादीनाम-पीत्यहो प्रावीण्यं तर्काचार्याणाम् । यद्यपि पत्रिकेयं पद्यकाव्यबहुला तथापि न खलु सर्वथा परिहीणा गद्यप्रबन्धेन । तथाहि संख्यायामस्यां प्राथमिक-समावेदनशीर्षके सुमनोहरे गद्यप्रबन्धे समीचीनतमया सरण्या प्रतिपादितं गद्यस्य पद्यस्य च स्वरूपम् । संस्कृतपद्यवाणीति संज्ञा "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायेनेत्यवबोद्धव्यम् । इदानीमपि देदीप्यन्ते भूयांसः संस्कृतभाषाप्रणयिनो भारते वर्षे । अतो यथा वश्यवाचः कवेः कालीपद-तर्काचार्यमहाभागस्य महनीयतमोऽयं प्रयत्नः साफल्यमनुविन्देत तथाऽवश्यं प्रयतितव्यं तैरिति शिवम् ।

---

ॐ तत्सत्

स्वनामधन्यचिकित्सक-वदान्यप्रवर-कविराजशिरोमणि—

महामहाध्यापक-**श्यामादास-वाचस्पति**-महाशयानां महाप्रयाणे

# परिदेवनम्

[ निबन्धकः—**श्रीभोलानाथ-कविराजः** । ]

लोकाः कोका इव निशि गता हन्त शोकातिरेकं
दीना मीनाः स्थल इव महा-मोहलग्ना भवन्ति ।
छात्राः पुत्रा इव तव वयं स्नेहतो वञ्चिताः स्मः
श्यामादास त्वयि बत गते नाममात्रावशेषम् ॥१॥

हा हा कष्टं निपतितमिदं हन्त कस्मादकस्मा-
दस्माकं वा हतविधिवशाद् भारतस्याथवाऽस्य ।
धिग् धिग् दैवं न हि स सहते जीवनं सज्जनानां
दीर्घं शीघ्रं कलयति यतस्त्वादृशानां निपातम् ॥२॥

वज्राघातोऽप्यहह सुसहो भल्लभेदोऽपि सह्यः
कूटैश्चूर्णीकरणमपि नः सह्यमेव प्रसह्य ।
सह्यं टङ्कक्रथनमथनं प्रासपेषोऽपि सह्यः
श्यामादासो गत इति वचो दुःसहं दुःसहं हि ॥३॥

गूढं दानं तव नियमितं दीनहीनेषु नित्यं
वृत्तं ज्ञातुं तव क इव वा लोकबाह्यं समर्थः
कर्मी धर्मी सुविमलगुणग्रामधाम त्वमासीः
को वा लोके भवतु भवतस्तुल्यमूल्यो वरिष्ठ ॥४॥

शास्त्रे तीक्ष्णां मतिमतितरां रक्षसि स्मापरोक्षं
ज्ञानं चासीदिह तव महाधीर धीरप्रियस्य ।
आक्रम्येदं भुवनमखिलं सुन्दरी तावकीना
कीर्त्तिः स्फूर्त्तिं भजति भिषजं शास्त्रपीठे लुठन्ती ॥५॥

आस्ते कस्ते सम इह भिषग् धीर पीयूषपाणे
जाने वैद्याः पतितशिरसो वैद्यकं बोद्धृहीनम् ।
विप्राः क्षिप्राः कमभिदधतां प्रार्थनामर्थहेतोः
कोऽन्यो दैन्यं दमयतु नृणां हे वदान्यप्रधान ॥६॥
चिन्ताहन्ता सदयहृदयः साधुसेवी सुधीरो
हीरो नृणां परमविदुषां दुःखहारी विचारी ।
यातः ख्यातिं जगति भगवद्भक्तियुक्तो जितात्मा
श्यामादास त्वमिव क इव प्रेक्ष्यते सूक्ष्मबुद्धे ॥७॥
यातं किं वा स्वभवनमये शान्तये शान्तिधाम
कामं लोको ह्ययमतिमहाशोकदुःखैकभूमिः ।
पाद्यं सद्यः स्तुतमिह भवानश्रु नः स्वीकरोतु
यात्राकाले कलयतु शिवं सर्वभूतान्तरात्मा ॥८॥

---

## विशेषतो द्रष्टव्यम्

विदितमेवैतत् प्रायेण प्रियपाठकमहाभागानां यत् केनचिज्जिज्ञासुना कुलपदस्य भाषायां साधुत्वमधिकृत्य प्रेषिता काचन पृच्छा परिषत्पत्रिकायां प्रकाशनाय। तस्याश्च प्रकाशनोत्तरं कालं कञ्चित् प्रतीक्ष्यानवाप्य वाचकमहोदयेभ्यः किमप्युत्तरमस्माभिरेव यथामति प्रयतितं तद्गतसंशयस्य निराकरणाय। ततश्च व्यतिगते महति काले वाराणसेयेन पण्डितप्रकाण्डेन श्रीमता हाराणचन्द्रशास्त्रिमहोदयेनास्मन्मतखण्डनाय प्रहितः कश्चन निबन्धः। अत्र च व्याकरणतन्त्रकर्णधारा विपश्चिद्वर्या एव प्रमाणमिति संख्यायामस्यां प्रबन्धद्वितयमपि संमुद्रितम्। आशास्यते चाचिरादेव विदितवेदितव्या अधिगतयाथातथ्याः सुधियः स्वं स्वं मतं प्रकटीकुर्युरिति शिवम्।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषन् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

| | | |
|---|---|---|
| August, 1934. | १८५६ शकीये श्रावणे<br>१७श-वर्षस्य ४र्थ संख्या | Vol. XVII No. 4 |


## उपनिषत्कथा


[ निबन्धकः—महामहोपाध्याय-श्रीदुर्गाचरण-सांख्यवेदान्ततीर्थः ]


( छान्दोग्ये पञ्चमप्रपाठके तृतीयखण्डे )

उपनिषत्सु पञ्चाग्निविद्या नाम काचिदुपासनप्रक्रिया जिज्ञासूनां बोधसौकर्यार्थं विद्याग्रहणनियमप्रदर्शनार्थं च निपुणमाख्यायिकामुखेन लोकानुग्रहवत्या श्रुत्या सन्निबद्धा। सा चाऽऽख्यायिका नितरां सरसमधुरा सन्निवेशवैशिष्ट्येन भावसौष्ठवेन वाच्यार्थगौरवेण च तत्त्वजिज्ञासारसिकानां सहृदयानां न केवलं श्रोत्रसुखमादधाति, परं तापत्रयपरीतानां दुष्पूरकामोपहतधैर्यकञ्चुकानां चेतसामपि परं परितोषमुपजनयति। सा चात्र यथायोगमुपन्यस्यते प्रियपाठकानामुपदेशकृते।

"श्वेतकेतुर्हाऽऽरुणेयः पञ्चालानां समितिमेयाय"—अधिगतानेकविद्यः अरुणस्य पौत्रः श्वेतकेतुर्नाम कश्चिद् ब्राह्मणवटुः स्वकीयविद्यावैशारद्यं प्रख्यापयितुं पञ्चालदेशीयराजसभां जगाम। गत्वा च तत्र राज्ञः प्रवाहणस्य सान्निध्यमलञ्चकार।

अथैवमखर्वगर्वोद्धतमानसं मानसमाकाङ्क्षिणं तं समालक्ष्य जीबलस्यापत्यं—जैबलिः प्रवाहणो नाम राजा तद्वैदुष्येऽनादरमादर्शयन् प्लुत्या सम्बोधयन्नाह—"कुमारानु त्वा अशिषत् पिता ?" इति। राज्ञैवमाकारितः श्वेतकेतुरनाकलितसंशयमाह—'अनु हि भगव इति।" हे भगवन्, अनुशिष्टोऽस्मि पित्रेति निश्चयमवेहीत्यर्थः।

राजा प्रवाहणस्तु तथाऽपि तद्विद्यावैशारद्ये समुपजातं संशयजातमपनेतुमपारयन्, तदीयज्ञानगौरवं परीक्षितुकामः प्रथममिदं पप्रच्छ—"वेत्थ यदितोऽधि प्रजाः प्रयन्तीति ?"—पञ्चत्वमापन्ना जना इतोऽस्मान्मर्त्यलोकात् यत् अधि ऊर्द्ध्वं गच्छन्ति, तत् किं जानासि ? जानासि चेत् कथयेत्यभिप्रायः।

श्वेतकेतुस्तु राज्ञः प्रश्नार्थमनधिगतत्वादपूर्वमिवाऽऽकलयन् सप्रश्रयमाह—"न भगव इति"—त्वया यत् पृष्टं, तन्न जानामीत्यर्थः। अथैवं प्रथमप्रश्नोत्तरे दत्तजलाञ्जलिः श्वेतकेतुर्यदा मौनमाललम्बे, न वाग्विमोकं चकार, तदा खलु राजा प्रवाहणः कौतूहलमपाकर्त्तुमक्षमी भूयोऽपि वाचा वदनं युयोज। सोऽपृच्छत्—"वेत्थ यथा पुनरावर्त्तन्ता ३ इति ?" प्रारब्धकर्मफलभोगावसाने प्रकृतं देहमपहाय लोकान्तरं प्रस्थिता देहिनः यथा—येन प्रकारेणास्मिन लोके ततः पुनरागच्छन्ति, तन्नु जानीषे ? इति प्रश्नार्थः। तञ्च प्रश्नमुपश्रुत्य तदर्थञ्चाविज्ञातपूर्वमवधार्य श्वेतकेतू राजानमाह—"न भगव इति।"

अथैवं प्रश्नद्वयीमुत्तरितुमपारयन्नपि वटुरेष भवेदपि विषयान्तरे लब्धप्रवेश इति मनसि समाकलय्य पुनरपि राजा तमपृच्छत्—"वेत्थ देवयानस्य पितृयानस्य च व्यावर्त्तना ३ इति"—

ज्योतिरादिमार्गो हि 'देवयान'-नाम्ना, धूमादिमार्गश्च 'पितृयान'-नाम्ना श्रुतिस्मृतिप्रसिद्धः। तत्र देवयानेन पथा प्रस्थितानामवधिर्ब्रह्मलोकः, पितृयानेन गच्छताञ्चावधिश्चन्द्रलोकः। समान्तरालवर्त्तिनोरनयोः पथोर्यत्र परस्परं विच्छेदः सम्पद्यते, तत् किं विजानासि ? जानासि चेत्, कथयेत्यभि-

प्रायः। अत्रापि श्वेतकेतुरात्मनोऽज्ञतां प्रकटयन्—"न भगव" इत्याह।

अथैवं राजा प्रवाहणः प्रश्नत्रयेऽपि श्वेतकेतोरप्रतिभानमाकलय्य भूयोऽपि द्युलोकविषये तस्य बोधसम्पदं बुभुत्सुः पुनरपि प्रश्नमवातारयत्—"वेत्थ यथाऽसौ लोको न सम्पूर्यत ३ इति।"

अस्माल्लोकादनुदिनमूर्द्ध्वं प्रयद्भिरगणितैर्जीवैः सुमहत्त्वेऽपि दृष्टपर्यन्तः सोऽसौ द्युलोकः किमिति न पूर्यते ? येन पुण्यवतामपि केषाञ्चिन् तत्र स्थितिलाभो दुर्घटो भवेत्। यदि नाम तल्लोकस्यापरिपूर्त्तौ किमपि निदानमवगच्छसि, तर्हि स्फुटमाचक्ष्व इति। राज्ञैवमापृष्टः श्वेतकेतुर्यथापूर्वमन्ववदन् —"न भगव इति"—त्वदुक्तप्रश्नोत्तरं नाहं जानामीत्याशयः।

चतुर्थेऽपि प्रश्नेऽनाप्तप्रतिभानं श्वेतकेतुं पुनरपि परीक्षितुकामः प्रवाहणः प्रश्नान्तरमुपचिक्षेप—अये श्वेतकेतो, "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति"—द्यु-पर्ज्जन्य-पृथिवी-पुरुष-योषिद्रूपासु पञ्चस्वाहुतिषु मध्ये योषिद्रूपायां पञ्चम्यामाहुतौ रेतोरूपा आपः येन प्रकारेण पुरुषपदवाच्याः तत्तद्देहिपदेन व्यवहार्या भवन्ति, तज्जानीषे किम् ? यदि जानासि, तर्हि, निवेदय तत्प्रकारं यथायथमिति। श्वेतकेतुस्तु प्रश्नार्थमवगम्य स्वस्य च तद्विषये ज्ञानदारिद्र्यमवधार्य सविषाद इव सविलक्ष इव सदैन्य इव चाऽऽत्मनो ज्ञानदौर्बल्यमावेदयन् सावधारणमाह राजानम्—"नैव भगव' इति।

एवमेकैकशः पञ्चस्वपि राज्ञः प्रश्नेषु प्रतिभानहीनः श्वेतकेतुर्यदा त्रपाभरावनतशिरा विषादविशेषवशात् म्लानवदनस्तूष्णीमवातिष्ठत, तदा प्रज्ञाभिमानदृप्तो राजा प्रवाहणः स्ववचोभङ्ग्या तदीयां प्रज्ञामन्तरुपहसन्निव सोत्प्रासमवोचत्—श्वेतकेतो, "अथो नु किमनुशिष्टोऽवोचथाः ? यो हि इमानि न विद्यात्, कथं सोऽनुशिष्टो ब्रुवीतेति।"

ये ते पञ्च प्रश्ना मया त्वयि समुपन्यस्ताः, ते खलु सद्गुरूपदेशवारिविशोधितहृदयैः शिष्यजनैरवश्यमेव वेदनीया भवितुमुचिता भवन्ति ; येन खलु तेऽपि नैव विज्ञायन्ते, तेन हि विद्याभिमानमपहाय सदस्यसंवादचर्चा-

मपि समुत्सृज्य स्वगोष्ठीसंवादेनैवाऽऽत्मा विनोदयितव्यः। स कथमनपत्रप इव गुरुमात्मानमधः पातयन् 'अहमनुशिष्टोऽस्मि'—आचार्योपदेशमधिगम्य नितरां लब्धविद्योऽस्मीति ब्रूयात्, अतस्त्वमपि कथम् 'अनुशिष्टोऽस्मि' इति ब्रवीषि ? नैतत् त्वया युक्तमुक्तमित्याशयः। प्रज्ञाप्रकर्षाभिमानिना राज्ञा प्रवाहणेनैवं सनिकारमिव प्रत्याख्यातः श्वेतकेतुरात्मानमकृतार्थमाकलयन् तस्माद् राजसदसः सत्वरमभिनिर्गत्य स्वकीयपराभवप्रकारमनुचिन्तयन् पितरमभिप्रतस्थे।

---

## चातकसन्देशः

[ निबन्धकः—मल्लभूमीराजधानी-विष्णुपुरवास्तव्यवैद्याचार्य-श्रीभोलानाथ-कविराज-विद्यानिधि-सरस्वती-कविभूषणः ]

श्रीमन् पयोद न भवान् न पयो ददाति
मिथ्या विभीपयति*भीषणगर्जितैः किम्।
त्वय्येव निर्भरवतां बत चातकानां
नान्या गतिर्भवति नाथ पिपासितानाम् ॥१॥

त्वं जीवनप्रद निजेन हि जीवनेन
संजीवयन्नवसि चातकजातमेतत्।
मा गर्ज वर्जय सुदुर्जयवज्रपातं
न ह्याश्रितेषु महतां प्रतिकूलताऽस्ति ॥२॥

---

* अत्र विभीषयतीति पदं व्यक्तमेव प्रामादिकम्।

वज्रं विसर्जयसि गर्जसि दुर्जय त्वं
सौदामिनीं कलयसि स्फुरितां पयोद ।
आसारमाशु यदि मुञ्चसि चातकोऽयं
सर्वं सहेत न बिभेति च मोदते च ॥३॥

यद् वारि वारिद समुज्झसि मुह्यतां न-
श्चञ्चुग्र एव हि तदञ्चति हन्त नाशम् ।
नैवान्तरं विशति नस्तृषितान्तराणां
का वा दशाऽद्य भविता बत चातकानाम् ॥४॥

आशा ममास्य न कृशा न तृषा निवृत्ता
वृत्ता न तृप्तिरुपपत्तिविशेषलिप्सोः ।
त्वञ्चापि मुञ्चसि रसं कणशः कथञ्चित्
किञ्चिद् विचारय पयोधर चातकस्य॥५॥

धाराधर प्रबलधारसुवर्षणेन
त्वं प्लावयन् जगदिदं सदयं दयालो ।
यन्मेऽल्पमेव वितरस्यतिकातरस्य
तत् पातकं फलति मे हतचातकस्य॥६॥

यज्जृम्भते त्वयि घने रसनेव विद्युद्
विस्फूर्जथुर्दशनघर्ष इवोत्थितश्च ।
यत्त्वं न बिन्दुमपि वर्षसि कालिकोऽपि
तत् पातकस्य फलितं मम चातकस्य ॥७॥

गम्भीरतां वहसि गर्जसि मन्दमन्दं
विद्युल्लतां कलयसि त्वमनन्तलीलाम् ।
इत्याशुवर्षणमिहानुमितं सहर्षं
हा शारदोऽसि मम वारिद चातकस्य ॥८॥

जानामि नाहमिह पात्रमपात्रकं वा
मेघेषु मेघ निखिलेषु वदान्यबुद्ध्या ।
आकालिकेऽपि मयका वत चातकेन
नीयाशया त्वयि तदर्थितमर्थहीने ॥९॥

त्वं चातकं हतकमेतमहो विहाय
तोयानि तोयद विमुञ्चसि सञ्चितानि ।
एवं त्वमार्त्तजनजीवनपालकोऽपि
हंहो यशांसि विनिहंसि न किं स्वकानि ॥१०॥

आस्तां क्षिताविह महान् रसवान् सरस्वान्
आस्तां च झर्झरकरोऽम्बुद निर्झरोऽपि ।
अर्थी रसस्य तु पिपासितचातकोऽयं
प्रार्थी तवैव भवति प्रकृतिप्रसङ्गात् ॥११॥

आस्तामखातमुत खातमपारशातं
ख्यातं विभातु च सरोवरजातमेतत् ।
पातं तु पातकभयादिह चातकोऽयं
न श्लाघते जलद लाघवसम्भवाच्च ॥१२

भागीरथी भवतु तीर्थमिदं पवित्रं
भव्या भवन्तु सरितः परितः पराश्च ।
अम्भोद तेऽम्बुकणचुम्बनलोलुपस्य
नान्यत्र धावति मतिर्मम चातकस्य ॥१३॥

नद्यो हि नीचगतिशीलतया न सेव्याः
प्रक्षीणजीवनतया च तथैव कूपाः ।
इत्याकलय्य जलद त्वदृतेऽभिमानी
पानीयमिच्छति कुतोऽपि न चातकोऽयम् ॥१४॥

मूर्द्धानमूर्द्ध्वं धृतमेतमियं तृषार्त्ता
प्राणात्ययेऽपि खलु चातकजातगोष्ठी ।
त्वत्तोऽन्यतो न हि घन प्रणनं करोति
साध्वीव पत्युरपरत्र मनोऽनुरक्तम् ॥१५॥

कालोदितोऽसि रसदोऽसि घनोऽसि मेघ
दिव्योऽसि भव्यतमजीवनधारणोऽसि ।
तेजोधरोऽसि नितरामिति चातकेन
स त्वं तृषार्त्तहृदयेन मयाश्रितोऽसि ॥१६॥

हे देव सेवकमिमं त्वमवेहि मेघ
नान्यं शरण्यमपरं* कमपि स्मरामि ।
प्राणप्रदायमवतो भवतोऽस्तु कीर्त्ति-
र्मा भूदकीर्त्तिरिह चातकमान्नतस्ते ॥१७॥

निन्दन्ति दुर्दिनमिति त्वयि नित्यसक्ते
सर्वं दिनं जलधराऽऽत्मसुखार्थिनस्तु ।
पश्यन्ति चातककुलस्य दशां न चास्य
स्वार्थोद्यता न हि विदन्ति परस्य दुःखम् ॥१८॥

नान्यो भवानिव महानिह कोऽपि मेघ
स्वीयेन कोऽन्यमभिरक्षति जीवनेन ।
सञ्जीवयस्यहह जीवनसम्प्रदाना-
जीमूत चातकमिमं किमतः प्रदेयम् ॥१९॥

त्वं जीव जीवनद जीवनसम्प्रदायी
मायीव धारयसि रूपमनेकरूपम् ।
तत्त्वं तवोत्तममवैति न चातकोऽयं
को वा विनिर्णयति कर्म गभीरमूर्त्तेः ॥२०॥

---

* अत्रान्यापरशब्दयोरन्यतरस्यावकरत्वं स्फुटमेव ।

न स्फूर्जथुं गणयति व्यथते न शम्पा-
सम्पाततोऽपि सततं वत चातकोऽयम्।
नर्नर्त्ति हर्षवशतः स्वत एव देव
प्राप्तोदये भवति भृत्य इव स्वनाथे ॥२१॥

आलोक्य ते सकललोकविलोकनीयं
रूपं मयूरनिकरोऽपि करोति नृत्यम्।
आमोदमेति च पयोधर चातकोऽयं
को वा श्रिया न सुखमेति महाशयानाम् ॥२२॥

लब्धोदये त्वयि पयोधर धीरवर्गः
क्षेत्रं विशेषयति तत्र निषेकहेतोः।
नैवास्ति ते यदि पुनर्घन पीनभावो
बीजस्य तत्र पततोऽस्ति ममेव नाशः ॥२३॥

तोयं पयोधर विमुञ्च विमुञ्च शीघ्रं
व्यग्रं भवन्तमनुपश्यति चातकोऽयम्।
कोऽयं नयस्तव न रक्षसि कातरं यद्
हन्ताऽऽतुरे क्षयमिते किमु भेषजेन ॥२४॥

गर्जन् प्रदर्शय सुदर्शन मूर्त्तिमुग्रां
वज्रस्वनेन जनय प्रसभं भयं वा।
चेतांसि वा जलद कम्पय शम्पया त्वं
जीवत्ययि त्वयि विमुञ्चति चातकोऽयम्(?) ॥२५॥

तृष्णापरीतहृदयः सदयं प्रति त्वां
गत्वाशया यदि महाशय वञ्चितः स्याम्।
दुर्दैवमेव घन तन्मम चातकस्य
लाभाय कस्य न भवानिव कल्पवृक्षः ॥२६॥

एकान्तकान्त तव कान्तगुणावलीनां
नान्तं गता वयमिमे वयसां जघन्याः ।
मन्यामहे तव कृपाभृत एव धन्या-
स्तच्चातकेषु कुरु दृष्टिमिमेषु*मेघ ॥२७॥

हे मेघ चातकमिमं प्रति सम्प्रति त्वं
किञ्चिद् विमुञ्च ननु सञ्चितपूर्वमम्भः ।
लम्भो†ऽस्य सम्भवतु मे तव कीर्त्तिरस्तु
दातुर्ग्रहीतुरपि तूर्णमिहास्तु सिद्धिः ॥२८॥

मल्लभूमीराजधानीश्रीविष्णुपुरवासिना ।
श्रीभोलानाथवैद्येन सन्देशोऽयं विनिर्मितः ॥२९॥

पौर्णमास्यां शुचौ शाके ऋतुबाणपुराणमे ।
गुरुदेवप्रसादेन काव्यमेतत् प्रकाशितम् ॥३०॥

येन व्यरचि सन्धिबोधममलं स्तोत्रावली व्याहृता
भोलानाथसुभाषितं निगदितं नामामृतं निर्मितम् ।
बद्धा तद्धितकारिका सुकलिता श्रीसूक्तिरत्नावली
भोलानाथभिषक् स विष्णुपुरभाक् काव्येऽत्र नव्ये कृती ॥३१॥

---

* अत्रापि 'इमेषु' इति पदम् प्रामादिकम् ।

† लम्भशब्दोऽसाधुः, लाभ इत्येवात्र युज्यते प्रयोक्तुम् ।

# सरलचित्सुखीसारम्

[ निबन्धकः—श्रीरमेशचन्द्रतर्कतीर्थः ]

( पूर्वतोऽनुवृत्तम् )

राजा ॥—श्रुतं स्वप्रकाशलक्षणं तदुपपादनञ्च, निःसन्दिग्धा जाताः परिषदस्तावदस्मिन् विषये। किन्तु न केवलेन लक्षणेन कस्यचिद्वस्तुनः सिद्धिर्भवति, प्रमाणापेक्षा हि वस्तूनां स्थितिः। अतोऽत्र प्रमाणमस्ति न वेति पर्यनुयोगो भवति परिषदाम्।

तार्किकः ॥—भो राजन्! अवधीयतामं तावन्मे वचनं सिद्धान्तश्रवणरनिकेन शास्त्ररहस्याभिज्ञेन राजर्षिवर्येण। न हि प्रभवति किमपि प्रमाणं स्वप्रकाशवस्तुसाधनाय, यतोऽत्र नास्ति प्रत्यक्षस्य प्रसरः, वादिनां विवादाभावापत्तेः, नहि प्रत्यक्षेण सिद्धे प्रमेये विवदते कश्चित्। नापि अनुमानं तादृशार्थस्यैव कुत्राप्यसिद्धेः तत्र साधनप्रयोगायोगात्। एवमन्येषामपि प्रमाणानामविषयत्वमवगन्तव्यम्।

वेदान्ती ॥—अस्ति स्वप्रकाशे प्रत्यक्षम् अनुमानम् आगमादिकञ्च यथास्वं सर्वमपि प्रमाणम्, तत्र स्वानुभवसिद्धस्य परस्मै बोधनं प्रत्यक्षेण न, शक्यसम्पादमिति प्रथममनुमानमुपन्यस्यते। प्रमाणप्रवृत्तेः प्राक् स्वप्रकाशार्थस्य उभयेषां वादिप्रतिवादिनाम् असिद्धौ सत्यामपि अनुभूतिद्वारेणैव तत्साधनं सम्भवति, तथाहि,—विमता **अनुभूतिः अनुभूतिव्यवहारहेतुप्रकाशः अनुभूतित्वात् ( यत् न एवं तत् न एवं )** यो न अनुभूतिहेतुप्रकाशः सा न अनुभूतिः **यथा घटः** इत्यस्ति अनुमानं प्रमाणं स्वप्रकाशे। प्रकाशस्य यत्किञ्चिद्व्यवहारहेतुत्वस्य नैयायिकादिभिरप्यङ्गीकारात् सिद्धसाधनता स्यादिति अनुभूतिग्रहणम्, न हि अनुभूतौ अनुभूतिव्यवहारहेतुप्रकाशत्वं परैरङ्गीक्रियते। अतस्तस्यैव साधनमत्राभिप्रेतम्।

राजा ॥—भो विपश्चिद्वर्याः, संशयाकुला मे पुनरियं परिषत् ज्ञानात्मनः प्रकाशविषये वादिनामेतेषां विवादात् । एके वादिनः वदन्ति,—अनुभूतिर्नानुभूतिहेतुप्रकाशः, अपरे च अनुभूतिः अनुभूतिहेतुप्रकाश इति प्रतिवदन्ति, कोऽत्र निर्णयः, तच्छ्रवणाय सज्जा इयं परिषत् ।

तार्किकः ॥—भो राजवर्य ! वयमपि वराकाणामेतेषामद्वैतिनां प्रमाणतन्तुं खण्डशो विच्छिन्द्याम । ननु भोः स्वप्रकाशवादिन् ! किमस्ति अनुभूतिहेतुप्रकाशः कुत्रचित् प्रसिद्धः, यस्य प्रसाधनाय प्रतिज्ञेयं ते सफला भवेत् ? वस्तुतः तादृशस्य साध्यस्य अप्रसिद्धेः **अप्रसिद्धविशेषणः पक्षः** सञ्जातः, तथाच न ते अभिप्रेतसिद्धिः । न हि कश्चिदनुन्मत्तः अप्रसिद्धमाकाशकुसुमं क्वापि साधयितुं प्रयतते ।

वेदान्ती ॥—भो तार्किकवर, कथमुच्यते भवता अत्र विशेषणस्य ( साध्यस्य ) अप्रसिद्धिरिति ? **न च** एतद् युक्तम्, यतः अस्ति तावत् अनुभूतिः भवतामपि सुप्रसिद्धा, **अनुभूतिव्यवहारस्य हेतुभूतः प्रकाशः ( परेषाम् )** भवताम् **अपि हि प्रसिद्धः** । स च प्रकाशः अनुभूतेरतिरिक्तः तत्स्वरूपो वा इत्यत्रैव विवादः, अस्माभिस्तु तादृशप्रकाशस्य अनुभूतेः स्वरूपत्वमेव साध्यते । **ततोऽनुभूतेः तत्स्वरूपत्वप्रतिज्ञा उपपद्यते** । पक्षे ईदृशी साध्याप्रसिद्धिस्तु अनुमानप्रयोजकतया अलङ्कार एव ; वह्निमत्तादीनामपि महीधरादिसम्बन्धस्य अनुमानात् प्राग् अप्रसिद्धस्यैव साधनात्, अन्यथा पूर्वमपि तस्य पक्षे प्रसिद्ध्यङ्गीकारे सिद्धसाधनतापातादनुमानाप्रवृत्तिर्भवेत् ।

तार्किकः ॥—मैवं वादीः अनुभूतिव्यवहारहेतुभूतः खलु अस्ति अनुव्यवसायः, स हि व्यवसायभूतघटाद्यनुभूतेः, घटादिमहं जानामीत्यादिरूपेण प्रकाशकः । स च अनुव्यवसायः अनुभूतिरूपतया तव पक्षकुक्षौ प्रविष्ट एव, एवं च पक्षैकदेशे **अनुव्यवसायज्ञाने साध्यस्य सिद्धत्वात् भागे सिद्धसाधनता** दोषस्ते समापतितः ।

वेदान्ती ॥—**न च** एतद् वक्तुमर्हति भवान्, यतः अस्माभिर्न अनुव्यवसायः अङ्गीक्रियते, अतः **तत्स्वरूपस्यैव असम्मतत्वेन तस्य** ( अनुव्यवसायस्य )

—

दूषणम्, तदा सा अप्रसिद्धविशेषणता वराकी दत्तजलाञ्जलिरेव भवेत्। केवलान्वयिनि अन्वयव्यतिरेकिणि च सपक्षस्य विद्यमानत्वात् तत्र साध्यस्य प्रसिद्धेरप्रसिद्धविशेषणतायाः शङ्कैव नास्ति, केवलव्यतिरेकिणि अपि सा चेत् न दूषिका, तदा हता बतेयम् अप्रसिद्धविशेषणता कथातपस्विनी। अपि च यदि केवलव्यतिरेकिणि अप्रसिद्धविशेषणता न दोषः तदा 'वसुधा शशविषाणोल्लेखिता वसुधात्वात्' इत्यादिना केवलव्यतिरेकिणा अनुमानेन शशविषाणादेरपि सिद्धिः स्यात्।

वेदान्ती ॥—अस्तु एवम्, मया किल भवतः श्रद्धामनुरुध्य केवलव्यतिरेकि अनुमानमुपन्यस्तम्, वेदान्तिनस्तु केवलव्यतिरेकि अनुमानं नैवोररीकुर्वन्ति, अत एव भवतु एतत् अन्वयव्यतिरेकि अनुमानम्, यत्र तादृशः साध्यः प्रसिद्धः, स एव अस्माकं सपक्षो भविष्यति, का हानिः ?

तार्किकः ॥—तथा सति तत्र हेतोः वृत्तावपि भागे सिद्धसाधनताया दुष्परिहरत्वं भवत आपद्यते एव। अवृत्तौ च असाधारणानैकान्तिकता इति पूर्वोक्तदूषणद्वयसंप्रहारो दुर्निवारः।

वेदान्ती ॥—ननु उक्तमेव मया, यत्र स प्रसिद्धः सोऽनुव्यवसायः नास्माभिरङ्गीक्रियते, तत् कथमस्य धर्मिता, कथंतरां तत्र सिद्धता, कथंतमां च सिद्धसाधनता ? यदि साध्यसिद्धिः आवयोरुभयोः सम्मता अभविष्यत् तदा अयं दोषः समापतिष्यत्, न तु अस्ति एवम्।

तार्किकः ॥—नैवम्, न (च) हि स्वस्य असिद्धतामात्रेण परसिद्धे साध्यवति धर्मिणि सिद्धसाधनतायाः परिहारः सम्भवति। अन्यथा अन्यथाख्यातिवादिभिः नैयायिकैः अख्यातिवादिनं मीमांसकं प्रति "इदं रजतज्ञानं पुरोवर्त्तिविषयं रजतार्थिनी नियमेन पुरोवर्त्तिप्रवृत्तिहेतुत्वात्" इत्थं केनचिद् हेतुना रजतज्ञानस्य पुरोवर्तिविषयत्वे साधिते वेदान्तिना च अनिर्वचनीयपुरोवर्त्तिरजतविषयत्वेन सिद्धसाधनत्वे उद्भाविते न अस्माकं तत् अनिर्वचनीयपुरोवर्त्तिरजतविषयत्वं सिद्धमिति वचनमात्रेण, अन्यथाख्यातिवादिनश्चरितार्था भवेयुः। न चैवं भवेत्, वेदान्तिना मिथ्यारजत-

विषयत्वेन सिद्धसाधनतायां प्रदर्शितायां नैयायिकैस्तद्वारणाय एव यत्नः कर्त्तव्यः न तु मम मते मिथ्यारजतविषयत्वं न सिद्धम् अपि तु देशान्तरस्थसत्य-रजतविषयत्वमित्युक्तिमात्रेण अस्ति दोषतो निस्तारः ॥

वेदान्ती ॥—भवदुक्तोऽयं प्रयोगः पुरोवर्त्तिरजतादिविषयकत्वं रजतज्ञान-स्यानङ्गीकुर्वन्तं मीमांसकं प्रत्येव युक्तम्, न पुनः अनिर्वचनीयवादिनं प्रति अयं प्रयोगः, तस्य मते सिद्धसाधनतापत्तेः ।

तार्किकः ॥—तर्हि अनुव्यवसायवादिनं मां तार्किकं प्रति भवतोऽपि अनुभूतिव्यवहारहेतुभूतप्रकाशसाधकोऽयं प्रयोगो न भवितुमर्हत्येव, भागतः सिद्धसाधनताप्रसङ्गात् । स्वप्रकाशवादिनं प्रत्यपि न युज्यते सिद्धसाधनत्वात् इति मूकीभाव एव ज्यायान् भवतः कुतर्ककर्कशमर्कटभावात् ।

वेदान्ती ॥—ननु अनुभूतेः "विवादपदेन" विवादपदम् इति विशेषणस्य प्रक्षेपेण मदुक्तसाध्यविशिष्टस्य भवता अङ्गीकृतस्य अनुव्यवसायस्य पक्षपक्षात् व्यवच्छेदात् न अस्य धर्मिभागता, अतः पक्षैकदेशे साध्यस्य सिद्ध्यभावात् न भागे सिद्धसाधनतादोषः ॥

तार्किकः ॥—अहो मौग्ध्यम्, एवमेकमनुसंधित्सतोऽन्यत् प्रच्यवतेऽति-:चतुरस्य आयुष्मतः । तथा अनुव्यवसायस्य पक्षबहिर्भावे सिद्धसाधनतापरि-हारे अपि, तस्य साध्यविशेषणप्रसिद्धस्थलत्वेन निश्चितसाध्याधिकरणस्य सपक्षस्य सत्ताया अभ्युपगमात् भवदुक्तानुमाने हेतोः केवलव्यतिरेकित्वाभावः तदवस्थः। सपक्षभूतस्य तस्य अनुव्यवसायस्य अनङ्गीकारे च विशेषणी-भूतस्य साध्यस्य अप्रसिद्धिरूपस्य दोषस्य उपपत्तेः घट्टकुटीप्रभातायितम् । अथ ब्रूषे परं प्रत्येव तस्य अनुव्यवसायस्य साध्यप्रसिद्धिस्थलता उदाह्रियते अस्माभिः न तु अस्माकं सः अभिप्रेतः, तर्हि तं प्रति केवलव्यतिरेकिप्रयोगा-योगः । अपि च एतद्दूषणभिया यदि अन्वयव्यतिरेकित्वं हेतोरङ्गीक्रियते तदा अनुव्यवसायस्य भवताऽसम्मतत्वे विवादपदमितिविशेषणस्य अव्यावर्त्त-कत्वेन वैफल्याद् व्यर्थविशेषणतादोषः, दृष्टान्तासिद्धिश्च । यदि स वः सम्मतः तदा स्वप्रकाशताऽसिद्धिः, ज्ञानस्य तेन अनुव्यवसायेन प्रकाश्यत्वस्य स्वीकृतत्वेन

परप्रकाश्यत्वसिद्धेः। ततश्च स्वप्रतिज्ञाव्याघातात् निग्रहस्थानापातः श्रीमतः। **किञ्च** अनुभूतिव्यवहारहेतुत्वं किं प्रकाशस्य विशेषणमुत उपलक्षणम्? इति वक्तव्यम्, **तद्व्यवहारहेतुत्वस्य प्रकाशविशेषणतायां कैवल्ये तस्य** व्यवहार-हेतुत्वरूपविशेषणधर्मस्य **अभावात्** तदा **स्वयंप्रकाशताऽभावः** स्यात्। तादृशव्यवहारहेतुत्वपदेन **व्यवहारहेतुत्वयोग्यतायां च** विवक्षितायां, सा विशेषणीभूता योग्यता **प्रकाशस्वरूपातिरिक्ता** अवश्यम् अङ्गीकार्या, विशिष्ट-विशेषणयोर्भेदस्य सिद्धत्वात्, ततश्च **स एव दोषः**, मोक्षदशायां प्रकाशाति-रिक्ताया योग्यताया असम्मतत्वेन भवतः प्रतिज्ञाहान्यादिसमापत्तेः॥

वेदान्ती॥—अये भोः, अनुभूतिव्यवहारहेतुत्वं न प्रकाशस्य विशेषणम् अपि तु उपलक्षणम्, तथाच **तदुपलक्षितप्रकाशात्मत्वमेव साध्यम्** पर्यवस्यति, तेन च नोक्तदोषापातः। उपलक्षणस्य यदा कदाचित् स्थित्या व्यावर्त्तकत्वेन सर्वदा स्थितेरनावश्यकत्वात्, मोक्षदशायां तादृशहेतुत्वस्य तद्योग्यत्वस्य वा अभावेऽपि न स्वप्रकाशत्वाभावप्रसङ्गः। नहि काकोपलक्षितं देवदत्तगृहं काकाभावे अतद्गृहं भवति, नवा जपाप्रभोपहितः स्फटिको जपापनये अस्फटिको भवति।

तार्किकः॥—**तथाऽपि** न युक्तः भवतः पक्षः, यतोऽस्मिन् पक्षे भवन्तं पृच्छामि, तादृशव्यवहारहेतौ यत् उपलक्षितत्वमुच्यते भवता तदुपलक्षितत्वं किं विशेषणमुत उपलक्षणम्, उपलक्षितत्वस्य विशेषणत्वे **उपलक्षितत्वस्य साध्यान्तर्भावेन** मोक्षादिदशायां तादृशधर्माभावात् **स एव** स्वयंप्रकाशताऽभावः **दोषः**। उपलक्षितत्वस्य अपि उपलक्षणत्वपक्षे तस्य साध्ये **अनन्तर्भावे च प्रकाशरूपताया एव साध्यत्वात् तस्याश्च अन्यत्रापि** अनुव्यवसायादौ **सिद्धत्वात् न केवलव्यतिरेक्यनुमानावकाशः।**

वेदान्ती॥—एवं चेत्, अन्यथा अनुमीमहे,—**अनुभूतिः अनुभाव्या न भवति अनुभूतित्वात्** या अनुभाव्या सा न अनुभूतिः यथा घटः, एवमपि अनुभूतेरनुभाव्यत्वासिद्धौ स्वप्रकाशतासिद्धिः॥

तार्किकः॥—अहो! अनुमानकुशलता श्रीमतः, अत्रापि किं पूर्ववत्

अप्रसिद्धविशेषणतादोषं न पश्यति भवान्, अपि अस्ति कुत्रचित् अनुभाव्यत्वाभावः प्रसिद्धः यत् स साध्यतामुपेयात्, नहि खपुष्पमिव अनुभाव्यत्वाभावं साधयितुमर्हति कश्चित् कुत्रापि, तस्मात् न सम्भवति तादृशमनुमानम्, तत्रापि अप्रसिद्धविशेषणताया दुष्परिहरत्वात्। ज्ञानं वेद्यं वस्तुत्वात् घटवत् इति प्रतिप्रयोगसम्भवाच्च।

वेदान्ती ॥—महात्मन्! भवतोऽयं प्रयोगः नास्मत्प्रतिपक्षसाधनाय प्रभवति, हेत्वसिद्धिप्रभृतिदोषग्रासात्, तथाहि,—यदिदं वस्तुत्वं हेतूकृतं भवता, तत् किं काल्पनिकसत्त्वमुत वास्तवसत्त्वम्, तत्र न तावत् काल्पनिकसत्त्वम् भवतोऽसिद्धेः, नच वास्तवसत्त्वम्, अद्वैतवादिमते घटादौ दृष्टान्ते तदभावेन साधनविकलत्वात् दृष्टान्तस्य, अथवा किं वस्तुत्वं काल्पनिको धर्मः उत अकाल्पनिकः? न तावत्काल्पनिकः भवतोऽसिद्धेः, न चाकाल्पनिकः ममासिद्धेः।

तार्किकः ॥—आत्मदोषमनवलोक्य परेषु तमारोपयतः महतीयं ते चातुरी। भवदुक्ते पूर्वोक्ते 'अनुभूतित्वादि'ति हेतुशरीरे अनुभूतित्वमिति यो धर्मः, स किं कल्पितः, उत अकल्पितः सः? न तावत्कल्पितः ममासिद्धेः, नापि अकल्पितः तवासिद्धेः, अतः साधारण्येनैवायं हेतुरिति वक्तव्यम् त्वया, एवं मयाऽपि उच्यते सत्ताधिकरणत्वलक्षणवस्तुत्वस्य अवधीरितकल्पिताकल्पितविशेषस्य हेतुत्वे न कस्यापि दोषस्य अवकाशः, भवतः अनुभूतित्वादिवद् हेतुत्वोपपत्तेः।

वेदान्ती ॥—ननु तथापि नास्ति ते दोषात् निस्तारः, 'अनुभूतिः वेद्या वस्तुत्वाद्' इत्यत्र भवतः प्रतिप्रयोगे किमिदं साध्यमानं वेद्यत्वं वास्तवमुतावास्तवम् आहोस्विद् व्यावहारिकम् अथवा साधारणम्? आद्ये घटादौ दृष्टान्ते वास्तववेद्यत्वस्य ह्यस्माभिरनङ्गीकारात् साध्यविकलं निदर्शनम्। अतश्च सपक्षविपक्षव्यावृत्तत्वाद् असाधारणानैकान्तिकत्वेन हेतोः अस्मान् प्रति वेद्यत्वरूपसाध्यस्य साधने असामर्थ्यात्। इतरेषु अवास्तवस्य, व्यावहारिकस्य, साधारणस्य वा वेद्यत्वस्य साधनपक्षेषु अस्माभिः अनुभूतौ तथाविधवेद्यत्वस्य स्वीकारात् ते सिद्धसाधनत्वम्। अस्माभिः अनुभूतौ पारमार्थिकवेद्यत्वमेव नाङ्गीक्रियते, अवास्तवादिरूपवेद्यत्वाङ्गीकारे नास्ति अस्माकं काचिदपि विप्रतिपत्तिः।

तार्किकः ॥—मैवं वक्तुं शक्यते भवता, घटादेरिव ज्ञानस्य व्यावहारिक-प्रमाणसिद्धवेद्यत्वापादनेऽपि तस्य स्वप्रकाशत्वासिद्धेः स्वसिद्धान्तत्यागप्रसङ्गात्। अपि च भवतो ज्ञानस्य वेद्यत्वस्वीकारे तस्य जडतापातेन जडेनैव ज्ञानेन अर्थ-प्रकाशसिद्धौ 'घटादिप्रतीत्यन्यथानुपपत्त्या ज्ञानस्य प्रकाशरूपता अङ्गीकार्या' इत्यादिदूषणजातस्य अस्मासु आरोपासम्भवात्, स्वमते एतेषां दूषणानामनु-षङ्गाच्च। किञ्च तुष्यतु दुर्ज्जन इति न्यायेन अन्यथा प्रतिप्रयोगमुदाहरामः। तथाहि,—किञ्च अनुभूतिपदं स्वगोचरगोचरज्ञानजन्यम् पदत्वात् कुम्भ-पदवत्। यथा हि कुम्भपदं स्वविषयज्ञानविषयज्ञानजन्यं, तथा अनुभूतिपदमपि। नहि कुम्भपदविषयं कुम्भपदार्थमजानतः कुम्भपदप्रयोगः सम्भवेत्, एवञ्च सति अनुभूतिपदार्थविषयकं ज्ञानं सिद्धम्, कुतः अनुभूतेः स्वप्रकाशत्वम्?

वेदान्ती ॥—मैवं वक्तव्यम्, शब्दनित्यत्ववादिनां मीमांसकानां मते पदस्य शब्दात्मकत्वेन अजन्यत्वात्, अस्मन्मतेऽपि शब्दानाम् आ सृष्टेः ब्रह्मज्ञानपर्यन्तं वा स्थिरत्वाभ्युपगमात् आधुनिकजन्यत्वस्य असिद्धेः।

तार्किकः ॥—एतन्मतयोरपि आनुपूर्वीविशिष्टतया पदप्रयोगस्य जन्यत्वात् पदस्यापि जन्यत्वं वक्तुं शक्यत एव।

वेदान्ती ॥—अस्तु एवं, तथापि पृच्छ्यते भवान्, ननु किमत्र गोचर-शब्देन विषयमात्रमुच्यते? किंवा वाच्योऽर्थः लक्ष्यो वा? न तावत् प्रथम-द्वितीयौ वाच्योऽर्थो विषयमात्रं वेति पक्षौ शक्याङ्गीकारौ सिद्धसाधनतापत्तेः, अभ्युपेयते हि अनुभूतिशब्दवाच्यस्य अन्तःकरणवृत्तिविशिष्टस्य ज्ञानस्य ज्ञानगोचरता; तृतीये लक्ष्यार्थपक्षे अभिमते तु विवादपदं पदं स्वलक्ष्यविषयज्ञान-जन्यं पदत्वादिति प्रयोगशरीरं स्यात्, तथा सति भगीरथखातावच्छिन्नजल-प्रवाहादिरूपमुख्यार्थविवक्षया यदा गङ्गादिपदानि प्रयुज्यन्ते तदा तत्र स्वलक्ष्यगोचरादिरूपार्थगोचरज्ञानजन्यताऽभावेन साध्याभावाधिकरणे गङ्गापदे पदत्वहेतोर्विद्यमानत्वेन व्यभिचारः।

तार्किकः ॥—मैवं वादीः अत्र लक्षकपदं पक्षीकृत्य लक्षकपदत्वेन हेतुना लक्षकगङ्गादिपदवत् इति तीरादिलक्षकगङ्गादिपदहृष्टान्तेन लक्ष्यज्ञान-

**जन्यत्वानुमानात्**, तथा च एवं प्रयोगशरीरम्,—लक्षकपदं स्वलक्ष्यज्ञानजन्यं लक्षकपदत्वात् तीरादिलक्षकगङ्गादिपदवत् इति। अनेन च अनुमानेन अनुभूति-पदलक्ष्यस्य स्वरूपज्ञानस्य ज्ञानविषयत्वसिद्धेः, तस्य स्वप्रकाशत्वहानिः। न चास्ति अस्मिन्ननुमाने सिद्धसाधनताव्यभिचारादिपूर्वोक्तदोषप्रसरः। तथाहि— अनुभूतिपदवाच्यस्य अन्तःकरणवृत्तिविशिष्टज्ञानस्य भवन्मते ज्ञानगोचरतायाः स्वीकारेऽपि तस्य अत्र साध्यकुक्षौ अप्रवेशान्न सिद्धसाधनतादोषः, लक्षकपद-त्वस्य सर्वत्र पक्षे स्वपक्षे च लक्षकपदे विद्यमानत्वात् विपक्षे च असत्त्वान्न व्यभिचारः, पदमात्रं पक्षीकृत्य लक्षकपदत्वादिति हेतौ उक्तौ भागासिद्धिबाधौ स्याताम् इति लक्षकपदमित्युक्तम् अतो न एतौ दोषौ, उभयवादिसंप्रतिपन्नानु-भाव्यवाचकानुभूतिलक्षकपदं चात्र विवक्षितं, तेन नाश्रयासिद्धि-सिद्धसाधने।

वेदान्ती॥—[ जोषं चिन्तयन् स्वगतम् ] अतिप्रौढयुक्तिकोयम्। [ प्रकाशं ] शृणुमस्तावत्।

तार्किकः॥—**किंच** भवन्तमधुना पृच्छामि **अनुभूतिपदाभिधेयस्य स्वप्र-काशत्वमभिधीयते भवद्भिः उत लक्ष्यस्य?** तत्र **न आद्यः** पक्षः अभ्युपगम-योग्यतामावहति भवतः, अनुभूतिपदाभिधेयस्य स्वप्रकाशत्वस्वीकारे **अप-सिद्धान्तापातात्**, अङ्गीकृतैव भवता इतः प्राक् 'अनुभूतिपदवाच्यस्य वृत्तिविशि-ष्टस्य ज्ञानगोचरते'ति। **न द्वितीयः** लक्ष्यत्वपक्षः शक्याश्रयः, यतः अनुभूति-पदलक्ष्यस्य भवदभ्युपगतस्य ब्रह्मणः स्वप्रकाशत्वे अभिप्रेते **प्रतिवादिनं प्रति आश्रयासिद्धेः**। न तावत् भवतः अनुभूतिपदलक्ष्यस्य यस्य कस्यचित् प्रमातुर्वा प्रमेयस्य वा स्वप्रकाशता सिषाधयिषिता, अपि तु ब्रह्मणः, तस्य **सकलधर्मातीतस्य अद्वितीयस्य** अनादिनिधनात्मभूतज्ञानस्य **परैरनङ्गीकारात्**।

भवतु एतद् यथा तथा, सर्वचूर्णीकरणी प्रक्षिप्यते अधुना गदा, या भवतो युक्तिराशीन् चूर्णपेषं पेक्ष्यति। स्वप्रकाशसाधनाय यदि भवान् किञ्चित् प्रमाणम् उपन्यस्यति तदा अनिच्छतोऽपि ते स्वप्रकाशत्वाभिमतस्य ज्ञानस्य तत्प्रमाणवेद्य-त्वमापतति, ततश्च स्वप्रकाशताहानिः। एतद्दूषणभिया चेद् नास्ति मे स्वप्रकाशे प्रमाणमिति वदन्ति, साधकाभावेन न स्वप्रकाशतासिद्धिः तदियम् औपनिषदानाम्

उभयतःपाशा रज्जुः। अनया बद्धस्य इतश्चेतश्च पदमपि चालयितुमशक्नुवतो समाधिरेवावलम्बनं समाधिवित्तस्य। सावधानं शृणु,—पुनरप्युद्घुष्यते सारतो मया,—स्वप्रकाशतायाः सति प्रमाणे तद्वेद्यत्वमसति च साधकाभावादेव न तत्सिद्धिरिति सैषौपनिषदानामुभयतःपाशा रज्जुरित्यलमतिविस्तरेणेति।

वेदान्ती ॥—[ स्वगतं चिन्तयति ] वक्रोक्तिचतुरोऽयं तार्किकः प्रतिवन्द्या वक्रीलया च जेतव्यः, तन्मे भवतु सर्वावभासकः स्वयंज्योतिः परमात्मा शरणं, भासताम् अकैतवपरपदनिरतस्यापि मनसि तत्प्रसादात् कैतवपद्धतिः। पवित्र-देवालयवर्त्मभासकसौरकरसम्पर्केण किं न भासते संकीर्णाशुचिचाण्डालवीथिका? यया खलु ज्ञानप्रभया विशुद्धम् अद्वैतविज्ञानं भासते तयैव तार्किकाणां कापथोऽपि समुद्दीप्यताम्।

राजा ॥—भोः स्वप्रकाशवादिन्, दृढीभूत इदानीमयं पूर्वपक्षः स्वप्रकाशवादे, आरोप्य विविधं दूषणजातम् उपपादितमनेन नैयायिकधुरन्धरेण अनुभूतेरपर-वेद्यत्वम्।

"न यत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
यमेव भान्तमनुभाति सर्वं
यस्य भासा सर्वमिदं विभाति ॥"

तस्य खलु ज्ञानरूपस्य परमात्मनः स्वप्रकाशत्वं तथा साधनीयं भवताऽद्वैत-वादिना स्वप्रकाशभासितात्मना, यथा न स्पृशेदत्र पूर्वपक्षोक्तदोषजातम्।

( नेपथ्ये वेलावसानसूचकः शङ्खध्वनिः )

वैतालिकः ॥—( नेपथ्ये )

संसृत्याविरतं समस्तदिवसं निर्विद्य खिन्नो रविः
स्वज्योतीरतया धियेव विभया संरक्तयाऽऽलिङ्गितः।
यात्यस्तं किरणं समुह्य करणं योगीव विद्वान् स्वयं
सन्ध्येयं सवितुर्महस्तदघहं सन्ध्यायतामागता ॥

राजा ॥—भो भोः शास्त्रपारदृश्वानो विपश्चिद्धुरंधराः, अद्य इहैव भवतु विरतिः सभायाः.—

सायंतनाय विधये महिता भवन्तो
गच्छन्तु साकमनया सभयोत्कयाद्य ।
श्यामाह्वये रविकरैश्च सहैव ताव-
दायान्तु निर्णयकृते विहितस्वकृत्याः ॥

( कृतयथार्हाभिवादनाः सर्वे प्रस्थिताः )

इति सरलचित्सुखीसारे रूपकप्रतिरूपके काव्ये स्वप्रकाशप्रमाणपूर्वपक्षो नाम द्वितीयदृश्यम् ।

---

## स्वर्गत-श्यामादासवाचस्पतेर्जन्मपत्रम्

[ निबन्धकः—श्रीअतुलकृष्ण-ज्योतिषार्णवः ]

१७८६।१०।२०।४४।२७।३०

आत्मकारको मङ्गलः

दारकारको बृहस्पतिः

प्र
च४ म५
शु १ के १
वरुण
र २५ बु २४
श १५ रा १५
लं
बृ १६

अस्य जातकस्य दशमाधिपती रविर्लाभाधिपतिर्बुधश्च चन्द्रस्य केन्द्रे स्थितौ अतोऽस्य अखण्डसाम्राज्यपतित्वयोगो विद्यते । यथा

"भाग्येशराज्येशधनेश्वराणामेकोऽपि चन्द्राद् यदि केन्द्रवर्त्ती ।
स्वपुत्रलाभाधिपतिर्गुरुश्चेदखण्डसाम्राज्यपतित्वमेति ॥" पराशरः ।

पुनः, "लाभेशविद्येशधनेश्वराणामेकोऽपि चन्द्राद् यदि केन्द्रवर्त्ती।
स्वपुत्रलाभाधिपतिर्गुरुश्चेदखण्डसाम्राज्यपतित्वमेति ॥" इति पराशरः।

धनबुद्धिनैपुण्ययोगोऽपि वर्त्तते। यथा—

"सहस्ररश्मितश्चन्द्रे कण्टकादिगते सति।
स्वल्पमध्यवरिष्ठानि धनधीनैपुणानि च ॥" इति पराशरः।

अतः पूर्वोक्तयोर्योगयोर्वृद्धिः सञ्जाता।

पुनः— "रेवतीकृत्तिकास्वातिपुष्यस्थश्च भृगोः सुतः।
करोति भूभुजां नाथमश्विन्यापि स्थितोऽपि वा ॥"
इति रणवीरज्योतिर्निबन्धे।

पुनः— "मानाधिपे चतुर्थस्थे लाभनाथेन संयुते।
भाग्यनाथेन वा युक्ते बहुवाहनदेशभाक् ॥ सर्वार्थचिन्तामणिः।

अस्य जातकस्य दशमभावो रोगाधिपेन दृष्टः, अतोऽस्य रोगमूलाद् धनागमः।

पुनः दशमाधिपतिः रविः, रविः आरोग्यकारकः। ज्योतिषचिकित्सित-व्यवहारशिल्पादिकारकः बुधः दशमस्थानं रविबुधाभ्यां दृष्टम्—अतः अस्य भैषज्यप्रयोगमूलात् आरोग्यादिकारणाद् बहुधनागमः।

आत्मकारकस्य (ग्रहसेनापतिकुजस्य) लग्नाधिपतिषष्ठाधिपतित्वोपेतस्य जायाभावस्थस्य भावाधिपेन सह मुख्यसम्बन्धो द्रष्टव्यः। पुनः तुङ्गी अतः गर्वितग्रहश्चन्द्रः तेन सह सप्तमभावस्थः, पुनः आत्मकारकः मङ्गलः दारकारकेण गुरुणा सह षष्ठाष्टमसम्बन्धं कृतवान्। पुनः पञ्चमाधिपगुरुणा सह अपि लग्नाधिपकुजस्य षष्ठाष्टमसम्बन्धो वर्तते, अतः कदाचिद् गृहसुखनाशः सूचितः। पुनः वरुणो धीस्थानस्थितः, अतः अस्य परदुःखकातरता; तन्मोचने आग्रहश्च। अतः अनेन आरोग्यशाला प्रतिष्ठिता। चतुर्थभवनाधिपतिः शनिः तुङ्गः सन् व्ययस्थः, अतो गृहादिदानं सूच्यते

———

सुगृहीतनामधेय-विविधगुणाधिष्ठान-माननीय-विचारपति-श्रीलश्रीयुक्त-
मन्मथनाथमुखोपाध्याय-न्यायाधीश-न्यायरञ्जन-धर्मालङ्कार एम्
ए., बि. एल्. महोदयानां कलिकालप्रधान-धर्माधिकरणे
प्रधानविचारपतिपदप्राप्तिमुपलक्ष्य

## संस्कृत-साहित्य-परिषदः

## अभिनन्दनम्

जातो विप्रकुले क्रियाभिरमले विद्यायशःसङ्कुले
शीलं चारुसुधाकरेण तुलितं प्राप्तः प्रशस्तं परम्।
विद्यां धीरजनानुरागपरमां यातः पुरा शैशवात्
श्रीमन् मन्मथनाथ दीव्यसि भवे त्वं सर्वमानास्पदम् ॥१॥

आकृत्या निवसन्ति मानवगुणा दिव्या इति व्याहृति-
स्त्वय्येवाऽऽप्तफला गुणैकनिलये रूपेऽप्यहो मन्मथे।
सौभाग्यं विनयो मतिर्निरुपमा तेजस्तथा कालत-
स्त्वय्येकत्र भवन्ति तेन भवतः सम्मानना भूयसी ॥२॥

निष्णातो व्यवहारशास्त्रविषये नानारहस्याश्रये
कालीक्षेत्रगते विचारकपदं न्यायालये जग्मिवान्।
काले तत्र महाप्रशस्तिमधुना सम्प्राप्य सर्वाधिकं
न्यायाधीशपदं गतो विजयसे श्रद्धाकृताभ्यर्चनः ॥३॥

नानासद्विधिसाधनाय परितो ये ये समाजाः स्थिताः
प्रायस्तेषु तवातिरागसहितं साहायकं दृश्यते।
एकस्त्वं बहुधा भवन्नविरतं ब्रह्मेव मायात्मना
कल्याणं जगतस्तनोपि सुतरां नैपुण्यतो लीलया ॥४॥

श्लाघायोग्यगुणेषु सत्स्वपि सदा नाहङ्कृतिं विन्दसे
सर्वैरेव समं समं व्यवहरन्नुत्कर्षतः पूज्यसे।

मान्यान् मानयतो गुणैकनिलयान् दण्ड्यांस्तथा शासतः
सर्वत्रैव तवाद्य गौरवकथा विद्वद्भिरावोप्यते ॥५॥
धर्म्यन्यायगृहे विचारकपदं सर्वप्रधानं श्रिता
वङ्गीयेषु पुराऽभवन्न बहवः स्वल्पा ह्यमी संख्यया ।
तेष्वेवान्यतमस्त्वमित्यतितरां माहात्म्यमुज्जृम्भते
स्वर्गाधीश्वरता न चैकनियता तेनापि सा शस्यते ॥६॥
सार-श्रीगुरुदास इत्यभिहितः कीर्त्या जगद्विश्रुतः
सद्वृत्तिः श्वशुरस्तवातिपरमो दीने दयादक्षिणः ।
जामाताऽपि समस्त्वमेष महता दृष्टान्तभूतः स्थित-
स्तेनामुष्य वियोगजेन तमसा नात्यन्धमुर्वीतलम् ॥७॥
सम्प्राप्ता मह्देव संस्कृतसभा वङ्गेषु पारीक्षिकी
सौभाग्यं यदियं भवन्तमसमं लब्ध्वा भृति द्योतते ।
तस्यां सभ्यपदं गता बहुमता विद्याविशुद्धान्तरा
धीराः कृत्स्नकलापसिद्धिविषये नातिश्रमं बृण्वते ॥८॥
आधारं समवेक्ष्य गौरवमयं लोकातिगं कौतुकाद्
वाणी त्यक्तरमाविरोधनियमा त्वय्यस्ति सार्द्धं तया ।
योगर्द्धिप्रचिते तपोवनपदे स्वाभाविकं शात्रवं
जन्तूनामपि यन्न तिष्ठति तपःशक्तिस्ततः कारणम् ॥९॥
लोकातीतयशःप्रसादविशदो धर्माधिकारे चिरं
धर्म्यानेव विधीनुपेत्य परमः सम्राट्सहायो भवन् ।
मर्यादां सुकृतस्य रक्ष परितो न्यायानुवृत्तिं श्रितः
सम्राट् त्वादृशबान्धवैः सुनिपुणै राज्यस्थितौ शक्तिमान् ॥१०॥
विबुधपरिषदेषा त्वत्पदप्राप्तिहर्षान्
समुपनयति भक्त्या पत्रमात्रं स्वशक्त्या ।
विसदृशमिति मत्वा न त्वया त्याज्यमेतन्
किमु न वहति शम्भुः पत्रकेणैव लोपम् ॥११॥

परममाननीय-मुम्बइमठाधीश्वर-
श्री १००८ रामानुजाचार्यमहोदयानां
शुभागमनमुपलक्ष्य
संस्कृत-साहित्य-परिषदः

# अभिनन्दनम्

श्रीरामानुज रामशुद्धचरितस्यास्मिन् धरामण्डले
कीर्त्तिस्ते सुकृतस्य राजति चिरं चित्रा पवित्रक्रमा ।
धन्येयं धरणी भवत्पदमिता सारं मितञ्च ब्रुवन्
यत्त्वं धर्ममतानि तत्र कृपया विस्तार्य तां तृप्यसि ॥१॥

युष्माकं वचसा हि नास्तिकगणा भीतिं गताः सन्ततं
धर्मे लीनहृदः प्रयान्ति सुतरामानन्दमत्युज्ज्वलम् ।
अद्येयं परिपत्तवाऽऽगमवशाद् दीप्तं भविष्यज्जयं
सम्भाव्य प्रचितं सुखं परिगता सार्थाऽस्तु तत्कामना ॥२॥

सूरो यथैकत्र पदं दधानो विश्वं समग्रं प्रकरोति दीप्तम् ।
मुम्बय्यधिष्ठानगतस्तथा त्वं सर्वत्र भूमौ सुकृतं तनोषि ॥३॥

सदा किलेयं परिषत् सयत्ना कर्त्तुं परं संस्कृतशास्त्ररक्षाम् ।
धर्मस्य तच्छास्त्रमिहावलम्बो धर्माधिपास्तत् परिरक्षतेमाम् ॥४॥

एषा संस्कृत-साहित्य-परिषन्मलिना कृशा ।
करुणामृतसेकेन तामुज्जीवय साम्प्रतम् ॥५॥

---

परममाननीय-गोवर्द्धनमठाधीश्वर-
श्री १००८ भारतीकृष्णतीर्थशङ्कराचार्यमहोदयानां
शुभागमनमुपलक्ष्य

## संस्कृत-साहित्य-परिषदः

# अभिनन्दनम्

यो भारतीकृष्ण इति प्रसिद्धः श्रीशङ्कराचार्यपदोपनामा ।
श्रीभारतीं कृष्ण इवाधिकृत्य लोके वचोवैभवमातनोति ॥१॥

नानाविधामेव समेत्य भाषां वचःप्रपञ्चेन जनेषु धर्मम् ।
प्रचार्य यः शास्त्रमतानि रक्षन् श्रीशङ्कराचार्य इवैति पूजाम् ॥२॥

यः शान्तमूर्तिः सितभानुतुल्यो हितः सुराचार्य इवोपदेष्टा ।
आचारपूतः सुपवित्रधामा सोऽयं जयत्युद्धतनास्तिकारिः ॥३॥

एह्येहि गोवर्द्धनपीठनाथ गृहाण सानुग्रहमर्घभारम् ।
इमान् समेतान् कुरु दीनवर्गांस्त्वदीयपादाब्जपरागपूतान् ॥४॥
त्वं साम्प्रतं धर्मविपत्प्रपाते श्रीशङ्कराचार्य इवाऽऽश्रयो नः ।
को वा दिनेशं परिहाय लोके ध्वान्तक्षयं क्षेममयं विदध्यात् ॥५॥

तदिह तव कृपाभिः शाश्वतं क्षेममास्तां
प्रचितहितवरेण्यं भारतं भातु लोके ।
परिषदियमनल्पां शास्त्रधर्माभिरक्षां
तव हितमय सौम्याऽऽशीर्वचोभिर्विधत्ताम् ॥६॥

एषा संस्कृत-साहित्य-परिषन्मलिना कृशा ।
करुणामृतसेकेन तामुज्जीवय साम्प्रतम् ॥७॥

---

# पारिषदं किञ्चन निवेदनम्

पाठकमहाभागाः, कस्य वाऽन्यस्य कथ्येतामृते भवद्भ्यः परिषदः सौभाग्यञ्च दौर्भाग्यञ्च। अत एव यथा यथाकालमाकलितं परिषदो लाघवमपि भवद्भ्यो निवेदयितुं न विषीदामः, एवमेव समापतितं याद्दच्छिक-मुच्छूनत्वमपृच्छद्भ्योऽपि युष्मभ्यो विज्ञापयितुं न क्षीणमपि वैलक्ष्यमुप-लक्षयामः। कल्याणकामिन एव जानीमः श्रीमतः श्रीमत्याः संस्कृत-साहित्य-परिषदः, तस्याश्च समापन्ने सुखञ्च दुःखञ्च भवद्भ्य एव निवेदनीये इति कृत्वाऽद्य तथाविधं कञ्चन वृत्तान्तं विज्ञापयितुमुद्यताः स्मः। स चास्मिन्नेव वर्षे सम्पद्यमानानि सुखदुःखाभ्यामापन्नसत्ताकानि कानिचन विशेषाधिवेशनानि नाम। जानीमहे श्रुतवृत्तान्ता भवन्तः सममेवाश्रुणा विषादमपि विहास्यन्ति, समं दुःखेन सुखमप्याकलयिष्यन्ति, समं निश्वासेनोच्छ्वासोऽपि भवतां वक्षःस्थलमुद्वेलयिष्यतीति।

**शङ्कराचार्य-रामानुजाचार्ययोरागमने**।—व्यतीते सौराषा-ढस्योनत्रिंशद्दिवसे शनैश्चरवासरे सायं सार्धसप्तमहोरायां गोवर्धनमठाधीशाना-मष्टाधिकैकसहस्रश्रीकाणां जगद्गुरुशङ्कराचार्यपदाधिकृतानां माननीयानां भारतीकृष्णतीर्थस्वामिपादानाम्, तथा मुम्बइमठाधीश्वराणाम् अष्टाधिकैक-सहस्रश्रीकाणां माननीयानां रामानुजाचार्यपादानाञ्च शुभागमनमुपलक्ष्य परिषदो विशेषाधिवेशनमेकमजनि।

तत्र पूर्वत एव परःशताः पारिषद्याः परिषत्प्रासादे समागतास्तत्र-भवतामागमनं प्रतिपालयन्तः सौत्सुक्याः समासत। अवसरे चास्मिंस्त्रिदण्ड-कमण्डलुभ्यामाविष्कृतयतिभावाः काषायवासिनोऽवगुण्ठनापवारितमुण्डित-शिरस्काः प्रसादसौम्यमुखमण्डलानुमेयाभ्यन्तरयमादिशुद्धयस्तत्रभवन्तः शङ्कराचार्यपादाः पूर्वं सभामण्डपमलमकार्षुः। समागतेषु तेषु सविस्मयाः

ससम्भ्रमाः सोत्कण्ठाश्च पारिषद्या युगपदासनमपास्य स्वागतेन तत्रभवतः सभाजयन्त उदतिष्ठन्।

कृतासनपरिग्रहेषु तत्रभवत्सु परितः समुपवेष्टुमिच्छत्सु सभ्यसमाजेषु क्षणनिस्तब्धेषु च सभामण्डपेषु उदतिष्ठदुदात्तस्तूर्यध्वनिरार्याणां रामानुजाचार्यपादानाम्। विहस्तयतेव नास्तिकानामास्तिकविद्वेषविषमाणि मनांसि, फूत्कारासादनव्याजेन तूलोत्क्षेपमुत्क्षिपतेव सर्वानवैदिकान् मतवादान्, निरस्यतेव दिशाममङ्गलभूतानाधिव्याध्यादीन् अदीनेनानेन तूर्यनादेन कार्यान्तरव्यासक्तानामपि चेतांसि द्रागुन्मुखान्यासन्, किं पुनर्वक्तव्यं तदागमनमेवातिवेलं प्रतिपालयतामनन्यव्यापाराणां परिषत्सदस्यानामिति। मुहुरापूरिततूर्याणामनुजीविवर्याणामनुपदमुत्तरीयमात्रद्वितीयवसना निर्वसनव्यसनैकदीक्षितजीवना निर्वासनास्तत्रभवन्तो रामानुजाचार्यपादाः पादस्पर्शेन परिषत्प्रासादभूमिं पुनानाः सभामण्डपं प्राविशन्। तिरस्कृतकुबेरविभवानामपि तत्रभवतामुत्तरीयद्वितीयीकनामालोकयतां सदस्यानामाविरभूत्मनसि कालिदाससूक्तिरियम्—'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः' इति।

यथायोग्यमासनमलङ्कृतवत्सु समास्तारेषु सर्वसम्मत्या तत्रभवन्तः शङ्कराचार्यपादाः सभापतिपदमलमकार्षुः। परिषत्पक्षतस्तत्रभवतोः शङ्कराचार्यरामानुजाचार्ययोरभिनन्दनपत्रद्वयी पठितासीत्। सेयं पत्रिकाया-मस्यामेव प्रविलोकिता वाचकमहाभागैः। बहवः सदस्यास्तत्रभवतोर्गुणानधिकृत्य वाग्विस्तरं विरचय्य श्रोतॄणां श्रवणानि पर्यतर्पयन्। अन्ते च तत्रभवद्भिः शङ्कराचार्यपादैर्मधुरया विविधवक्तव्यविषयभासुरया सरलसरलया च गीर्वाणवाण्या परिषदः समुन्नतिं कामयमानैः स्वयञ्च परिषत्समुन्नतये यथाशक्ति साहायकं प्रतिशृण्वद्भिर्वाचामुपसंहारः कृतः।

**कविराजशिरोमणेर्महाप्रयाणे।**—सौरश्रावणस्याष्टादशदिवसे शुक्रवासरे सायं सप्तमहोरायां परिषदोऽन्यतमसहकारिसभापतीनां

कविराजशिरोमणीनां श्यामादासवाचस्पतिमहोदयानां परलोकप्रयाणमुपलक्ष्य किञ्चिद् विशेषाधिवेशनं समजनि ।

तत्र श्रीमतां दीनबन्धुसाहित्यशास्त्रिमहोदयानां प्रस्तावक्रमेण श्रीमतां तारानाथतर्कतीर्थमहोदयानां समर्थनेन सर्वसम्मत्या च म० म० श्रीयुक्तदुर्गाचरणसांख्यवेदान्ततीर्थमहोदयाः सभापतिपदमलमकार्षुः । सभापतीनां निर्देशमुपलभ्य श्रीयुक्त-सीतानाथसिद्धान्तवागीशमहोदयाः परासोस्तत्रभवतो गुणावलीमुल्लिख्याभिभाषणं प्रदत्तवन्तः । समनन्तरञ्च सम्पादकश्रीमदमरेश्वरठाकुरमहोदयेन सभायामनुपस्थितानां म० म० श्रीगुरुचरणतर्कदर्शनतीर्थमहाशयानां म० म० श्रीयुक्त-गणनाथ-सेन-महोदयानाञ्च पत्रद्वयी वाचिता । श्रीयुक्त-यतीन्द्रनाथ-वसुज-श्रीयुक्त-तारानाथतर्कतीर्थमहोदयाभ्यां कविराजशिरोमणेर्विविधं वैशिष्ट्यमुल्लिख्य मनोरममभिभाषणं प्रदत्तम् । श्रीयुक्तचण्डीचरणतर्कतीर्थमहोदयेन स्वरचितैः सरलसंस्कृतभाषामयैः कियद्भिश्चित् पद्यैः शोकः प्राकाशि ।

अन्ते परिषत्सम्पादकेन श्रीमता अमरेश्वरठाकुरेणाधोनिर्दिष्टः प्रस्तावः समुपस्थापितः—

"संस्कृतसाहित्यपरिषदोऽकृत्रिमसुहृदां दयादाक्षिण्यादिगुणनिवहविभूषितानां विश्रुतयशसां धर्मैकप्राणानां वैद्यधुरन्धराणां परिषदोऽन्यतमसहकारिसभापतीनां श्यामादासवाचस्पतिमहोदयानां महाप्रयाणेन परिषदा अपूरणीया हानिरनुभूयते, हार्दिकः शोकश्च प्रकाश्यते" इति ।

सर्वसम्मत्या प्रस्तावोऽयं परिगृहीतः । ततश्च श्रीयुक्त-रामकृष्णचक्रवर्त्ति-एम, ए-महोदयेन "प्रस्तावस्यास्य प्रतिलिपिः शोकतप्तानां कविराजशिरोमणिपरिवाराणां सविधे प्रेषणीयेति" प्रस्तावः समुपस्थापितः । अयमपि प्रस्तावः सर्वसम्मत्या परिगृहीतः । ततश्च सभाभङ्गो जातः ।

**प्रधानविचारकपदप्राप्तौ** ।—व्यतीते सौरश्रावणस्याष्टाविंशदिवसे सोमवासरे सायं सप्तमघटिकायां माननीयविचारपतीनां विविध-

सद्गुणशालिनां श्रीयुक्तमन्मथनाथ-मुखोपाध्याय-महोदयानां वङ्गविषय-प्रधानधर्माधिकरणे प्रधानविचारकपदप्राप्तिमुपलक्ष्य विशेषाधिवेशनमेकं जातम् ।

तत्र श्रीयुक्तामरेश्वरठाकुरमहोदयानां प्रस्तावक्रमेण सर्वसम्मत्या म० म० श्रीमद् अनन्तकृष्णशास्त्रिपादाः सभापतिपदमध्यकार्षुः । परिषत् पक्षतः श्रीमन्तः कालीपदतर्काचार्यमहोदयाः स्वरचितम् अभिनन्दनपत्रमवाचयन् । तदिदमभिभाषणमन्यत्र द्रष्टव्यम् । श्रीयुक्तसीतानाथसिद्धान्तवागीशमहोदया रुचिरया भारत्या अभिनन्द्यस्य गुणावलीमुल्लिख्य वाचः प्रावर्त्तयन् । जात्यन्धेन श्रीमता कालीजीवनसाङ्ख्यतीर्थमहोदयेन संस्कृतभाषया सुन्दर-सुन्दरा वाचः प्रवर्त्तिताः । श्रीयुक्तामरेन्द्रमोहनतर्कतीर्थमहोदयेन स्वरचितं पद्यमयमभिनन्दनान्तरं पठितम् । ततः श्रीयुक्तयतीन्द्रनाथ-वसुजमहोदयेन सभापतेः म० म० श्रीमदनन्तकृष्णशास्त्रिमहोदयस्य धन्यवादे प्रदत्ते सभाभङ्गो जातः ।

**शिक्षाविभागपरिचालकसमागमे** ।—व्यतीते सौर-श्रावणस्य त्रयोविंशदिवसे बुधवासरे वङ्गप्रान्तीयशिक्षाविभागपरिचालकाः श्रीमन्तोऽपूर्वकुमारचन्द्रमहोदयाः परिषत्परिदर्शनार्थं समुपागताः । ते हि महात्मानः परिषदश्चतुष्पाठीं प्राचीनहस्तलिखितपुस्तकसम्भारं मुद्रित-पुस्तकागारं परिषत्सम्पादितानि पुस्तकानि चावलोक्य परां प्रीतिमाविर-कुर्वन् । तत्रभवद्भ्यश्च किञ्चनाभिनन्दनं परिषदा प्रदत्तम् इति शम् ।

---

# ग्रन्थनिकषः

**किङ्किणीमाला ।** प्रथमो गुम्फः । श्रीमहालिङ्गशास्त्रिविरचिता ।

प्राप्तिस्थानम्—Y. Mahalinga Sastri, M. A., B. L., 3 Madhavapuram, Mylapor, Madras.

लघुतराणां विचित्रविषयाणां खण्डकाव्यानां संग्रहरूपेऽस्मिन् प्रबन्धे कतिचिन् पद्यानि ग्रन्थकृता स्वमनीषिकयैवोपनिबद्धानि । कानिचिन् पुनराङ्गलभाषातोऽनूदितानि, एकञ्च ऋग्वेदतो लौकिकभाषायां विपरिणमितम् । अत्र! कविकुलचूडामणेः शेक्सपीयरस्य कतिचिन् सुमनोहराणि सुभाषितानि सरलया मधुरया चामरभारत्या सन्दृब्धानि कस्य वा सचेतनस्य श्रोतो नावर्जयेयुः । अत्रत्यानि नवनवानि च्छन्दांस्यपि प्रतिपादयेयुरमन्दमानन्दं रसिकजनेभ्यः । यद्यप्यन्तरान्तरा शब्दानां हठादाकृष्टत्वं समुपलभ्यते व्याकरणसंस्कारहीनानि च कतिचित् पदानि संलक्ष्यन्ते तथापि बहूनामेव पद्यानामत्रत्यानां सरसरमणीयतया सहृदयजनसंसेवनीयमिदं पुस्तकं सञ्जातम् । समास्वादयन्तामत्रत्यानि कतिचिन् पद्यानि वाचकमहाभागाः ।

६२ पृष्ठे जीवनजुगुप्साख्यं पद्यं शेक्सपीयरविरचितस्य ह्यामलेट्नाटकस्य प्रथिततमस्यांशस्यानुवादरूपं विलसति । वाचकमहोदयानां विचारसौकर्यायात्र मूलं महालिङ्गशास्त्रिमहोदयस्य पद्यानुवाद ओकमहोदयस्य च गद्यानुवादः सन्निवेश्यते ।

To be, or not to be: that is the question:
Whether 'tis nobler in the mind to suffer
The slings and arrows of outrageous fortune,
Or to take arms against a sea of troubles,
And by opposing end them? To die: to sleep:
No more; and by a sleep to say we end
The heart-ache and the thousand natural shocks,

That flesh is heir to, 'tis a consummation
Devoutly to be wish'd. To die, to sleep ;
To sleep : perchance to dream : ay, there's the rub.
For in that sleep of death what dreams may come
When we have shuffled off this mortal coil,
Must give us pause : there's the respect
That makes calamity of so long life ;
For who would bear the whips and scorns of time,
The oppressor's wrong, the proud man's contumely,
The pangs of despised love, the law's delay,
The insolence of office and the spurns
That patient merit of the unworthy takes,
When he himself might his quietus make
With a bare bodkin ? who would fardels bear,
To grunt and sweat under a weary life,
But that the dread of something after death,
The undiscover'd country from whose bourne
No traveller returns, puzzles the will
And makes us rather bear those ills we have
Than fly to others that we know not of ?
Thus conscience does make cowards of us all ;
And thus the native hue of resolution
Is sicklied o'er with the pale cast of thought,
And enterprises of great pitch and moment
With this regard their currents turn awry,
And lose the name of action.

स्यात् किं नु मे मृतवतः परमित्युपेल-
कातर्य एव कृपणोऽपि न मर्तुमीष्टे ।
अज्ञातरूपपदवीपरिमार्गणाद्-
प्यासन्नदुःखसहनं वरमित्यवेत्य ॥ १ ॥

अन्यथा,

कः कालस्योपमर्दं विविधमनुभवन् निष्कृपाणां तितिक्षुः
क्रौर्यं पश्यन् प्रभूणामविनयमवयन्नुद्धतानामवज्ञाम्

## ग्रन्थनिकषः

**किङ्किणीमाला ।** प्रथमो गुम्फः । श्रीमहालिङ्गशास्त्रिविरचिता । प्राप्तिस्थानम्—Y. Mahalinga Sastri, M. A., B. L., 3 Madhavapuram, Mylapor, Madras.

लघुतराणां विचित्रविषयाणां खण्डकाव्यानां संग्रहरूपेऽस्मिन् प्रबन्धे कतिचिन् पद्यानि ग्रन्थकृता स्वमनीषिकयैवोपनिबद्धानि कानिचिन् पुनराङ्गलभाषातोऽनूदितानि, एकश्च ऋग्वेदतो लौकिकभाषायां विपरिणमितम् । अत्र कविकुलचूडामणेः शेक्सपीयरस्य कतिचिन् सुमनोहराणि सुभाषितानि सरलया मधुरया चामरभारत्या सन्दृब्धानि कस्य वा सचेतनमश्चेतो नावर्जयेयुः । अत्रत्यानि नवनवानि च्छन्दांस्यपि प्रतिपादयेयुरमन्दमानन्दं रसिकजनेभ्यः । यद्यप्यन्तरान्तरा शब्दानां हठादाकृष्टत्वं समुपलभ्यते व्याकरणसंस्कारहीनानि च कतिचित् पदानि संलक्ष्यन्ते तथापि बहूनामेव पद्यानामत्रत्यानां सरसरमणीयतया सहृदयजनसंसेवनीयमिदं पुस्तकं सञ्जातम् । समास्वाद्यन्तामत्रत्यानि कतिचिन् पद्यानि वाचकमहाभागैः ।

६३ पृष्ठे जीवनजुगुप्साख्यं पद्यं शेक्सपीयरविरचितस्य हाम्लेट्नाटकस्य प्रथिततमस्यांशस्यानुवादरूपं विलसति । वाचकमहोदयानां विचारसौकर्यायात्र मूलं महालिङ्गशास्त्रिमहोदयस्य पद्यानुवाद ओकमहोदयस्य च गद्यानुवादः सन्निवेश्यते ।

To be, or not to be: that is the question:
Whether 'tis nobler in the mind to suffer
The slings and arrows of outrageous fortune,
Or to take arms against a sea of troubles,
And by opposing end them? To die: to sleep;
No more; and by a sleep to say we end
The heart-ache and the thousand natural shocks,

That flesh is heir to, 'tis a consummation
Devoutly to be wish'd. To die, to sleep ;
To sleep : perchance to dream : ay, there's the rub.
For in that sleep of death what dreams may come
When we have shuffled off this mortal coil,
Must give us pause : there's the respect
That makes calamity of so long life ;
For who would bear the whips and scorns of time,
The oppressor's wrong, the proud man's contumely,
The pangs of despised love, the law's delay,
The insolence of office and the spurns
That patient merit of the unworthy takes,
When he himself might his quietus make
With a bare bodkin ? who would fardels bear,
To grunt and sweat under a weary life,
But that the dread of something after death,
The undiscover'd country from whose bourne
No traveller returns, puzzles the will
And makes us rather bear those ills we have
Than fly to others that we know not of ?
Thus conscience does make cowards of us all ;
And thus the native hue of resolution
Is sicklied o'er with the pale cast of thought,
And enterprises of great pitch and moment
With this regard their currents turn awry,
And lose the name of action.

स्यात् किं नु मे मृतवतः परमित्युपेत-
कातर्य एव कृपणोऽपि न मर्तुमीष्टे ।
अज्ञातरूपपदवीपरिमार्गणाद्-
प्यासन्नदुःखसहनं वरमित्यवेत्य ॥ १ ॥

अन्यथा,

कः कालस्योपमर्दं विविधमनुभवन् निष्कृपाणां तितिक्षुः
क्रौर्यं पश्यन् प्रभूणामविनयमवयन्नुद्धतानामवज्ञाम्

## ग्रन्थनिकषः

**किङ्किणीमाला ।** प्रथमो गुम्फः । श्रीमहालिङ्गशास्त्रिविरचिता ।

प्राप्तिस्थानम्—Y. Mahalinga Sastri, M. A., B. L., 3 Madhavapuram, Mylapor, Madras.

लघुतराणां विचित्रविषयाणां खण्डकाव्यानां संग्रहरूपेऽस्मिन् प्रबन्धे कतिचिन् पद्यानि ग्रन्थकृता स्वमनीषिकयैवोपनिबद्धानि ; कानिचिन् पुनराङ्गलभाषातोऽनूदितानि, एकश्च ऋग्वेदतो लौकिकभाषायां विपरिणमितम् । अत्र कविकुलचूडामणेः शेक्सपीयरस्य कतिचिन् सुमनोहराणि सुभाषितानि सरलया मधुरया चामरभारत्या सन्दृब्धानि कस्य वा सचेतनस्य चेतो नावर्जयेयुः । अत्रत्यानि नवनवानि च्छन्दांस्यपि प्रतिपादयेयुरमन्दमानन्दं रसिकजनेभ्यः । यद्यप्यन्तरान्तरा शब्दानां हठादाकृष्टत्वं समुपलभ्यते व्याकरणसंस्कारहीनानि च कतिचित् पदानि संलक्ष्यन्ते तथापि बहूनामेव पद्यानामत्रत्यानां सरलरमणीयतया सहृदयजनसंमाननीयमिदं पुस्तकं सञ्जातम् । समास्वाद्यन्तामत्रत्यानि कतिचिन् पद्यानि वाचकमहाभागैः ।

६२ पृष्ठे जीवनजुगुप्साख्यं पद्यं शेक्सपीयरविरचितस्य हाम्लेट्नाटकस्य प्रथिततमस्यांशस्यानुवादरूपं विलसति । वाचकमहोदयानां विचारसौकर्यायात्र मूलं महालिङ्गशास्त्रिमहोदयस्य पद्यानुवाद ओकमहोदयस्य च गद्यानुवादः सन्निवेश्यते ।

To be, or not to be: that is the question:
Whether 'tis nobler in the mind to suffer
The slings and arrows of outrageous fortune,
Or to take arms against a sea of troubles,
And by opposing end them ? To die: to sleep :
No more ; and by a sleep to say we end
The heart-ache and the thousand natural shocks,

That flesh is heir to, 'tis a consummation
Devoutly to be wish'd. To die, to sleep ;
To sleep : perchance to dream : ay, there's the rub.
For in that sleep of death what dreams may come
When we have shuffled off this mortal coil,
Must give us pause : there's the respect
That makes calamity of so long life ;
For who would bear the whips and scorns of time,
The oppressor's wrong, the proud man's contumely,
The pangs of despised love, the law's delay,
The insolence of office and the spurns
That patient merit of the unworthy takes,
When he himself might his quietus make
With a bare bodkin ? who would fardels bear,
To grunt and sweat under a weary life,
But that the dread of something after death,
The undiscover'd country from whose bourne
No traveller returns, puzzles the will
And makes us rather bear those ills we have
Than fly to others that we know not of ?
Thus conscience does make cowards of us all ;
And thus the native hue of resolution
Is sicklied o'er with the pale cast of thought,
And enterprises of great pitch and moment
With this regard their currents turn awry,
And lose the name of action.

स्यात् किं नु मे मृतवतः परमित्युपेत-
कातर्य एव कृपणोऽपि न मर्तुमीष्टे ।
अज्ञातरूपपदवीपरिमार्गणाद-
प्यासन्नदुःखसहनं वरमित्यवेत्य ॥ १ ॥

अन्यथा,

कः कालस्योपमर्दं विविधमनुभवन् निष्कृपाणां तितिक्षुः
क्रौर्यं पश्यन् प्रभूणामविनयमवयन्नुद्धतानामवज्ञाम्

नीतेर्जानन्नभव्यां गतिमपि विमृशन् दैन्यमुच्चैर्गुणानां
नेच्छेदात्मोपघातं क्लमभरविवशो जीवयात्राप्रतोल्याम् ॥

न जाने किं जीवितं श्रेयः, उताहो मरणम्। किमहं प्राणानुपलालयन् रोषपरुषस्य विधेर्निर्घृणप्रहारानप्रतीकारं सहेय आहोस्विज्जीवितनिरपेक्षः पौरुषप्लवमासाद्य निरवधेर्दुःखोदधेः पारं जिगमिषेयम्। तिष्ठतु तावज्जीवितचिन्ता। अथ मरणं प्रतिपन्नं चेत् तदपि न सुधियो भयाय, निद्राया अभिन्नत्वात्। दीर्घनिद्रा हि मृतिपर्यायेषु प्राज्ञैः पठितैव। अपि नाम एवंविधेन महानिद्रापरपर्यायेण मरणेन भौतिकशरीरसुलभानि तानि तानि व्यलीकानि सुपरिहराणि भवेयुः। एतादृशीं परिणतिं को नाम नाभिनन्देत्।

अथवा किमनयायतिगतया चिन्तया। मरणमेव सर्वथा मयाऽभ्यवसेयम्। तत्साध्या निद्रा कस्य नाभिमता भवेत्। भवतु नामेयं सम्मता सर्वस्य। तथापि किं तत्र स्वप्नावकाशो न स्यात्। पार्थिवे पिण्डे परित्यक्तेऽपि चेतनाविरहसुलभं स्वापमनुभवतो नरस्य न जातु विश्रान्तिसुखपरिपन्थिनः स्वप्नाः प्रादुर्भवेयुः, इत्यत्र कः प्रत्ययः? इदमेव स्वप्ननिबन्धनं भयं नाद्यापि मनुजहृदयं जहाति। अन्यथा कृपाणिकाप्रहारमात्रनिर्वर्तनीयेन मरणेन को नामापरिमेयेभ्यः संसारदुःखेभ्य सपद्येव मोचयित्वात्मानं न गतव्यथं कुर्यात्।

———

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्

| | | |
|---|---|---|
| September 1934 | १८५६ शकीये भाद्र २७श वर्षस्य ५म-संख्या | Vol. XVII No. 5 |


## गायत्रीरहस्यम्


[ निबन्धकः—श्रीशरत्कमलन्याय-स्मृतितीर्थः ]


तत्रादौ गायत्र्याः स्वरूपमवगच्छामि, अवगते हि तत्स्वरूपे तद्-रहस्यं सुव्यक्तीभविष्यति। तथा चात्र सामवेदीयच्छान्दोग्योपनिषद्-वाक्यम्—

"वाग् वै गायत्री, वाग् वा इदं सर्व्वं
भूतं गायति च त्रायते च।" [ छान्दोग्योपनिषत् ३।१२।१ ]

तथाच—गोघटादिनामरूपविशिष्टं जगत् सूक्ष्माकारेण वाक्-स्वरूप एवावस्थितं यदा "इयं गौः" (१) "अयं घटः" (२) इत्याकारेण अभिहितं तदा गलकम्बलादिमत्त्वेन (१) कम्बुग्रीवादिमत्त्वेन (२) च स्थूलरूपतामाप्नोतीति--"गायति च" इत्यंशेन प्रतिपादितम्।

"कथं ते भयम्" (१) "मा भैः" (२) इत्यादिवाचा सर्वथा निर्भयोऽयं लोको रक्षितः स्यात्"—इति "त्रायते च" इत्यंशेन प्रतिपादितम्। एवं च गायत्री वाक्शक्तिस्वरूपा (१) त्राणकर्त्री च इत्यवगम्यते। सेयं वाक्स्वरूपा गायत्री शक्रादिभिर्दैवतैरेव स्तुता

"शब्दात्मिका सुविमलर्ग्यजुषां निधान-

मुद्गीथरम्यपदपाठवताञ्च साम्नाम्—" इत्यादि।

श्रीश्रीचण्डी। ५।१।

त्राणकर्त्री च गायत्री अर्गलास्तवद्वारा एवमाहूयते, यथा—

"तारिणि ! दुर्गसंसार-सागरस्य"।

"त्राणकर्त्री"ति (१) "तारिणीति" (२) च एकः एवार्थः। गौतमेन च महर्षिणा एषैव त्राणकर्त्री एवं स्तूयते—

"सर्वभूतारणि ! देवि ! नमस्ते परमेश्वरि।"

महर्षिगौतमकृतगायत्रीस्तवो द्रष्टव्यः।

अपि चैवं महर्षिणा व्यासेन स्मर्य्यते—

"गायत्री प्रोच्यते तस्माद् गायन्तं त्रायते यतः"।

आह्निकतत्त्वधृतव्यासवचनम्।

"गायन्तं" गायत्रीं जपन्तं साधकं यत इयं भक्तवत्सला देवी "त्रायते"—अतस्तस्या "गायत्री"ति सार्थकं नाम, नाम्नैवास्या भक्तवात्सल्यमवगम्यते, तदेतत् स्मर्य्यते महर्षिणा पतञ्जलिना—

"स्वाध्यायादिष्टदेवतासम्प्रयोगः।"

पातञ्जलयोगदर्शनसूत्रम्।२।४।

तथा च "अभिप्रेतमन्त्रजपादिलक्षणे स्वाध्याये प्रकृष्यमाणे योगिन इष्टाया अभिप्रेताया देवतायाः सम्प्रयोगो भवति, सा देवता प्रत्यक्षीभवतीति" इति वृत्तिकृद्व्याख्यानम्, भाष्यते च महर्षिणा व्यासेन—"देवा ऋषयः सिद्धाश्च स्वाध्यायशीलस्य दर्शनं गच्छन्ति कार्य्ये चास्य वर्त्तन्ते इत्यादि। गायत्री-जापकस्य गायत्री प्रत्यक्षा सती तं त्रायत इति सार्थकं तन्नामेत्यवधेयम्।"

अपि चात्र वेदनिरुक्तकारमहर्षियास्कनिर्वचनं यथा –

"गायतेः स्तुतिकर्म्मणः"

निरुक्ते दैवतकाण्डे छन्दोनिर्व्वचनप्रकरणं द्रष्टव्यम्।

तथा च स्तुत्यर्थकगैधातुनिष्पन्नत्वाद् गायत्रीशब्दस्य सर्व्वश्रेष्ठ-स्तुतिवाचकपदवर्णरूपा सा ( गायत्री ) इति फलितार्थः, यद्रूपेण या देवता स्तोतव्या सापि फलतो गायत्र्येव गायत्र्या विश्वरूपत्वा-दित्यतोऽपि गायत्र्याः सर्व्वश्रेष्ठस्तुतिवाचकपदवर्णत्वमवधेयम्।

"अपि च—"गायतो मुखादुदपतत् इति च ब्राह्मणम्"।

निरुक्ते दैवतकाण्डे छन्दोनिर्वचनप्रकरणं द्रष्टव्यम्।

तथा च सैषा गायत्री "गायतः" सृष्ट्यर्थं वेदगानं प्रकुर्वतः सृष्टिकर्त्तुः परमेश्वरस्य ब्रह्मणो "मुखात्" "उदपतत्" आविर्भूता यत-स्तस्माद्धेतोस्तस्या गायत्रीति सार्थकं नाम इति फलितार्थः। तामेतां स्मरन्ति—

(क) "विश्वस्य जगतो मित्रं विश्वामित्रं प्रजापतिः।
ॐकारपूर्व्वा गायत्री निर्जगाम ततो मुखात्॥"

हलायुधकृतब्राह्मणसर्वस्वधृतं महर्षियाज्ञवल्क्यवचनम्।

(ख) सर्व्वेषामेव वेदानां गुह्योपनिषदस्तथा।
सारभूता तु गायत्री निर्गता ब्रह्मणो मुखात्॥

ब्राह्मणसर्व्वस्वधृत-छन्दोगपरिशिष्टवचनम्।

(ग) अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः।
वेदत्रयान्निरदुहद् भूर्भुवःस्वरितीति च।
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥

ब्राह्मणसर्व्वस्वधृतमनुवचनम्।

(घ) तपसा सुसमृद्धस्य आदिसर्गात् स्वयम्भुवः।
ॐकारपूर्व्वा गायत्री निर्जगाम ततो मुखात्॥

ब्राह्मणसर्व्वस्वधृत-योगियाज्ञवल्क्यवचनम्।

उद्धृतप्रमाणै"र्गायत्री"मन्त्रद्रष्टा ऋषिः सृष्टिकर्त्ता ब्रह्मैवेति प्रणिधातव्यम्, अतो "गायत्र्या विश्वामित्र ऋषिः" इत्यत्र

विश्वामित्रशब्देन सृष्टिकर्त्ता ब्रह्मैवोच्यते न तु गाधिपुत्रः क्षत्रियो विश्वामित्रः, गायत्रीमहामन्त्रदर्शनदीक्षादानादिभिः स "विश्वस्य जगतो मित्रमभूत् इति तस्य यौगिकनाम "विश्वामित्र" इति; 'जन्माद्यस्य यतः' ( वेदान्तदर्शनसूत्रम् १।१।२ ) इत्यादिप्रमाणेन सृष्टिकर्त्ता ब्रह्मा परमेश्वर एवेति बोध्यम्, एवञ्च परमेश्वर एव गायत्रीमन्त्रद्रष्टा इति फलितम्। परमेश्वरस्य मन्त्रद्रष्टृत्वं यजुर्वेदीयरुद्राध्याये बहुशः श्रूयते। *

अपि च गाधिपुत्रस्य क्षत्रियविश्वामित्रस्य पूर्ववर्त्तिनो वशिष्ठादयो ब्रह्मर्षयो ब्राह्मणा एव,ते हि ब्रह्मणो मानसपुत्राः, तेषु वशिष्ठस्य ब्रह्मतेजःपराभूतस्य क्षत्रियविश्वामित्रस्य एवं विलापः श्रूयते—

"धिग् बलं क्षत्रियबलम् ब्रह्मतेजो बलं बलम्।"

वाल्मीकिरामायणे [ १।५६।२३। ]

यदि नाम विश्वामित्रोऽयं गायत्रीमन्त्रद्रष्टा तर्हि विश्वामित्रात् पूर्व्वस्मिन् काले गायत्र्युपासकब्राह्मणाभावाद् ब्रह्मतेजसोऽप्यभाव एवेति कथं नु तर्हि वशिष्ठस्य ब्रह्मतेजः? कथं वा तेन क्षत्रियस्य विश्वामित्रस्य पराभवः? कथं तस्य तादृशो विनाशः? कथं वा क्षत्रिय-विश्वामित्रपूर्ववर्त्तिब्रह्मणो मानसपुत्रा वशिष्ठादयो ब्राह्मणा इत्यादि सर्वं विभावनीयम्। तस्मात् सृष्टिकर्त्ता ब्रह्मैव गायत्री-मन्त्रद्रष्टा इति सिद्धान्तः। अपि च प्रणवमन्त्रद्रष्टा समस्याहृति-मन्त्रद्रष्टा गायत्रीशिरोमन्त्रद्रष्टा गायत्रीमन्त्रद्रष्टा च सृष्टिकर्त्ता

---

* "असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः" ॥ रुद्राध्याये १मे अनुवाके ७म मन्त्रः।
"असौ योऽवसर्पति नीलग्रीवो विलोहितः" रुद्राध्याये १मे अनुवाके ८म मन्त्रः।
"एतयोः काण्व ऋषिः, आदित्यात्मा रुद्रो देवता" ( भट्टभास्करकृतभाष्यम् )।
"नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढ़ुषे।" रुद्राध्याये १।९।
"ऋषिर्भगवान् शम्भुः, देवता च शम्भुरेव।"
"या ते हेति"रित्याद्यास्तिस्रोऽनुष्टुभः, ऋषिर्देवता च भगवानेव"।
रुद्राध्याये १।१२ मन्त्रे भट्टभास्करकृतभाष्यं द्रष्टव्यम्।

ब्रह्मैवेति प्रणिधातव्यम्, प्रमाणन्तु पूर्वमेवोक्तम्, शिष्टञ्च मन्त्राणां प्रयोगदिशाऽवगन्तव्यमिति।

( २ )

गायत्र्या आह्वानमन्त्रद्वारा गायत्रीस्वरूपनिर्वचनम्।

तथा च गायत्र्या आह्वानमन्त्रस्यायमयमर्थः—"वरदे! मातरायाहि"—आगच्छ प्रकाशिता भव, "ते" तुभ्यं मम "नमोऽस्तु"। (१ देवि! मातरायाहि ते नमोऽस्तु, (२) दानादिगुणशीले मातरायाहि ते नमोऽस्तु, (३) सर्वदीप्तिमूलदीप्तिरूपे मातरायाहि ते नमोऽस्तु, (४) द्योतनैकमूर्त्ते मातरायाहि ते नमोऽस्तु, (५) द्युस्थानविहारिणि! उत्तमज्योतिर्म्मयि! मातरायाहि ते नमोऽस्तु, (६) अपारसंसार-पारावार-परपार-विहारिब्रह्मरूपे! मातरायाहि ते नमोऽस्तु, (७) अज्ञानान्धकारच्छेदिके मातरायाहि ते नमोऽस्तु, (८) छेदनशक्तिरूपे! कालिके! मातरायाहि ते नमोऽस्तु, (९) सृष्टिस्थितिप्रलयरूपक्रीडाकारिणि! मातरायाहि ते नमोऽस्तु।*

---

* "दानाद्वा दीपनाद्वा द्योतनाद्वा, द्युस्थानो भवतीति वा यो देवः सा देवता।" महर्षियास्कप्रकाशिते वेदनिरुक्ते दैवतकाण्डे अग्निमीड़े इति मन्त्रव्याख्यायां "देव"-शब्दनिर्व्वचनं द्रष्टव्यम्। देवशब्दस्य स्त्रीलिङ्गे सम्बोधने "देवि!" इति पदं भवति। अतो यास्कप्रकाशितमर्थमादाय "देवि"पदस्य नवधार्थो लिखितः। उद्धृतयास्कसन्दर्भे "दाना"-दिति पदं दानार्थक'दा''धातुवद् "दो य छेदने" इति दिवादिगणीय "दो" धातोरपि स्यादिति व्याख्यायां छेदनार्थः प्रकाशितः "देवी"ति पदं क्रीडार्थक "दिव्"धातोरपि स्यादिति व्याख्यायां क्रीडार्थोऽपि लिखितः। दीपनं द्योतनञ्च एक एव पदार्थ इति निरुक्त-भाष्यकार-दुर्गाचार्य्यमतम्, तन्मते गायत्र्या दीप्तिमूर्त्तिर्द्योतनमूर्त्तिरेकैव। अन्ये तु द्योतनं प्रेरणाविशेषं मन्यन्ते, तन्मते सर्व्वप्रेरिता अन्तर्यामिनी गायत्री इत्यर्थो भवति एतेन गायत्रीमन्त्रस्य तृतीयपादार्थो व्याख्यात इत्येतत् सर्व्वं सुधीभिः साधकैश्च प्रणिधातव्यम्। द्युस्थानविहारिणि। उत्तम ज्योतिर्म्मयि! इत्यनेन गायत्री सर्व्वदेवतात्मिका भावनीया देवतानां द्युस्थानस्वभावत्वात्, कर्म्माधिकारत एव तासां मध्यमादिस्थानत्वम्, अतश्च "कर्म्मजन्मानः" इति देवतालक्षणमुक्तं महर्षिणा यास्केनेति बोध्यम्।

"त्र्यक्षरे! मातरायाहि ते नमोऽस्तु"—परापरब्रह्मरूपे मातरायाहि ते नमोऽस्तु, निर्विशेषतुरीयापरपर्य्यायावाङ्मानसगोचरादीनकूटस्थब्रह्मरूपे! सविशेष-सृष्टिस्थितिप्रलयशक्तिभूते ब्रह्माणि! वैष्णवि! रुद्राणि! अपर-ब्रह्मरूपे! मातरायाहि ते नमोऽस्तु, सकलदेवतात्मिके! मातरायाहि ते नमोऽस्तु। *

"ब्रह्मवादिनि! मातरायाहि ते नमोऽस्तु"—† ब्रह्मविद्यारूपे फलतो ब्रह्मरूपे! सच्चित्सुखात्मिके! अम्भृण-महर्षिदुहितृरूपे! सकलकन्यकामूर्त्तिधारिणि! वाक्स्वरूपे! प्रत्यक्षकृतपरोक्षकृताध्यात्मिकादिसकलमन्त्रमूर्त्ते! फलतो विश्वरूपे! मातरायाहि ते नमोऽस्तु।

* "एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्" (कृष्णयजुर्वेदीय-कठोपनिषत् १।२।१६) इत्यादि-श्रुतेः, "ओमित्येकाक्षरं ब्रह्म" (गीता ८।१३) "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः (गीता १७।२३) "तस्य वाचकः प्रणवः" (योगदर्शनम् समाधिपाद—२८) इत्यादिस्मृतेश्च त्र्यक्षरात्मकप्रणवस्य परापरब्रह्मरूपत्वं सर्वदेवतारूपत्वमवधातव्यम्। अपि च "अकारो विष्णुरुद्दिष्ट उकारस्तु महेश्वरः। मकारेणोच्यते ब्रह्मा प्रणवेन त्रयो मताः।"—इत्यादिस्मरणात् सृष्टिस्थितिप्रलयशक्तिमत्तया सर्वदेवतात्वावगमात् प्रणवस्य सर्वदेवतात्वं सिद्धमेव तादृशसृष्ट्यादिशक्तिमत्त्वमेव देवतात्वमिति तल्लक्षणात् नास्ति ह्यं तादृशी कापि देवता यत्र तादृशसृष्ट्यादिशक्तिर्न विद्यते, अतश्च "आत्मगम्मान" इति यास्कप्रकाशितदेवता-सामान्यलक्षणमपि त्र्यक्षरात्मिकायां गायत्र्यामुपपन्नम्, अन्यान्यत्रापि "एकं सद् विप्रा बहुधा वदन्ति" (१) "नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहा" (२) इत्यादिः एकस्य सर्वदेवतास्वरूपत्वे प्रमाणत्वात् त्र्यक्षररूपा गायत्री सर्वदेवतात्मिका भावनीया।

† "श्रुधि श्रुत! श्रद्धिवं ते वदामि; अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः।" देवीसूक्तीयचतुर्थमन्त्रः। ऋग्वेदसंहिता।

उक्तमन्त्रस्य ब्रह्मवादिनीत्वं व्याख्यातम्—"अहमेव इदं ब्रह्मवस्तु वदामि उपदिशामि हे श्रुत! "श्रद्धिवं" श्रद्धातव्यं ब्रह्म तु, "ते" तुभ्यं वदामि, "श्रुधि" शृणु। 'अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी स्वात्मानमस्तौत्" इति भाष्यव्याख्यानात् वाक्स्वरूपाया-गायत्र्या ब्रह्मवादिनीत्वं सिद्धम्। अतश्च मन्त्रागतिरिक्तपदार्थत्वात् तादृश्या गायत्र्याः सकलमन्त्र

"गायत्रि ! मातरायाहि ते नमोऽस्तु—"गायति च त्रायते च" इति श्रुतिप्रतिपादितवस्तुरूपे ! मातरायाहि ते नमोऽस्तु, कथनशक्ति-रूपे ! त्राणकर्त्रि च मातरिति फलितार्थः *। "गायन्तं त्रायते यस्माद् गायत्री प्रोच्यते ततः"—इति स्मृतिप्रतिपादितवस्तुरूपे "मातरायाहि" इत्यादि। "गायतेः स्तुतिकर्म्मणः"—इति महर्षि-यास्कनिर्वाचितवस्तुरूपे ! मातरायाहि ते नमोऽस्तु—सर्वश्रेष्ठ-स्तुतिवाचकपदवर्णरूपे ! मातरिति फलितार्थः।

"गायतो मुखादुदपतत्"—इति ब्राह्मणप्रतिपादितवस्तुरूपे मातरायाहि ते नमोऽस्तु।

(१) तपसा सुसम्बद्धस्य आदिसर्गात् स्वयम्भुवः।
ॐकारपूर्वा गायत्री निर्जगाम ततो मुखात्॥
योगियाज्ञवल्क्यवचनम्।

(२) सर्व्वेषामेव वेदानां गुह्योपनिषदस्तथा।
सारभूता तु गायत्री निर्जगाम ततो मुखात्॥
छन्दोगपरिशिष्टवचनम्।

(३) अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः।
वेदत्रयान्निरदुहद् भूर्भुवःस्वरितीति च॥
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी पितामहः॥
मनुवचनम्।

---

स्वरूपत्वमपि सिद्धम्। सृष्ट्यादौ मन्त्रद्रष्टुः प्रजापतेः ब्रह्मणो मनसि भूरादिविश्वानां मन्त्ररूपेणै-विर्भावश्रवणाद् गायत्र्याः सकलमन्त्रमूर्त्तित्वं सिद्धम्। तामेतां मन्त्ररूपां गायत्रीमामनन्ति माध्य-न्दिनीयाः—"सर्व्वस्वरूपे ! विप्राणां मन्त्रसारे ! परात्परे"। इत्यादि, स्तौति च महर्षिः गौतमः—"व्याहृत्यादिमहामन्त्ररूपे ! (१) प्रणवरूपिणि ! (२) नमो क्लीङ्काररूपिणि ! (३) स्वाहा स्वधास्वरूपे ! त्वां (४) नमामि सकलार्थदाम॥"—इत्यादि। अतश्च मन्त्ररूपा गायत्री विश्वरूपैवेति प्रणिधातव्यम्।

* गायत्र्या विश्वरूपत्वात् सर्व्वमन्त्रसारत्वाच्च सर्वश्रेष्ठस्तुतिवाचकपदवर्णरूपत्वमिति बोध्यम

(४) विश्वस्य जगतो मित्रं विश्वामित्रं प्रजापतिः ।
ॐकारपूर्वां गायत्रीं निर्जगाम ततो मुखात् ॥

इत्यादि स्मृतिप्रतिपादितवस्तुरूपे ! मातरायाहि ते नमोऽस्तु । सृष्टिकर्म्मनिरतब्रह्ममुखाविर्भूतरूपे ! मातरायाहि ते नमोऽस्तु ।

"छन्दसां"—गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीप्रभृतिच्छन्दसां "मातः" ! प्रसविनि ! आयाहि ते नमोऽस्तु, वेदप्रसविनि ! ज्ञानप्रसूते ! जगतां जननि ! आयाहि ते नमोऽस्तु । इति फलितार्थः । *

"ब्रह्म"रूपे ! बृहद्रूपे ! परममहद्रूपे ! सर्वगतरूपे ! देहादीनां परिणमयित्रि आत्मस्वरूपे ! मातरायाहि ते नमोऽस्तु इत्यर्थः । †

"योनि"रूपे ! सर्वकारणस्वरूपे मातरायाहि ते तुभ्यं नमोऽस्तु इत्यर्थः । ‡

तदेवं व्याख्यातदिशा—वरदा (१) देवी (२) त्र्यक्षरा (३) ब्रह्मवादिनी (४) गायत्री (५) छन्दोमाता (६) ब्रह्मरूपा (७) योनिरूपा

---

* गायत्र्यादिच्छन्दोभिरेव वेद आविर्भूत इति गायत्र्या वेदमातृत्वम्, वेदानाञ्च ज्ञानात्मकत्वात् ज्ञानप्रसूतित्वम् व्याहृत्यादिमन्त्राभिव्यक्तभूरादिजगतां क्रमतो ज्ञानस्वरूपत्वाज्जगज्जननीत्वमपि गायत्र्या एवेति प्रणिधातव्यम् ।

† "बृहत्त्वाद् बृंहणत्वाद् वात्मैव ब्रह्मेति गीयते" ( ब्रह्मसूत्रभामतीटीकाप्रथमपंक्तिर्द्रष्टव्या । ) इति ब्रह्मशब्दस्य व्युत्पाद्यमानत्वाद् "ब्रह्मरूपे" इत्यस्य तादृशोऽर्थोऽवगन्तव्यः ।

‡ (१) स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ।
कृष्णयजुर्व्वेदीय-श्वेताश्वतरोपनिषत् । ६।९ ।

इत्यादिश्रुतेर्ब्रह्मरूपाया गायत्र्या योनिरूपत्वमवधातव्यम् । सूचितञ्चैतच्छारीरके भगवता बादरायणेन "प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात्" । वेदान्तदर्शने १।४।२३। इत्यादिना ।
न्यायादिमते तु योनित्वं निमित्तकारणत्वं न तूपादानत्वमिति विशेषः ॥

(८) इत्यादीनि गायत्र्याः स्वरूपाणि भावनीयानि ; शरणागतस्य मम आह्वानेन तादृशी गायत्री माता मत्सकाशमागता पूर्वोक्तस्वरूपेण प्रकाशिता इति अनुभूय प्रणामो विधेयः, ततो यथाविधि ध्यानादिपूर्व्वं * मन्त्रजपः कार्य्य इत्युपासनादिक् ॥

———*———

१९३४ खृष्टाब्दीय-संस्कृतपरीक्षामानदानपरिषदि 'वङ्गीयसंस्कृत-एसोसियेशन्' इत्याख्यमहासभाधिपतेः

## अभिभाषणम्

मान्याः महिलाः ! भद्रमहोदयाः, महाभागाः 'सेण्ट्राल् अर्गेनाइजेशन्' इत्याख्यकेन्द्रीयपरिषत्सभ्याः ! प्रियतमा विद्यार्थिनश्च !

भारतवर्षस्य सर्वेभ्य एव दिग्विभागेभ्यो मानपदग्रहणार्थं समागतैर्विद्यार्थिभिः समन्वितायां वङ्गप्रदेशीयैः संख्यातीतैरध्यापकवर्यैः प्राच्यज्ञानप्रियैश्च स्वसन्निधानेन समलङ्कृतायामस्यामतिमहत्यां परिषदि सर्वेभ्य एव मया सर्वात्मना स्वागतसम्भाषणं विनिवेद्यते।

भारतवर्षे सर्वत्रैव लब्धाधिकारैषा विपुलपरिणाहा 'वङ्गीय-संस्कृतएसोसियेशन्' इत्याख्या महासभैव तादृशमेकं प्रतिष्ठानम्, यत् सर्वप्रदेशसाधारणविश्वविद्यालयसंज्ञामर्हतीति वयं मन्यामहे। 'संस्कृतएसोसियेशन्'-सम्बन्धिनां तदभ्युदये निबन्धवतां सर्वेषामपरेषां प्रतिसंवत्सरं सकृदस्यां मानदानपरिषदि समागम्य 'संस्कृत-एसोसियेशन्' इत्याख्य-सभायाः कृत्यजातञ्च पर्यालोच्य तस्याः सुतरां कृत्यवर्त्मनि समुत्साहनं विशेषतः समुचितमाभाति।

---

* "ध्यानयुक्तामावर्त्तयेदोमपूर्वां गायत्रीम्"। गोभिलगृह्यसूत्रम्। सन्ध्याप्रकरणम्।१२। ध्यानयुक्तमिति क्रियाविशेषणम्। ध्यानयुक्तं यथा भवति तथा ओंपूर्वां गायत्रीमावर्त्तयेत् जपेत्"। (छन्दःसूत्रस्य भाष्यमिदं द्रष्टव्यम्)

प्रागेव विषयान्तराणामालोचनात् सुतरां दुःखावहं कासाञ्चन शोकवार्त्तानां प्रकाशनं कर्त्तव्यतापथमापतति ।

भट्टपल्लीवास्तव्यस्य स्मार्त्तधुरन्धरस्य महामहोपाध्याय-कमलकृष्ण-स्मृतितीर्थस्य, कलिकातावास्तव्यस्य सकलविद्वज्जनशरण्यस्य वैद्यशास्त्रपीठप्रतिष्ठापकस्य दीनवत्सलस्य संस्कृतविद्यापारदृश्वनो ब्राह्मणगणपरिपालकस्य कविराजशिरोमणेः श्यामादासवाचस्पति-महोदयस्य वर्धमानप्रदेशगौरवभूतस्य वेदविद्यानिष्णातस्य दुर्गादास-लाहिड़ीमहोदयस्य, राजसाहीनिवासिनः पण्डितवर्यस्य सारदा-चरणकाव्यतीर्थस्य, चट्टलभूमिवास्तव्यस्य पण्डित-शरच्चन्द्रकाव्य-तीर्थस्य, वर्द्धमानभूमिवास्तव्यस्य पण्डित-रमेशचन्द्र-वेदान्ततीर्थस्य तथा हुगलीनिवासिनः पण्डित-रामरतनवेदान्तरत्नस्य वियोगेन संस्कृतभारत्याः सुमहती हानिः संवृत्ता। ते हि पण्डितवर्याः स्वेषु स्वेषु विषयेषु नितरां निष्णाता आसन्। विधातुर्विधानेन संस्कृतशिक्षाया अतितरां दुर्दिन एवैषां महाभागानां लोकान्तर-प्रस्थानतो या नाम हानिः सञ्जाता सा कथमप्यपनेतुमशक्यैव ।

ईदृशि स्वल्पमात्रेऽवसरे साम्प्रतिकावस्थापर्यायाणामशेषाणां सम्यक्तया समालोचनं दुःशकमेवेति मुख्यान्येव कतिचित् तत्त्वानि भवतां समीपे समुपस्थाप्येरन् ।

'संस्कृतएसोसियेशन्' सभायाः क्रमिकेतिवृत्ते पर्यालोचिते वाराणसीस्थ-प्रतिष्ठान-वैसादृश्येनास्याः सभाया गणतन्त्रानुसारिणी परिव्रत्तिर्दृष्टिपथे समवतरति। परमभिलषितप्रतूरहभूतानि साम्प्रतिकार्थकृच्छ्राणि यावन्न दूरीक्रियेरन् तावत् 'एसोसियेशन्'-कल्यानाम् अभीप्सितमपि सम्यक्तया सम्पादनमशक्यमेवेति ।

सप्तसप्ततिसंख्यकानां गणादिनिरूपितानां द्वाविंशतिसंख्यकानाञ्च राजपुरुषनिर्द्धारितानां पारिषदानां समवायेन संघटिता केन्द्रीय-परिषत् कलिकाता-विश्वविद्यालयस्य 'सेनेट्' इत्याख्यसभापेक्षया

आधिक्येन गणतन्त्रतामनुवर्त्तते। परमेतावदनयोः पार्थक्यं यत् प्रागुक्ता 'सेनेट्' इत्याख्या सभा प्रतिमासं सकृद् बहुकृत्वो वा समपेक्षितवस्तुविचाराय सम्मिलिता भवति, 'एसोसियेशन्'-सभायास्तु वर्षाभ्यन्तरे सकृदप्यधिवेशनं कथञ्चित् सम्भाव्यं नाम। अतस्तत्सभासभ्या असकृदात्मनोऽवज्ञातान् मन्येरन् 'एसोसियेशन्' कर्म्मनियुक्ताः स्वाच्छन्द्येनैव तदीयं कार्य्यजातं परिचालयन्ति न वेत्यत्र संदिग्धबुद्धयो वा भवेयुः। केन्द्रीयसभाया एकस्यैव बहुक्षण-व्यापिनोऽप्यधिवेशनस्य भूयानेव समयः सभ्यनिरूपणव्यापारेण परिक्षीणतामापद्यते, अतस्तत्र सुफलानुकूलं किमपि कर्म्मान्तरं सुदुष्करमेव। केन्द्रीयसभाया अनुमतिमन्तरेण कोऽपि गुर्व्वर्थः सिद्धान्तरूपेण शक्यपरिग्रहो भवति। तस्याः सभाया अनुमत्यर्थञ्च पुनरेको वत्सरः प्रतीक्षणीयतामापद्यते। सभार्थमपेक्षितानां पाथेयशुल्कादीनामनासादनात् सत्यप्यस्माकं सुमहति प्रयत्ने सम्प्रयो-जनमपि बहुकृत्वस्तस्याः सभायाः संघटनमशक्यमेव। अन्यच्च "एसोसियेशन्' सभा उत्तरोत्तरं कलिकाता-विश्वविद्यालयसदृशं गणतन्त्रानुवर्त्ति परिवर्त्तनं लिपिकराणां क्रमिकवृद्धिं विभिन्नेष्वपरेषु विषयेषु व्ययबाहुल्यञ्चापेक्षते। द्विनवत्युत्तराष्टादशशततमे (१८९२) खृष्टाब्दे स्वर्गतमहेशचन्द्र न्यायरत्नमहोदयप्रस्तुतविवृतिबलेन तात्-कालिक-( डिरेक्टर ) शिक्षापरिचालकमहोदयः 'आलेक्जाण्डार क्रॅफ्ट्' इत्याख्यः प्रधानतमराजपुरुषाणां समीपे परीक्षाफलानुसारेण छात्रवृत्तीनामध्यापकवृत्तीनाञ्च परिवर्द्धनं प्रस्तुवन्नेवं लिखितवान् यथा ब्राह्मणधर्म्मावलम्बिषु नितरां प्रभवतोऽध्यापकसमाजस्य परि-रक्षणं योग्यपात्रे च तदीयस्वार्थसंरक्षणभारस्थापनमित्येतद्द्वयं सर्वथा राजकीयप्रयोजनपदवीमध्यास्ते। तस्मात् विवृताविदमपि समु-ल्लिखितमुपलभ्यते, यत्, यदि नाम स्वल्पेनैव प्रवर्त्तितेनार्थसाहाय्येन अध्यापकसमाजस्य संख्याकृता गुणकृता च न्यूनता निरस्ता स्याद्

यदि चानेन संस्कृतविद्यालयास्तदीयप्राक्तनाभ्युदयं विशेषतः प्रापिता भवेयुस्तदा सोऽयमर्थव्ययः सार्थकतामासादयेदित्यत्र न कश्चिदास्ते सन्देहः। यदा तावदेषा विवृतिः प्रस्तुता तदा वङ्गविषये संस्कृत-विद्यालयानामनधिकानि पञ्चशतान्येव समवर्त्तन्त। नातिचिरात् पूर्वमपि अष्टादशोत्तरैकोनविंशतितमखृष्टसंवत्सरे परीक्षार्थिनां संख्या चनाधिकं सार्द्धसहस्रत्रयमासीत्, अधुना तु वङ्गदेशस्थसंस्कृतविद्यालयानां संख्या किञ्चिदधिकं सहस्रद्वयं परीक्षार्थिसंख्या च विगते वर्षे प्रायेण एकादशसहस्रमभूत्। एतेन अध्यापकसंख्या विद्यार्थिसंख्या च क्रमेण महान्तं वृद्धिपथमारोहतीति निश्चितं भवति। कलिकातानगर्य्यां शास्त्रप्रभाववर्द्धिभूते स्थानान्तरे च कृतवसतयो नैव सम्यक्तया समवधारयन्ति कीदृगस्याध्यापकसमाजस्य प्रभावो ब्राह्मणधर्म्मावलम्बिषु जानपदेषु वरीवर्त्तीति। साम्प्रतं सत्यप्यर्थदारिद्र्ये येषामस्ति शिक्षायां सुमहानुत्साहस्ते प्रभूतार्थव्ययसाध्यमाङ्गलविद्याध्ययनं कर्त्तुमपारयन्तः संस्कृतविद्यालयेष्वेव विना शुल्कं गुरुप्रदत्तमेव भोज्यमावासञ्च समासादयन्तः शास्त्राध्ययनं समाचरन्ति।

राजदत्तसाहाय्यपरिमाणम् १८८२ खृष्टाब्दे यादृक् आसीत् अधुना ततः अधिकतरमपि, १९१८ खृष्टाब्दे यादृक् आसीत् ततः अनधिकं वर्त्तते। छात्रसंख्या अधुना चतुर्गुणा संवृत्ता; तथा हि राजसाहाय्यमपि अनुगुणं वृद्धिं गन्तुमर्हतीति आशंसा सञ्जायते। वयं तु पण्डितानां किञ्चिदधिकेन सहस्रत्रयेणाध्युषिते वङ्गदेशे केवलं शतद्वयाय राजदत्ताद् अर्थस्तोमात् प्रत्येकं मुद्राचतुष्टयमात्रं दातुं शक्नुमः। "संस्कृत-कलेज-कमिटि"-नाम्नी मन्त्रणासमितिरध्यापकानां छात्राणाञ्च वृत्तिपरिवर्द्धनार्थं सवृत्तिकाध्यापकासनसंस्थापनार्थं, संस्कृतविद्यालयानां पञ्चभ्यः शतेभ्यः साहाय्यदानार्थं, प्रथितेषु संस्कृतविद्यालयेषु पञ्चदशसंख्यकानां ग्रन्थागाराणां स्थाप-

नार्थं, पञ्चविंशतिसंख्यकपण्डितवृत्तिव्यवस्थापनार्थं, संस्कृत-विद्यालयपरिदर्शकद्वयनियोगार्थं, एसोसियेशन्-सभायाः कर्म्मलेखकानां वेतनपरिमाणवृद्ध्यर्थं, सम्पादकाय च पृथग्वृत्तिप्रदानार्थं कांश्चिदीप्सितान् विषयान् राजद्वारे निवेदितवती। एतान् प्रस्तावान् विहाय राजपुरुषैरनुमतः केवलम् 'एसोसियेशन्' सभायाः परिचालन-पद्धतेः परिवर्त्तनप्रस्तावः। अनेन विधिना प्रस्तावानां मूलगत-मभिप्रायमेव विनष्टं मन्यामहे, यतो विना परिचाल्यवस्तुव्यवस्थां परिचालनपद्धतिपरिवर्त्तनं शून्याधिष्ठानं चित्रादिनिर्म्माणमिव प्रतिभाति। केन्द्रीयसभाप्रेरितैरस्माभिरधुना राजपुरुषाणां सविधे तदर्थमेव यत्नः क्रियते; न जाने साम्प्रतिकेऽर्थकृच्छ्रकाले कीदृक् सिद्धिस्तमनुवध्नीयात्। तथापि न वयं निराशा भवामः, यतोऽद्य श्वो वा अवश्यमेवास्मत्प्रयत्नः प्रायेण साफल्यमण्डितो भवेदेव।

स्थिरपरिमाणस्य अर्थजातस्य वार्षिकसाहाय्यदानेन 'एसोसियेशन्'-सभायाः परिचालनविषयकः कश्चित् प्रस्तावोऽधुना उपन्यस्तः संवृत्तः। तत्र तु शिक्षाविभागीयाणां राजपुरुषाणामिदमेव अभिमतं यत् एसोसियेशन्-परीक्षाश्चेत् आत्मनैव स्वव्ययनिर्वाहिकाः अभविष्यन्,तदैव उक्तरूपप्रस्तावः सम्भाव्योऽभविष्यत्। परीक्षाणां व्ययजात-निर्वाहश्च परीक्षाशुल्कवृद्धिं विना न सम्भवति। संस्कृतविद्यालयान्तेवासिनस्तावत् सुतरां दरिद्राः; तस्मात् परीक्षाशुल्कवृद्धि-विषये अधुनापि अस्माभिः सम्मतिर्न दत्ता। स हि विषयः अस्मन्नियोजितायाः कस्याश्चित् क्षुद्रपरिषदो विचारमपेक्षते; तस्याः परिषदो विचारः परामृष्टो वा प्रागेव सूचितो वा स्यात् इत्याशङ्कया न वयमधुनैव स्पष्टाक्षरैस्तद्विषयेऽस्माकमभिमतं प्रकटयितुं शक्नुमः। एतावत् तु मया निवेद्यते यत् यदि नाम अस्माकं व्ययजातस्य साफल्येन निर्व्वाहसाधकम् अर्थपरिमाणं न लब्धं भवेत्, तर्हि एसोसियेशन्-सभाया वार्षिकसाहाय्यदानमात्रेण परिचालनकल्पनम् असम्भाव्यमेव।

अपेक्षितं परीक्षासु कतिपयप्रचलितपाठ्यपुस्तकानां परिवर्त्तनं विशेषेणापेक्षितञ्च तत्र नवीनविषयविशेषाणां संयोजनम् इति प्रयोजन-द्वय-साधनार्थं विनियुक्ता अस्माभिर्विशेषज्ञाः पण्डिता विगते वर्षे, गृहीतानि च तेषां निर्द्धारणजातानि। साधुवादार्हास्ते सर्व्वे एव सदस्या ये एतदर्थं कृतश्रमाः। यतमाना वयम् एसोसियेशन्-परीक्षासु अगृहीतपूर्व्वाम् आयुर्व्वेदशास्त्रे परीक्षां ग्रहीतुम्। आशास्महे विश्वसिमश्च अस्याः परीक्षायाः प्रवर्त्तनेन न केवलमस्यायुर्व्वेदविज्ञानस्य अपि तु निखिलाया एव संस्कृतशिक्षायाः सुमहानुपकारः सम्पद्येतेति। विज्ञापितोऽहं सम्पादकमहोदयैः संस्कृत-महाविद्यालयस्य आ प्रतिष्ठासमयादेवात्र आयुर्व्वेदविज्ञानस्याध्यापनव्यवस्था समभवदिति। द्वात्रिंशदधिकाष्टादशख्रृष्टशतकस्याष्टाविंशतितमदिवसीयलिपिविशेषात् परिज्ञायते आयुर्व्वेदविभागीयविद्यार्थिनः शरीरव्यवच्छेदविद्यायां विशेषेण कृतश्रमाः पाश्चात्यचिकित्सासरणीषु च सामान्येनार्ज्जितज्ञाना आसन्निति। विद्यार्थिविशेषश्च हिजलि-राजकीयास्त्रोपचारागारेण सम्बद्ध आसीत् इत्यपि परिज्ञायते। राजकीयसंस्कृतमहाविद्यालये द्वात्रिंशच्छय्योपेतश्चिकित्सागारश्चैकं समवर्त्तत। केवलेनायुर्विज्ञानपरीक्षाप्रवर्त्तनेनास्माकं तादृशं मङ्गलं न सम्भाव्येत, यादृशम् अस्यां सभायाम् आयुर्विज्ञानशिक्षायाः केन्द्रायतनत्वसंप्राप्तायाम्। परं तादृशः समुत्कर्षलाभस्तु न सुकरो न वा निर्व्बाध इति दूरापेता तदाशा। अर्थसमस्यायाः सम्यगापूरणं राजकीयशिक्षापद्धतेश्च सम्यक् परिवर्त्तनं विना स न सम्भवति। समधिकव्ययानपेक्षिषु प्रस्तावितविषयेषु प्रचलत्पाठ्यपुस्तकपरिवर्त्तनार्थं नवीनविषयप्रवर्त्तनार्थं च गृहीताः प्रस्तावा अस्माभिरनुमोदनार्थमुपस्थापिताः। केन्द्रसभासदस्यप्रेषणयोग्यानि कानिचन प्रतिष्ठानानि निरूपितानि। कृतयत्ना वयम् एसोसियेशन-सभायाः क्रियाजातनिर्वाहयोग्यानां कतिपयानां

नियमानां प्रवर्त्तनार्थम्। ते च नियमा यदि राजपुरुषैरनुमोदिता भवेयुस्तर्हि कृत्यनिर्वाहे महत् सौकर्य्यं भवेदिति आशास्महे। शिक्षाप्रचारमन्यरेषु प्रदेशेषु नवीनसमाजसंस्थापनार्थञ्च यतमाना वयम्।

महाभाग-श्रीमद्‌विद्यासागराधिष्ठितसंस्कृतविद्यालये खृष्टीयोनविंशशतकस्य मध्यभागे वङ्गभाषासंस्कृतिसमये संस्कृतभाषा कियता परिमाणेन समुपयोगिनी समपेक्षिता च समपद्यत तत् सर्व्वं विस्तरेण सम्पादकमहोदयवर्णितविवृतिश्रवणेनैव भवद्भिः परिज्ञातव्यम्। संस्कृतमहाविद्यालयस्याध्यक्षवरा अध्यापकवराश्च स्वरचितरचनापुञ्जैर्वङ्गभाषायाः समृद्धिवर्द्धने कृतयत्नाः सहायकाश्च समभवन्। युगेऽस्मिन् प्रवेशिकापाठपर्य्यन्तम् आङ्गलविद्यालयेषु विद्यार्थिनां वाङ्गलभाषा एव शिक्षावाहिनी सञ्जाता, इतः परमपि सम्भाव्यते स्वल्पेनैव कालेन दर्शनविज्ञानसाहित्यादीनां समुन्नतविषयाणामपि ग्रन्था अनया वङ्गभाषया यथा विरचिता भवेयुस्तदर्थं प्रयत्नः सम्भवेदिति। अदूरे भविष्यति काले यदा अस्मद्देशवासिनः सर्व्वे स्वचरणशरणाः परदेशवासिस्कन्धारोपितकराः, स्वसंस्कारवैशिष्ट्यादिसंरक्षणपराश्च भवेयुस्तत्पूर्व्वमेवायं प्रयत्नः सम्भवेदिति आशास्महे। सन्धिक्षणेऽस्मिन् यदि संस्कृतविद्यापारीणः परविद्यापरैः सुसम्बद्धाः क्षेत्रेऽस्मिन्नवतरेयुस्तर्हि संस्कृतविद्या विशेषेणोपयोगिनी समपेक्षिता च भवेदत्र नास्ति वैमत्यावसरः। युगेऽस्मिन्, अर्थकृच्छ्रे प्रसरति सर्वासु दिक्षु आङ्गलविद्यालाभाय लब्धानाञ्च दैनन्दिनाभावविमोचनाय संस्कृतविद्यालयानां संख्या प्रतिदिनमेव संवर्द्धते इति सुविदितमेव सर्वेषां सामाजिकानाम्। एवं क्रमेण यदि वृद्धिः सम्पद्येत, तर्हि स्वल्पेनैव कालेन समाजेषु संस्कृतविद्यार्थिन एव संख्यायां समधिका भवेयुरित्यत्र नास्ति सन्देहावसरः। एवं सति स्वल्पतरेणैवार्थसाहाय्येन समधिका विद्यार्थिनो

मानवपदवीं लभमानाः स्वदेशस्य स्वसमाजस्यापि हितसाधनसमर्था भवेयुस्तर्हि स्वजातीयार्थसंरक्षणमपि सम्भवेत्। परं यदि संस्कृतविद्या स्वल्पतयाऽपि अर्थोपार्ज्जनोपयोगिनी न भवेत्तर्हि समाजस्योत्कर्षसम्पन्नानां विद्यार्थिनामत्र समाकर्षः समन्वयो वा न सम्भवेदिति सुगमम् एव। महामहोपाध्यायानां श्रीमन्महेशचन्द्रन्यायरत्नानां विवृतौ परिलक्ष्यते तदानीन्तनानां सर्वेषामेव महामहोपाध्यायानां तनया आङ्गलविद्यालाभाय कृतयत्ना आसन् इति। यदि खृष्टीयद्विनवत्यधिकाष्टादशशतक एवेदृशी समवस्था, तर्हि वर्त्तमाने चतुस्त्रिंशदधिकोनविंशतितमशतके कीदृशी समवस्था सञ्जाता संस्कृतविद्यायास्तद् विभाव्यम्।

प्रायेणैवास्माभिः श्रूयते अस्मत्सभाप्रदत्ता विद्या नातीव गम्भीरेति। अस्माभिरपि एतस्य याथार्थ्यमनुभूयते सम्यक्। एतदनुभूय एवास्माभिः प्रतियोगितासमर्थानां स्वल्पसंख्यकविद्यार्थिनां कृते 'महाचार्यपरीक्षा'-प्रवर्त्तनार्थं प्रस्तावः समुपस्थापितः। परं यदि बुद्धिबलेन धनबलेन च दुर्बलानामाङ्गलविद्याग्रहणासमर्थानां दैवोपहतानां साधारणविद्यार्थिनां शिरसि विभीषिकाजनकः कश्चित् कठिनो दुर्वहो वा भारः समुपन्यस्तो भवेत् तर्हि तेषामवस्था अति हि नाम शोचनीया भवेदित्यस्माकं महती आशङ्का। विद्याशिक्षार्थं प्रदत्तं राजकीयसाहाय्यमतीव स्वल्पमकिञ्चित्करञ्च। राजकोषस्यावस्थायाः शीघ्रपरिवर्त्तनमपि न सम्भाव्यते। स्वल्पमात्रेणापि वृद्धिं गतेनार्थदानेन यथा संस्कृतविद्या सफला परिपोषिता च भवेत्, तदर्थं यत्नः करणीयो न वेति विवेचनार्थं माननीयानां मन्त्रिमहोदयानां मनःसन्निवेशं विषयेऽस्मिन्नभ्यर्थयामहे। सम्पादकमहोदयस्तस्य ज्ञानगम्भीरायां विवृतौ संस्कृतविद्याया यथा याथार्थ्येन समुन्नतिर्भवेत् येन च प्रचलितशिक्षापद्धतेः संस्कारो भवेत् तदर्थं सुचिन्तितान् स्वेन सङ्कल्पितान् उपायान् भवतां समीपे प्रकटीकरिष्यति। परं तेषां कार्यतया परिणमनमर्थसापेक्षं समयसापेक्षं पर्यालोचनसापेक्षञ्च, परमेतन्महत् सत्यं यदि संस्कृतविद्यापारीणा विशिष्टसामाजिकाः प्राचीनमहाज्ञाननिधयो न भवेयुः

तदर्थं यदि ते राजपुरुषैः प्रोत्साहिता न भवेयुस्तर्हि केवलेन सभाकार्य-चालनसमर्थे बहिरङ्गपरिवर्त्तने परिवर्द्धने वा अधिकारसमर्पणेन संस्कृत-विद्याया यथार्थोपकृतिर्नैव सम्भाव्यते। 'कलेजकमिटी'नाम्नी सभा विशिष्ट-राजभक्तानां पाश्चात्त्यविद्यापारीणेभ्यः पृथगभावेनानुप्राणितानां समाजे विशेषेण स्थायिप्रभावशालिनां संस्कृतविद्यार्थिनां कृते अतीव स्वल्पं साहाय्यं समयाचत। अस्माभिर्विशेषेण संस्कृतविद्यापारीणा अध्यापकवर्या विद्यार्थिनः सहृदयाः सामाजिकाश्च सनिर्बन्धं प्रार्थ्यन्ते, संस्कृतविद्यायाः समुन्नतिसाधनार्थं स्वदेशस्य मङ्गलसाधनार्थं च संस्कृतविद्यार्थिनो यथा अपेक्षिता उपयोगिनश्च भवेयुः तथा राजपुरुषाणां दृष्टिः समाकर्षणीयेति।

वर्षेऽस्मिन् परीक्षाफलं विगतवर्षत्रयापेक्षया कालात्ययेन प्रकाशितमपि विगतवर्षत्रयात् पूर्ववर्त्तिनां बहुवर्षाणां तुलनया नैव विलम्बेनेति निवेद्यते। वर्षेऽस्मिन् परीक्षार्थिनां संख्या वर्षत्रयपूर्वापेक्षया द्विगुणा जाता। 'कलेज-कमिटी'प्रार्थनानुसारेण कर्मनिर्वाहकाणां त्रयाणां लेखकानाम् एकस्य सह-कारिसम्पादकस्य च विनियोगः सम्भावित आसीत्। तत् सर्वमधुनाऽपि सम्भावनामार्ग एवावतिष्ठते। अतीव स्वल्पमात्रं शुल्कं लभमानाः पत्र-परीक्षकाश्च कृत्यगौरवं सम्यग् अननुभवन्तः कालात्ययेनैव फलं प्रयच्छन्ति, मुद्रायन्त्रस्यापि कर्मान्तरबाहुल्यात् परीक्षार्थिनामपत्रादीनि च न यथा-कालमस्माभिर्लभ्यन्ते। एतेषां विघ्नशतानां यदि अपाकरणं न सम्भवेत्, तर्हि स्वल्पकालेन परीक्षाफलप्रकाशोऽपि न सम्भवेत्। यद्यपि विद्यार्थिनां संख्या क्रमेणैव संवर्द्धते तथाऽपि तेषां प्रकारस्योन्नतिर्नास्माभिः संलक्ष्यते। उपाधिपरीक्षायां केवलया करुणाप्रदत्तसंख्यया एव उत्तीर्णानां संख्या विगतवर्षीयसंख्यया सारूप्यं भजते। सम्पादकमहोदयास्तु स्वकीये विवरणे छात्राणां क्रमावनतिं सकारणं प्रकटयिष्यन्ति।

विद्यार्थिनोऽध्यापकाश्च सनिर्बन्धम् अनुरुध्यन्ते, "स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्" इति श्रुतिवचनं तैर्न कथमपि विस्मर्त्तव्यम्। संस्कृता-ध्ययनशीला अध्यापनशीलाश्च अध्ययनम् अध्यापनञ्च ऋषीणाम् ऋणमिति

मन्यन्ते। एतावत्कालं तैरेतन्मनसि निधायैव कर्म कृतम्, कर्त्तव्यमपि तथैव। एतन्महत् कष्टकारणं भविष्यति, यदि ते स्वसमाजे स्वदेशे वा अर्थकृच्छ्रतामनुभूय वैदेशिकप्रभावेण च समाक्रान्ताः पण्डितानां स्वभावजं विद्यानुरागं चारित्रबलञ्च विजह्युः। विद्यानुरागेण चारित्रबलेन च सम्पूतास्ते इत्येव तेषां भारतवर्षे महत् गौरवस्थानम्। एतदस्माकं वर्षेऽस्मिन् महद् गौरवकारणं जातम्, यदेका ब्राह्मणकुमारी संस्कृतमहाविद्यालयस्थ-गवेषणाविभागीयान्तेवासिनी 'वेदतीर्थ' इत्युपाधिना समलङ्कृता। इतः प्राक् कदाऽपि काऽपि महिला परीक्षार्थिनी अनेनोपाधिना नैव भूषिताऽभवत्।

असम्पूर्णमेवास्मदीयमभिभाषणं भवेद् यदि संस्कृतमहाविद्यालयाध्य-क्षेभ्यः, सुयोग्येभ्यः, कर्मनिपुणेभ्यः, संस्कृतविद्यापारीणेभ्यः, आङ्गलविद्या-विशारदेभ्यः, शिक्षाक्षेत्रे, साधारणसंस्कृतशिक्षाभूमौ च विशेषेण परिचर-द्भ्यः अभिज्ञेभ्यश्च वाङ्गल-संस्कृत-एसोसियेशन्-कर्मकर्णधारेभ्यश्च शुभावदानभूतेभ्योऽस्माभिः साधुवादशतं न दीयेत। कृतज्ञा वयं भविष्यामो यदि सुमहत् साहायकं यदस्माभिर्लब्धं काउन्सिल-सभासदस्येभ्यः ये च सभाया उद्देश्यसिद्ध्यर्थं नितरामेव कृतश्रमाः सभापतिकर्मकरणे चास्माकं सहायभूतास्तेभ्योऽस्माभिः साधुवादो न दीयेत। इति शम्।

---

# सरलचित्सुखीसारम्

[ निबन्धकः—स्वर्गत-रमेशचन्द्र-वेदान्ततीर्थः ]

( पूर्वतोऽनुवृत्तम् )

## महती राजसभा ।

( सर्वे सभासदः पण्डिताश्च यथास्थानमुपविष्टाः ।

ततः प्रविशति राजा राजगुरुश्च । )

राजा ॥—ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्त्तिं
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं श्रीगुरुं तं नताः स्मः ॥

देव, अनेन खलु अशेषतत्त्वं विदुषां प्रवराणां विचारेण परं परितुष्टाः स्मः । यतः,

सतां नयेनोत्तमसेवया च
प्रश्नेन चोदारकथागतेन ।
विन्दन्ति वेद्यं सुधियोऽप्रमत्ता
वशिष्ठसंगादिव राघवाद्याः ॥

राजगुरुः ॥—

वत्स, श्रुतेः श्रुतं स्वात्मविवेकमद्य
तर्कात्मकेनाथ विचारणेन ।
संशोध्य ध्यात्वा च धियात्मवृत्त्या
हित्वाऽज्ञतां त्वं भव स्वप्रकाशः ॥
तिष्ठंस्तदात्मनि परे विमलस्वभावे
सर्वात्मके तपति सर्वपदार्थमुक्तः ।

निर्वाणशान्तमतिरम्बरकोशकान्ति-
धर्मेण राज्यमनुपालय तीर्णतृष्णः ॥

वेदान्ती । (प्रविश्य) राजन्, शमादिविशुद्धे निर्मले दर्पणोपमे ते चेतसि

येनैव ज्ञायते सर्वं यो न केनापि मीयते ।
साक्षात् स भासतां नित्यं परमात्मा स्वयंप्रभः ॥

राजर्षे, सकलदर्शनपारावारपारदृश्वनो भवतः पुरतोऽद्यास्य तार्किकवर्योप-स्थापितस्य पूर्वपक्षस्य निर्णयो भविष्यति, केऽत्र वेदान्ततत्त्वनिर्णये प्रतिपक्षिणो वराकास्तार्किकाः ? न हि प्रकाशमाने प्रचण्डरोचिषि सहस्ररोचिषि खद्योतरोचिः प्रभवति तत्प्रकाशमावरीतुम्, न वा सिंहस्य पुरतः प्रभावोऽस्ति फेरूणाम्, नापि समुद्दीप्तब्रह्मास्त्रप्रशमाय अर्हति किरातकरकलितकुटिलवंशदण्डः । न चैवास्ति भङ्गः स्वप्रकाशब्रह्मास्त्रधरस्य विदुषः कुतश्चित्, तदुक्तमस्मत्पुरःसरैः श्रीहर्ष-मिश्रपादैः,—

एकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचित् ।
आस्ते न धीरवरस्य भङ्गः सङ्गरकेलिषु ॥　　　　[ परावृत्य ]

श्रूयतां तार्किकधुरीण, इतः पूर्वमुपपादितं मया स्वप्रकाशलक्षणम्, तेन च प्रातिष्ठिपं स्वप्रकाशपदार्थम् । अत एव नास्ति तस्यासिद्धत्वाशङ्का । अतश्च संभवति अत्र **अनुभूतिः स्वयंप्रकाशा अनुभूतित्वात् यन्नैवं तन्नैवं** ( या न स्वयंप्रकाशा सा न अनुभूतिः ) **यथा घटः इत्यनुमानमपि प्रमाणम् ।** स्वप्रकाशाभावस्य व्यापकः खलु अनुभूतेरभावः घटादौ उपलब्धः, अनुभूतौ व्यापकस्य अनुभूत्यभावस्य अभावात् व्याप्यस्य स्वप्रकाशाभावस्य अभावरूपः स्वप्रकाशः सिद्धः ।

तार्किकः ॥—केयमस्थाने महती घटा वेदज्ञम्मन्यस्य अविदिततर्कनयस्य बालिशतमस्य भवतः, यो हि परिस्फुटमपि स्ववचनदोषं न पश्यति कथमस्या-प्रहस्तत्त्वविचारनयपरिशीलनस्य । यदपि उक्तं स्वप्रकाशलक्षणस्य सिद्धत्वात् नास्ति अप्रसिद्धविशेषणतादोषाशङ्का, तत्ते अज्ञानाकलितमेव अज्ञानसर्वस्वस्य । स्वप्रकाशलक्षणं हि अवेद्यपदार्थघटितं तव, अवेद्यत्वञ्च अप्रसिद्धमेव, न हि

तादृशम् अवेद्यं किञ्चिद् वस्तु कुत्रचित् अस्ति प्रसिद्धम्। अथ यदि अस्ति कुत्रचित् प्रसिद्धिरित्युच्यते तदा सिद्धसाधनताकेवलान्वयिताव्याघातादि-पूर्वोक्तदोषग्राहग्रासात् नास्ति ते कथमपि निस्तारः। अप्रसिद्धत्वे अप्रसिद्ध-विशेषणता अशक्यसमाधाना एवेति निपुणं विभावयतु भवानतिनिपुणः। यतोऽत्र समाधेरालम्बनमेव केवलं भवतो बलम्।

वेदान्ती ॥—मोच्चैर्वादीः, यतः—

सामान्यतोऽनुमानेन प्रसिद्धेऽपि विशेषणे।
कथं कथय पक्षोऽयमप्रसिद्धविशेषणः ॥

तथाहि,—वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वात् शौक्ल्यवद् इति सामान्यतो दृष्टानुमानेन अनिर्धारितधर्मिविशेषनिष्ठस्य अवेद्यत्वधर्मस्य प्रसिद्धत्वात् कुतस्तादृशसाध्यस्याप्रसिद्धिः। वेद्येन अन्योन्याभावेन अर्थान्तरता स्यादिति साध्येदेहे अत्यन्ताभावपदोपादानम्।

तार्किकः ॥—(स्मितं कृत्वा) शोभतेतमाम् अनुमानकौशलमदः स्वपक्षादर-मदिरामत्तचित्तस्य श्रीमतः, निपुणं पश्यतु तावदस्मिन्ननुमाने व्यभिचारदोषं समाहितमना भवान्। अस्तित्वप्रमेयत्वाभिधेयत्वादीनां कदाचिदपि कुत्रापि नास्ति अत्यन्ताभावप्रतियोगित्वम्, तेषां केवलान्वयित्वेन अत्यन्ताभावाप्रतियोगि-त्वात्, अतः साध्यस्य किञ्चिन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपस्य अभावाधिकरणेषु तेषु प्रमेयादिषु धर्मत्वस्य हेतोर्विद्यमानत्वात् को वारयिता हेतोरस्य व्यभिचार-दोषापातस्य।

वेदान्ती ॥—मैवम्, अस्तित्वप्रमेयत्वादीनामपि पक्षत्वेन पक्षतुल्यत्वेन वा तत्रापि किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वस्य साध्यत्वेन अभिमतत्वात्, भवतः स्वकपोलकल्पितकेवलान्वयित्वपरिभाषायाः सकलप्रमाणासिद्धत्वेन तादृशाप्रति-योगिभावस्य असिद्धत्वाच्च तत्र साध्याभावस्य निश्चयाभावेन साध्यसंदेहस्यैव आपातात्। नहि पक्षे पक्षसमे वा साध्यसंदेहस्य दूषकत्वम्, अपि तु तस्य साध्यसिद्धौ अनुकूलत्वात् अलङ्कारत्वमेव। अपि च अन्ततः स्वस्मिन् अस्तित्वादौ स्वस्य अत्यन्ताभावः अवश्यमङ्गीकार्य एव, आत्माश्रयदोषप्रसङ्गेन स्वस्मिन् स्वस्य

वर्त्तितुमशक्यत्वात् । न हि सुशिक्षितोऽपि नटवटुः स्वस्कन्धमारुह्य नर्त्तितुमर्हति । अतोऽस्त्येव अस्तित्वादौ स्वस्य अस्तित्वादेः अत्यन्ताभावः । यदि आत्माश्रय-दोषभयात् तत्र अस्तित्वादौ अन्यः अस्तित्वादिरङ्गीक्रियते एवमपि तत्रापि अन्यः अस्तित्वादिरङ्गीकार्यः । तथात्वेऽनवस्थादोषः, ततश्च एकासिद्धौ सर्वासिद्धेः न स्यात् कुत्रापि अस्तित्वासिद्धिः ॥

( क्रमशः )

---

# मयूरकविः

[ वैद्यनाथपायगुण्डे विरचितस्य मयूरशतकव्याख्यानस्योपोद्घातः ]

तत्र तावच्चिरन्तनजनवदनारविन्दतो निपीतः सादरं श्रीरविशतकोल्ला-सप्रसङ्गरसस्तन्यते । मालवदेशाधिपस्यावन्तिकाराजधानीकस्य कविजन-सभाभूषितस्य कविजनशिरोमणेर्याचकजनकल्पतरोर्धावककविकृतिरत्नावल्या-ख्यनाटिकाविलासितत्वेन ख्यातस्य श्रीमन्महाराजश्रीहर्षवर्मणः सभ्यौ कविजनमुकुटमणी चिरन्तनौ पौरस्त्यौ बाणमयूरावास्ताम् । तथाहि तत्र मयूरभट्टः श्वशुरः, तस्य जामाता कादम्बरीविलासिता बाणभट्टः, तयोः कवितावि‌षये मिथोऽतीव स्पर्धाऽसीत् । तत्र प्रागेव विदितवृत्तान्तो जगत्-ख्यातो राज्ञा सादरं समाहूतोऽसकृत् कदाचित्तां राजधानीमेत्य राजसमीपे समागतो राज्ञा महत्या सम्भावनयातिसादरं सपरिवारं स्वगृहमधि स्वसमीपं मन्दिरे संस्थापितः । तेन च स्थित्वा तत्र कतिचिद्दिनान्यतिवाहितानि । ततः कविताप्रसङ्गे मयूरपद्यानि सादरं निपीय राज्ञाऽतिसोत्कण्ठं प्राग्वत् समाहूतस्तादृशख्यातिधार्मिकश्चिरन्तनो विदितवेदितव्यो मयूरभट्टः शिष्य-सङ्घभूषितः सहयरथोष्ट्रदोलाभूत्यादिपरिवारोऽप्युपावन्तिकं समागतः । ततो

निपीय तदागमनममात्यतनयपुरोहिताद्यभिगमनपुरःसरमवन्तिकां समागमय्यातिसम्भावनया सादरं रुचिरतरे बाणभट्टमन्दिरोपमन्दिरे सुवासितो भोजनवसनाद्युपकरणपूरणेन सत्वरमतितोषितश्च। ततो मयूरभट्टस्तत्र यथाकालं स्नानसन्ध्यादेवपूजादिनित्यकृत्यं विधाय शिष्यैः परिवृतो यथारुचि भुक्त्वा किञ्चित्कालमतिसन्तोषेण पौराणराजसम्बन्धिवृत्तं वर्णयन् सुखासने संस्थितः। अथास्ताचलमौलिमुकुटावलम्बि मिहिरबिम्बं समालक्ष्य सायंसन्ध्यादिचरमकृत्यं यथाविधि विधाय रथ्याखेदमपनेतुं मन्दिरान्तर्भागे ग्रीष्मोष्मापनयनाय अनावृतसुधाधवलितेन्दुकिरणपरिपूतसुदेशे पवमानयववति (?) रुचिरमृदुशय्यायां यथासुखमुपविश्य सुष्वाप। शिष्यजनोऽपि पादसंवाहनव्यजनविचालनजलताम्बूलदानादिसेवां विधाय तदाज्ञयान्यस्थलं गत्वा सुप्तः। अथ मयूरभट्टो ब्राह्मे मुहूर्त्त उत्थायेष्टदेवतां सञ्चिन्त्य भूमिं सम्प्रार्थ्य देहशुद्धिं विधाय शुद्धधौतवाससी परिधाय परमात्मचिन्तनाय सुखासने प्राङ्मुखो दर्भपवित्रपाणिः प्राणानायम्योपविष्टः। ततो बाणभट्टपत्नी मयूरभट्टतनया पतिशयनादुत्थाय मन्दिरोन्नतभूभागात् सोपानरथ्ययाऽवतरन्ती शनैः शनैरवलोकिता मयूरभट्टेन। अवलोक्य च दैवादन्यदीयेति भ्रमात् तादृग्रूपैवाष्टभिः पद्यैर्वर्णिता। तद्यथा—

का एषा मुक्तमुक्ता विलुलितवसना स्वेदलग्नाङ्गवस्त्रा
प्रत्यूषे याति बाला मृग इव चकिता सर्वतः शङ्कयन्ती।
केनेदं वक्त्रपद्मं मधुमधुररसं खण्डितं केन पीतं
स्वर्गः केनाद्य भुक्तो हरनयनहतो मन्मथः कस्य तुष्टः ॥१॥
वामेनावेष्टयन्ती प्रविरलकुसुमं केशपाशं करेण
प्रभ्रष्टश्चोत्तरीयं गुण...शिथिलां मेखलां दक्षिणेन।
ताम्बूलं वामहस्ते प्रहसितवदना मुक्तकेशानुरागी
निर्याता वासगेहे मदनवशगतामाह नः प्रार्थयन्ती ॥२॥
का एषा परिपूर्णचन्द्रवदना गौरी मृगावेक्षणा
लीलामत्तगजेन्द्रहंसगमना सुश्रीकृता भूतला।

निश्वासेन सुगन्धशीतलमुखी वाचा मृदुभाषिणी
स्वं शल्यं पुरुषः स जीवति युवा यस्य प्रिया ईदृशी ॥३॥

का एषा जघनस्थलीषु ललिता चोन्मत्तकामाधिका
भ्रूभङ्गं कुटिलं चेन्द्रधनुषस्तस्य प्रभां चोरयन्।
राकाचन्द्रप्रफुल्लपङ्कजमुखी क्षामोदरी सुन्दरी
वेणी इन्द्रमणी विभक्तिललितं वेणी भुजङ्गाकृतिः ॥४॥

का एषा रतिभावहावविलसच्चन्द्राननं बिभ्रती
गात्रे चम्पकपुष्पवर्णसदृशी पीना वयोऽलङ्कृता।
यच्चासौ चलति प्रगल्भहरिणा सा लीलया स्वच्छया
किंत्वेषा गगनारविन्दवदना स्वानन्ददा कामिनी ॥५॥

का एषा प्रस्तुताङ्गी प्रचलितनयना हंसलीला व्रजन्ती
द्वौ हस्तौ कुङ्कुमाढ्यौ कनकविरचितौ नूपुरौ शब्दयन्ती।
इत्थं मार्गे गता सा कुसुमविलुठिताबद्धवेणी लुठन्ती
ताम्बूलं वामहस्ते प्रहसितवदना गुह्यशालां प्रविष्टा ॥६॥

का एषा नवयौवना शशिमुखी कान्ता पथे गच्छती
निद्राव्याकुलिता सघूर्णनयना पक्वञ्च बिम्बाधरा।
केशैर्व्याकुलिता नखैर्विदलिता दन्तैश्च खण्डीकृता
केनेयं रतिराक्षसेन रमिता शार्दूलविक्रीडिता ॥७॥

का एषा स्तनपीनभारकठिना मध्ये दरिद्रायती
विभ्रान्ता हरिणीविलोलचपला सन्त्यक्तयूथा मृगी।
मत्ता खिन्नगजेन्द्रमन्दगमना संलीलया गम्यते
दृष्ट्वा रूपमिदं ह्यनङ्गगमनं वृद्धोऽपि कामायते ॥८॥*

---

* श्लोका एते मयूरभट्टविरचिता इति प्रसिद्धिः। एतेषां समाचीनानि पाठान्तराण्यप्युपलभ्यन्ते। संख्यान्तरे तानि प्रकाशयिष्यन्ते। श्लोकानां गुणदोषविचारा अपि तदैव विधास्यन्ते।

अथ सा गृहाभ्यन्तरमलङ्कृतवती। ततो मयूरभट्टस्यातिश्रोत्रियस्याति-धार्मिकस्य प्रामादिकपापाद् देहे धौतस्वच्छे वाससि मसीबिन्दुरिवाकस्मात् कुष्ठरोगः प्रादुरभूत्। ततः स्वदेहवैकृतमालक्ष्य त्वरितमुन्नतमन्दिराद-वतीर्य वास आच्छाद्य गृहाभ्यन्तरं प्रविश्योपविश्याचिन्तयत् अहो किमिद-मकस्मान्मम देहे वैकृतमभूत्। आजन्म ज्ञानतः कामतश्चाचीर्णं किमपि पापं तावन्न स्मरामि सपदि परस्त्रीवर्णनादृते, भवतु परामर्शयामि तावदिति। ततः प्रियशिष्यमाहूयावोचत्, आयुष्मन् त्वया गत्वा सम्यक् परामृश्यागन्तव्य-मिदमस्मदावाससमीपे सप्तभूमं सुधाधवलितमभ्रंलिहं कस्य मन्दिरमिति। स तथेत्युक्त्वा तत्र गत्वा संपरामृश्य प्रत्यागताभिवन्दनं विधायोक्तवान्, गुरो, एतद्भवज्जामातुर्बाणभट्टस्य मन्दिरमिति। ततस्तत् समाकर्ण्य सपदि महान्तं खेदमनुप्राप्य अचिन्तयत्। अहो मम तनया मया भाग्यहीनेन वर्णिता तस्येदं फलम्। भवतु, अतः परं श्रीसूर्यस्तुतिं सम्पाद्य कुष्ठरोगं दूरीकृत्य तस्य देहान्तप्रायश्चित्तं करिष्यामीति। एवं निश्चित्य प्रियशिष्यं प्रत्युक्तवान्, आयुष्मन् मया किञ्चित् कार्यमाज्ञाप्यते, तत्त्वया निर्विचारतयाऽविशङ्कं स्वगतमेव कर्त्तव्यमिति। तेन तथेत्युक्ते पुनरब्रवीत्, अद्य शनिवासरे मया उपवासोऽनुष्ठेयः। यः कश्चिन्मम दर्शनार्थी राजपुरुषोऽन्यो वा समायाति तं प्रतीत्थं वक्तव्यम्, गुरुर्मार्गपरिश्रान्तः पूर्वेद्यु निशि भुक्तवान्, आहारापरि-पाकादद्य ज्वरेण शिरोऽर्त्त्या च पीडितोऽन्तः सुप्त* स्तिष्ठतीति। त्वया सशिष्यवर्गेण देवपूजानैवेद्यवैश्वदेवादि विधाय सति समये भोक्तव्यम्, भृत्यवर्गं समाहूय हयवृषभादिभ्यश्चाहारो दापनीयः। मन्दिरद्वार्येकेन स्थिरतया स्थेयं तथा यथा कश्चिदविदितोऽन्तर्नायाति। शिष्याणामप्य-नाहूतेन केनापि मत्समीपे नागन्तव्यम्। त्वया च नातिदूरे सदा यथोचितं स्थेयम्। अन्यच्च, त्वया शिप्रातीरे गत्वा विजने महान्तं वृक्षमा-लक्ष्य सायमन्धकारे तदुपरितनशाखायामेकशतरज्जुकं भारसहं शिक्यं बन्ध-

---

* कुम्भकर्णे भकारोऽस्तीति न्यायेन चौर्यशब्दसादृश्येन चौर्यशब्दस्य प्रचलनम्। प्रामाणिकास्तु बहव एव लोके एतस्य प्रयोगं नानुमन्यन्ते।

नीयम्, बहवः काष्ठभारास्तत्र प्रापणीयाः। ततोऽपररात्रे चतुर्भिः शिष्यैः शय्यायां सुप्तोऽहं मुमूर्षुरिव तत्र स्थले शायनीयः। त्वयापि देवपूजोपकरणं धौतवसने वह्निं च संगृह्य तत्र गन्तव्यमिति। अथ तेन यदुक्तं सर्वं तथैवानुष्ठितम्। अथ मयूरभट्टोऽपररात्रे शिप्रातीरं प्रापितो यैस्तांश्छिष्यानुक्तवान्। भवद्भिः शय्यामादाय दूरे गत्वा स्थेयम्। अनेन पथा यः कश्चिदायाति स निवारणीयश्चेति। शिष्यैस्तथैव कृतम्। प्रियशिष्यस्तु समीपे स्थापितः। स्वयं च देहशुद्धिं विधाय स्नात्वाचमनप्राणायामादि यथोचितं विधाय तरुमूले समागत्य स्थण्डिलेऽग्निं प्रतिष्ठाप्येद्ध्वालंकृत्य काष्ठभारान् अग्नौ क्षिप्त्वा चितारूपमवातं सन्निवेश्य प्रियशिष्यं स्वसमीपमाहूय निजदेहमुद्घाट्य प्रदर्श्योक्तवान्। अहो अकस्मान्मद्देहे कुष्ठरोगोऽभूत्। तदपनोदनाय श्रीसप्तसप्तिर्मया स्तूयते, त्वयाऽनतिदूरे स्थेयम्। मया यद् यत् पद्यं पठ्यते तदवधाय पत्रे लेख्यम् इति। ततः समाकर्ण्य स शिष्यः समीपे स्थितवान्। अथ मयूरभट्टस्तरुमारुह्य शिक्यप्राङ्मुखस्तिष्ठन्नरुणोदये श्रीसूर्यं स्तोतुम् एकैकं पद्यं रचयित्वा शिक्यस्यैकैकां रज्जुमच्छिनत्। शिष्यः शतावधानी तत्तदवधाय पत्रे लिलेख। एवं पूर्वोदितरश्मिहयारुणरथमण्डल...सूर्यमण्डलक्रमेण एकोनशतं पद्यानि कृतानि, तावत्यश्च शिक्यरज्जवश्छिन्नाः। अथ कथञ्चिदेकां रज्जुमालम्ब्य शततमम् पद्यं विरचितवान्। तत्क्षणमेव तच्छरीरं कुष्ठरहितमभूत्। तदालोक्य श्रीमत्सूर्यप्रसादेनेदं सम्पन्नमिति मुदं सम्प्राप्य देहान्तप्रायश्चित्तं कर्तुमवशिष्टां रज्जुं छेत्तुमारब्धवान्। सपदि सन्तुष्टेन भगवता भास्करेण समीपमेत्य करौ धृत्वा भूमावुत्तार्य हस्तेन तद्देहं परामृश्योक्तम्, जात इदानीमन्यं वरं याचस्व इति। अथ तेनोक्तम्, भगवन्, ममायमेव वरो यदन्तर्यामी भवान् प्रत्यक्षीभूत इति। अथ भगवतोक्तं प्रसन्नेन मया प्रार्थितमप्येतद् दीयते पुरुषायुषजीवी आजीवनं नीरोग ऐहिकान् सकलान् भोगान् भुक्त्वा देहान्ते मत्सायुज्यं प्राप्स्यसि। यश्चैतेन पद्यशतकेन मां स्तोष्यति स सर्वपापरहित आरोग्यं सत्कवितावुद्धिं बलाधिक्यं सौन्दर्यमा-

युष्यं विद्याप्रभुत्वं द्रव्यं सुखञ्च मत्प्रसादाल्लप्स्यते इत्येवं समाभाष्य तस्य पश्यत एव भगवान् रश्मिमाली गगनगतिमारूढः। मयूरभट्टोऽपि ततो महानयं प्रसाद इति शतं साष्टाङ्गान् प्रणामान् विधाय श्रीसूर्यदत्तवरानुरोधेन फलस्तुतिपद्यमेकं रचितवान्। अथ प्रातःसन्ध्यादिकं विधाय देवपूजां कृत्वा प्रतिष्ठापितं वह्निं सम्पूज्य प्रदक्षिणीकृत्य साष्टाङ्गं प्रणम्य देहान्तप्रायश्चित्त-सङ्कल्पबाधनिष्कृतिं विधाय विसृज्य शिष्यैः परिवृतो हर्षितो निजावासमागत्य ब्राह्मणान्निमन्त्र्य सम्पूज्य सम्भोज्य सपरिवारो बुभुजे। ताञ्च यामिनीमति-मुदाऽनेन प्रसङ्गेनातिवाहितवान्। ततः श्रीसूर्यप्रसादतुष्टस्य मयूरभट्टस्यानु-मत्यायं प्रसङ्गः शिष्यैर्लोकगोचरीकृतः। अथ शुभे लग्ने पुरोधसं विद्वांसञ्च सम्प्रेष्य महतादरेण राज्ञा श्रीहर्षेण समाहूतो विहितप्रभातकृत्यो मयूरभट्टः सशिष्यो राजमन्दिरमेत्य राज्ञा आमन्दिरद्वारमभिगम्य गृहीत्वा पुरस्कृतः सभाशालां समानीय रुचिरतरोन्नतासने समुपवेशितः प्राणम्यत। यथास्थान-मुपविष्टाय राज्ञे श्रीसूर्यशतकेनैवाशिषो दत्तवान्। ततः सर्वैः सभ्यैः कविजनैर्विद्वद्भिश्चाभिस्तुतौ राजमयूरौ। ततोऽतितुष्टेन राज्ञा गजाश्व-रथग्रामवसनाभरणदोलामन्दिरधनाद्यर्पणं समाप्य मत्समीप एव स्थेयमिति सम्प्रार्थ्य मन्दिरं गन्तुं प्रत्युत्थानप्रणामादिपुरःसरमनुज्ञातः स्वमन्दिरं विवेश। ततो राजाज्ञया स्वदेशात् कुटुम्बं समानीय राजदत्तमन्दिरे बाणभट्टवत् स्थितो नित्यं स्वीयाभिनवपद्यपद्यैः श्रीहर्षभानुं तोषयति स्म। तदेव श्रीसूर्यशतकं फलस्तुत्येकपद्योत्तरं प्रादुरभूदिति।

---

# सुभाषितानि

Give thy thought no tongue,
Nor any unproportion'd thought his act.
Be thou familiar, but by no means vulgar.
Those friends thou hast, and their adoption tried,
Grapple them to thy soul with hoops of steel ;
But do not dull thy palm with entertainment
Of each new-hatch'd unfledged comrade. Beware
Of entrance to a quarrel, but being in
Bear't that the opposed may beware of thee.
Give every man thy ear, but few thy voice ;
Take each man's censure, but reserve the judgement
Costly thy habit as thy purse can buy,
But not express'd in fancy ; rich, not gaudy
For the apparel oft proclaims the man,
And they in France of the best rank and station
Are most select and generous, chief in that.
Neither a borrower, nor a lender be ;
For loan oft loses both itself and friend,
And borrowing dulls the edge of husbandry.
This above all : to thine own self be true,
And it must follow, as the night the day,
Thou canst not then be false to any man.

( किङ्किणीमालायां श्रीमन्महालिङ्गशास्त्रिकृतोऽनुवादः )

मा मनोरथमात्रस्य कुरु वाचा प्रपञ्चनम् ।
असम्यग्विनिविष्टं तं क्रियया न च योजय ॥१॥
तावदातिष्ठ सौलभ्यं साधारण्यं न यावता ।
उपश्लिष्य स्वमित्रेषु संमतेषु पुनः पुनः ॥२॥
नापरीक्षितशीलानां तदात्वोदयशोभिनाम् ।
गच्छेः सुहृदुपाख्यानां लालसत्वेन लाल्यताम् ॥३॥

यत्तो भव यथा वाचा कलहं न प्रवेक्ष्यसि ।
प्रविष्टस्तत् कुरु स्वेन स्वं नियच्छेत् न परो यथा ॥४॥
श्रुतिं देहि परोक्तीनां स्वोक्तीरल्पं परश्रुतौ ।
गृह्णीष्वान्यस्य सिद्धान्तं निगृह्णीष्वात्मनि स्वकम् ॥५॥
न विलासधिया वेषरचनां नोज्ज्वलामपि ।
निजर्द्धिमनतिक्रान्तां रुचिराममिरोचय ॥६॥
यथावद्यद्विवृण्वन्ति परिधानानि पूरुषम् ।
नाधमर्णो भवेः कस्याप्युत्तमर्णोऽथवा भुवि ॥७॥
स्वयं नश्यद्धनं मित्रं नाशयत्येवमेककम् ।
कुण्ठयत्यपि वार्तासु निशितां जागरूकताम् ॥८॥
सर्वथा न व्यभिचरेदात्मना क्वापि चात्मनः ।
परेषामनभिद्रोहस्ततः स्वेनैव सिध्यति ॥९॥

( स्वर्गतमहादेवपाण्डुरङ्ग ओक-महोदयावरजेनोऽन्तरामाचार्येण गद्यमयोऽनुवादः )

यस्य कस्याप्यग्रे मनोगतं मा प्रकटीकुरु। असम्यगालोचितेषु कार्येषु मा प्रवर्तस्व। वयस्यैः सार्धमनियन्त्रणानिर्भरं व्याहरन्नपि प्राकट्यवचन-रुचिर्मा भूः। यानि कान्यपि मित्राणि दृढपरीक्षणपूर्वं त्वया संपादितानि भवेयुः तान्यत्यायसैः स्नेहपाशैर्निगडितानि कृत्वात्मनिर्विशेषतां नय। एवं सत्यपि नवमनिरूपितस्नेहसद्भावं नरं सुहृत्त्वेनाभिनन्दितुं मा त्वरस्व। कलहस्यानारम्भस्तावत् प्रथमं बुद्धिलक्षणम्। इदमप्यपरं यत् सकृत् प्रस्तुतः कलहस्तथा स्थैर्येणानुरोद्धव्यः यथा प्रतिपक्षस्तामपाकर्तुं न धृष्णुयात्। बालादपि सुभाषितं ग्राह्यं किं पुनर्वयोवर्षीयसः ? स्वाभिप्रायस्तु सहसा न प्रकाशनीयः। सर्वस्यापि वचनं श्रोतव्यम्। आत्मनो निर्णयस्तु न स्फुटीकार्यः। आयसदृशान्यपि ते वासांसि महार्हाणि भवेयुः, न पुनः स्वैरविरचितानि, न वा शोभामात्रप्रयोजनानि। उक्तं हि—'वासो धनं गमयति वाससा शीलमुच्यते।' न त्वया वयस्यव्यवहारे उत्तमर्णेनाध-मर्णेन वा भवितव्यम्। मित्राय दत्तं चेत्, धनं स्वयं नश्यत्, मित्रमप्य-

मित्रतां नीत्वा, तदपि नाशयति नाम। अथ मित्रादात्तं, तत् क्रमेण नरं व्ययविषये शिथिलावधानं जनयति। इदं त्वं सविशेषमवधारयेः। मनः-पूतं समाचरसि चेत्, परवञ्चनायां न ते प्रवृत्तिरुपजायेत।

---

## ग्रन्थनिकषः

**आयुर्वेदमञ्जूषा**। कविरत्नभिषक्चूडामणिवैद्यभूषणवैद्यशास्त्रि-प्रभृतिविरुदधारिणा श्रीमणिशङ्करशर्मणा निर्मिता। प्राप्तिस्थानम्—श्रीविशुद्धा-नन्दसरस्वतीदातव्य-औषधालय, ३७ बड़तल्ला ष्ट्रीट, कलकत्ता। मूल्यं रूप्यकमेकम्।

प्रथितयशसा भिषग्वरेण श्रीमता मणिशङ्करशर्मणा चतुर्नवत्यधिकशत-श्लोकात्मकेऽस्मिन् पुस्तके ज्वरादिविविधामयानां सुपरीक्षितानि भेषजानि पथ्यानि च समुपवर्णितानि स्वर्णादिविविधधातूनां शोधनप्रणाली गुणाश्च प्रतिपादिताः, पायसफेनिकालप्सिकादीनां चाभ्यवहार्याणां हिताहितत्वा-दिकञ्चोपनिबद्धम्। ये तावद् गृहस्था आयुर्वेदमते श्रद्धालवोऽपि पुत्र-कलत्रादीनामामयप्रशमनाय न प्रभवन्ति प्रख्यातांश्चिकित्सकानाह्वाययितुं तेषामतीवोपकारीदं पुस्तकम्। मुद्रणपरिपाटी पुनरत्रत्या सुतरां समुद्वे-जयति हृदयानि सहृदयानाम्। प्रायेण प्रतिपद्यमेव प्रत्यक्षीभवन्ति मुद्रण-प्रमादाः। तथा ६६ श्लोके द्वितीयार्धमेवं मुद्रितम्—

शरन्मनोज्ञेन्दु समानवक्त्रे
हिक्काप्रिये शान्तिमुपैत्वित्थम्।

अत्राक्षरग्रथकानां दौरात्म्यात् कवेः कान्ता हिक्काप्रिया सञ्जाता। आशास्यते च पुनर्मुद्रणावसरे दूरीकुर्यात् कविरत्नमहोदयः कुसुमसुकुमारायाः कान्तायाः समुत्कटमिदं हिक्काप्रियत्वमिति शम्।

**श्रीवैष्णवकण्ठरत्नम् अथवा श्रीवैष्णवोपवास-व्रतमीमांसापरिशिष्टम्।** श्रीनन्दकुमारगोस्वामितत्त्वनिधि-काव्यतीर्थेन प्रणीतम्। तत्कृतया सरलाख्यटीकया वङ्गानुवादेन च सहितम्। मूल्यं रूप्यकमेकम्।

श्रीहरिभक्तिविलासग्रन्थोपवासव्यवस्था लीलयेव यथा वैष्णवा अवबुध्येरं-स्तदर्थं ग्रन्थकृता श्रीवैष्णवोपवासव्रतमीमांसादिप्रबन्धचतुष्टयं संमुद्रय सुहृद्भ्य उपायनीकृतम्। तच्चालोचयद्भिर्विपश्चिद्भिः सप्रणयमनुयुक्तस्तेषां संशयसमुच्छेदायेदानीं श्रीवैष्णवकण्ठरत्नमिदं निर्मिमाय। अत्र च प्रायेणा-तिसुबोधया मनोहरया च भाषया मीमांसाशास्त्रप्रतिपादिता विध्यादि-विविधविषया व्याख्याताः, एकादश्यादिनिर्णयार्थं च समीचीनो विचारः प्रवर्तितः। संस्कृतभाषया च समुपनिबद्धानां विषयाणां वङ्गभाषामयोऽनु-वादोऽपि सन्निविष्टः। एतेन च सर्वेण पुस्तकमिदमतीवोपादेयं संवृत्तम्। अनुवादस्तु सर्वत्र प्रतिपादितं विषयं न स्फुटीकर्तुमलम्, अत एवाशास्यते पुनर्मुद्रणञ्चेत् कदाचित् स्यात् तर्हि सर्वत्राक्षरानुवादं वर्जयित्वा वङ्गभाषयैव मूलं स्फुटीकर्तुं प्रयतेरन् गोस्वामिमहाभागाः। "उत्पत्ति विधि, रधिकार विधि, रङ्गविधिः प्रयोगविधिश्चेति" इत्येवं रीत्या मुद्रणमपि अर्थावबोधं विशेषतः प्रतिहन्तीति जानीयुर्गोस्वामिमहोदयाः।

———

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहत्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| October, 1934. | १८५६ शकीये आश्विने<br>१७श-वर्षस्य ६ष्ठ-संख्या | Vol. XVII<br>No. 6 |


## जाम्बवतीपरिणयम्

श्रीरस्तु, अविघ्नमस्तु

जाम्बवतीपरिणयाख्यमिदं नाटकम् । हरिः ओम् ।

—०:०:०—

वासिष्ठं सततं देयात्तद्वारणमुखम्महः ।
यच्चन्द्रमौलेरानन्दनिष्यन्दं प्रथमं विदुः ॥१॥

अपिच—

सौख्यं समग्रयतु वः स जगन्निवासो
यस्योरसि स्फुरति कौस्तुभरत्नहारः ।
गाढोपगूढकमलाहृदयानुराग-
निष्यन्दबिन्दुरिव निश्चलसन्निवेशः ॥२॥

आकूतस्मितगर्भमर्धवचसा नीलेति शंसन्मिथो
रुक्मिण्या वदने रुषा सकुटिलभ्रूवलयं (?)वेक्षयन् ।
सैषा तन्वि तवेति रोमलतिकां हस्ताञ्चलेन स्पृशन्
आविस्साध्वसयाऽनया सरभसाश्लिष्टो हरिः पातु वः ॥३॥

अन्यच्च—

वैदेहीं वनितामणिं रघुपतेरन्वेष्टुमिच्छन् पदं
दुर्गं प्राप्य विधाय तत्र समरक्रीडाभिवृत्त्याञ्जसा ।
दत्त्वा श्रीरघुनन्दनाय दयिताचूडामणिं प्राप्तवान्
कीर्तिं यः कुमुदोज्ज्वलां दिशतु वः श्रेयः स वायोः सुतः ॥४॥

( नान्द्यन्ते ) सूत्रधारः ( सानन्दं परिक्रम्य सपुष्पाञ्जलिक्षेपम् )

विश्वामित्रमहासत्रपरित्राणविधायिने ।
असुराहंक्रियाहारिसहसे महसे नमः ॥५॥

तदहं विदितकार्यामार्यामाहूय सङ्गीतकमाचरामि ।

( नेपथ्याभिमुखमवलोक्य )

आर्ये विधेहि दृष्ट्योरमृतास्वादं विना विलम्बेन ।
कोऽपि करणीयभारः कलयति मयि हन्त कमपि सन्तोषम् ॥६॥

( प्रविश्य )

नटी—अज्ज किं करणिज्जं ।

सूत्रधारः—आर्ये, किं न पश्यसि ? अद्य खलु भगवतश्चराचरगुरोरपारकरुणापारावारस्य नमदमरशिरोमन्दारकुसुमवासितपादारविन्दस्य विजयनगरनिवासवासनावधीरितधनदनगरविहारदोहदस्य हेमकूटगिरिकटकवास्तव्यकुटुम्बिनः कर्णाटराज्यरक्षामणेः श्रीविरूपाक्षदेवस्य चैत्रोत्सवावलोकनाय सङ्गता परिषत् । यैषा—

नाट्याम्नायमहारहस्यपदवीपारीणधमप्रक्रमा
नानानाटकभेदशालिकवितानासीरसारस्वता ।
नित्यं शास्त्रविचारचारुधिषणा वैशद्यविद्योतिता
सारस्याम्बुधिकौमुदीलहरिका भव्या पुरो वर्त्तते ॥७॥

नटी—ता एदाए पुरदो किं पि रूवअं णिरूविदुकामो अज्जो ।

सूत्रधारः—अथ किम् ।

नटी—इमीए उण असरसिए परिसआए पुरो णच्चं ता...ण...म्मानजइ अणवहाएण दाहोज्ज एव विसंवो वि अम्हे आवदेज्ज ।

सूत्रधारः—आर्ये ! साधु साधु !

लोकापवादाद् भेतव्यं दुष्टादाशीविषादिव ।
तस्य प्रतिविध(?) श्रेयः......परमवाप्यते ॥८॥

अपि तु वयं विद्यापारङ्गताः किञ्चैषाऽपि न पुरोभागिणी ।

( उपरि ग्रन्थपातः पुटत्रयपरिमितः )

[कृ]ष्णरायः कविः

सूक्तिः कर्णरसायनं सुमनसां श्लाघ्यस्वभावा सभा ।
चारित्रं यदुवंशशेखरमणेर्देवस्य सर्वोत्तरं
पारम्पर्यकृतश्रमाः पुनरमी नाट्येन पारा वयम् ॥९॥

किञ्च—

असारामपि गृह्णन्ति वाचं हरिकथाश्रयाम् ।
सुमनोगन्धलोभेन सूत्रं शिरसि धार्यते ॥१०॥

तदलं विलम्बेन । विधीयतामधिकश्लाघन्निदाघमङ्गीकृत्य सङ्गीतकम् । सम्प्रति हि—

पुष्पितपाटलपटला विचकिलसौरभ्यभ......माः ।
जलपानमात्रनिष्ठितजनताहृदयस्पृहा दिवसाः ॥११॥

नटी—तह । ( इति गायति )

पविसिय उरोगइन्दो उत...लुगो निदाहदावेण ।
गह्णिअ लिसन्तुसि देहो इसीअ लाअंतो ॥१२॥

( नेपथ्ये )

साधु रङ्गोपजीवी कुरङ्गलोचने साधु अध्यवसितमनुकूलयतीव ते भूतार्थः ।

( नेपथ्याभिमुखमवलोक्य )

अये ! नारदः ।

महतीम्मुदमावहन् हृदन्त-

मँहतीवादनमांसलानुभावैः ।

अयमभ्युपयाति हन्त साक्षा-

दरविन्दासननन्दनो मुनीन्द्रः ॥१३॥

आवामप्यन्तरवर्णिकायै प्रयतावहै । ( इति निष्क्रान्तौ )

इति प्रस्तावना ।

( ततः प्रविशति नारदः ) ।

नारदः । अहो महतामपि परोरजो मनः सर्वजनप्रवर्तनाय स्वयमपि संसारमनुरुणद्धि । यतः

देवे यादववंशमौलिमणितां याते जगद्रक्षितु'

जाता जाम्बवतः कुले जलधिजा सा जाम्बवत्याख्यया ।

पौत्रीं तामरविन्दभूर्घटयितु' पु'सा परेणामुना

मामादिक्षदमन्दसम्मदवशादाविःस्मितैराननैः ॥१४॥

(परिक्रामन् सविचिकित्सम् ) कथमिव कमलभवदत्तबिलान्तरसन्ततसन्निहितामारूढयौवनामेनामवनिमण्डलमुखं मण्डलयन् पुण्डरीकाक्षो निरीक्षेत । यथा कथञ्चिदवलोकिताऽपि राधामुखावरोधाङ्गनाविविधविलासविधेयहृदयस्य देवकीसूनोराशास्या स्यात् ? ( सनिश्चयं )

प्रभवेत् प्रथमाक्षिपातमात्रात् प्रकटो हन्त परस्परानुरागः ।

यदयं हरिरम्बुजालयेयं—

किञ्च

—महती साऽपि सरोरुहासनाज्ञा ॥१५॥

अन्योन्यसन्दर्शने प्रयतनीयम् । तद् द्वारकामेव गत्वा विचारयामि ( इति परिक्रामति । )

अरण्यानी सेयं करटिकरटानर्गलगल-

न्मदस्रोतो जातोदयबहुलसौरभ्यभरिता ।

स्फुरज्झिञ्झाटप्रकटकटुभात्कारजनित–

भ्रवशशूला(?) हेलाकलितरवकण्ठीरवकुला ॥१६॥

तत्र भ्राम्यन्तां श्वापदाः ।

नारदः । ( कर्णं दत्त्वा ) । उपजाम्बवद्विलं कस्यायमानखकटककलकलः श्रूयते । विचारयामि । ( इति परिक्रामन् विलोक्य ) । कोऽयमतित्वरयागत्या गत्याऽस्मदभिमुखमापतति । ( विभाव्य ) देवकीतनयसारथिर्दारुकोऽयम् । तदत्र सन्निहितेन भवितव्यं दनुजदमनेन ।

( प्रविश्य )

दारुकः ॥ अये अघटितघटनाविशारदो नारदः ।

( उपसृत्य ) प्रणमामि ।...

नारदः ॥ भव्येन युज्यस्व । कुत्र वा सत्वरं परिक्रम्यते ।

दारुकः ॥ प्रसेनप्रमुखैः साकं मृगयादिविनोदनैः ।

चक्री चिक्रीडिषन्नेतामागतो विपिनस्थलीम् ॥॥१७॥

समादिष्टश्चाहं देवेन । अनिगृहीतश्वापदमरण्यं न वा, अवलोक्यतामिति । मयाऽपि विलोकितम् ।

विशालवागुराचक्रवलमानमृगाकुलम् ।

विपिनं भयसन्त्यक्तनिजद्वेषशरारुकम् ॥१८॥

निवर्तमानेन च मया वागुरावलयनिषिद्धसमवर्त्मतया पश्चिमतो गतेन विलोकितं कस्यचिद्देवतायतनस्य किमपि हृद्यमुद्यानम् । तदवलोकनक्षण-विलम्बितस्त्वरयागच्छामि ।

नारदः ॥ ( सानन्दमात्मगतम् ) हन्त सुघटितं घनचातुर्यनिधिना विधिना ।

बिलमध्यनिवासिनी क्व सा

क्व हरिर्द्वारवतीं समास्थितः ।

इति चिन्तयता मयाऽधुना

कृतकार्येण यथा न तुष्यते ॥१६॥

यदिदं निकषाबिलं जाम्बवत्प्रतिष्ठितस्य भगवतो रघुपतेरुपायनमुद्यानम्। साऽपि वत्सा प्रतिदिनमपि रघुपतिचरणारविन्दवन्दनाय समायाति। अयञ्च दारुकवचनादाखेटखेदापनोदनाय तमाराममभ्यायात्। तत्र न सम्पद्यते तयोरन्योन्यावलोकनसुखं जाम्बवतीजनार्दनयोः। जाने च परस्परसन्दर्शने पुरा जननानुरागः प्राकट्यमापद्यते।

( प्रकाशम् ) दारुक निरस्तजगदापदो देवस्य किमन्यदाखेटकेलिमन्तरेण विनोदनं हृदयस्य। ( सविचिकित्समिव ) कथय कथमत्यर्हेषु दाशार्हेषु प्रामुख्यं प्रसेनस्य।

दारुकः ॥ भगवन्

न विद्या न गुणोत्कर्षो न कुलीनत्वमुत्तमम्।
श्रेष्ठतामावहेत् पुंसः केवलं सम्पदागमः ॥२०॥

नारदः ॥ अतिवासवसम्पत्सु यदुप्रवरेषु कोऽस्य सम्पदुत्कर्षः।

दारुकः ॥ प्रायेण नाऽऽकर्णितमिदं महर्षिणा।

प्रसेनस्य भ्राता व्यथितसकलामर्त्यहृदयां
तपस्यां सत्राजिद् व्यधित स सवित्राहितमनाः।
घनीभूतं तेजो निजमिव सुनीरन्ध्रकिरणं
मणिं प्रादादस्मै द्युमणिरनणीयांसमनघम् ॥२१॥

किञ्च, स्यमन्तकाभिधानमनुदिनमभिलषितदायिनं मणिं सौभ्रात्रात् सत्राजितः कनीयसे प्रसेनाय वात्सल्यायत्तचित्तो दत्तवान्।

अखर्वं गर्वते सोऽयं प्रसेनो मणिमावहन्।
वक्षसा राजसद्मस्य पुरतोऽपि रमापतेः ॥२२॥

तदेनं यदवः सर्वे मानयन्तीति मयाऽप्युक्तम्—प्रसेनप्रमुखैरिति।

नारदः। युज्यते। तदलं विलम्बेन। निवेदय निदेशनिर्वहणं देवदेवाय। अहमपि यथोचितकरणीयाय साधयामि। (इति निष्क्रान्तः)।

दारुकः ॥ ( परिक्रमणनाटितकेन पुरोऽवलोक्य ) अयं हि सेनानिवेशो यावत् प्रविशामि। ( इति प्रवेशनाटयति )

( नेपथ्ये )

दारुक दारुक, क्षणेन सज्जीक्रियतां क्षपितरक्षोमनोरथो रथः पत्त्ररथपति-वाहनस्य, यदेष प्रतिहारभुवि प्रतीक्षितभवदागमनो देवः ।

कनककपिशं कक्ष्यामध्ये पिनह्य निरन्तरं
धनुरपि करे सव्ये सन्धाय भव्यहरन्द्विषाम् ।
विशिखमसकृद्दीर्घं वीक्ष्य दृशाऽतिविशालया
त्वरयति हरिः श्रीमानाखेटकेलिकृतादरः ॥२३॥

दारुकः । (कर्णं दत्त्वा ससम्भ्रमम् ) अयमहम् (इति परिक्रम्यावलोक्य च) एष हि

उरः स्फुरितहारमुल्लसितकुङ्कुमालेपनं
दधत्त्रिपथगारविद्युतियुतान्तरिक्षोपमम् ।
शिरोऽपि शिखिपिञ्छिकावलयितन्निधत्ते पुमान्
अकृत्रिमवचःशिखाभरणमत्र विद्योतते ॥२४॥

तदश्रमपि सज्जीकरोमि ( इति निष्क्रान्तः ) ।

( ततः प्रविशति देवो विदूषको रथेन सूतश्च ) ।

सूतः । आयुष्मन् , विलोक्यतामितो मृगयानिर्गमनकलकलानुबन्धः स्कन्धा-वारस्य ।

वल्गन्तोऽमी बहुरसयुतं प्रातराशं विधाय
क्रोडक्रीडाहरणपटवः काण्डिकाः सम्पतन्ति ।
नानाजातिस्वरविरचनप्रक्रमाभिज्ञकण्ठा
निर्यान्त्येते मृगयुनिवहा वागुरामुद्वहन्तः ॥२५॥

अपि च केचित्

जपाकुसुमपाटलोद्वलितलोलजिह्वालता-
न्तरालतरपालयो ननु कलं समावल्गतः ।
नयन्ति विपिनान्तरं नरपतिप्रियम्भावुकाञ्-
झनत्कनकशृंखलादृढनिबद्धकण्ठानमी ॥२६॥

वि । हीही एदे पाखयिभातुरित्य अथदेवभि अरांत्ते सीचेक्षति । (सोच्छ्रं-
हांसम् । ) भद्दिको वा मृसिविणादेन्दिलोस साव ण हि ज एदाण एक्कस्सिं ।
अथणोक अतेण कबलिज्जतिपाणा ।

दे । ( सस्मितम् ) दारुक, त्वरय तुरगानुगमनाय ।

दारुकः ॥ यदादिशत्यायुष्मान् । ( इति यथोक्तं कृत्वा ) आयुष्मन्
पश्य पश्य

जवनिस्पन्दविस्तीर्णचामरा रथवाजिनः ।
पतिं पतत्रिणां जेतुं जातपक्षोच्चया इव ॥२७॥

विदूषकः । ( सभयावेगसम्भ्रमम् ) वयस्स, परित्ताआहि परित्ताआहि ।

दे । ( सस्मितम् )

यद् यत् पुरःस्थितं वस्तु तत्तद्भवति तत्क्षणम् ।
दृश्यञ्च दृश्यमानञ्च न दूरे किञ्चिदप्यहो ॥२८॥

दारुकः । क्षणादेव विपिनक्षमामागताः स्मः । इतो विलोकयत्वायुष्मान् ।

वेतण्डोद्दण्डगण्डस्त्रुतबहुलमदस्यन्दगन्धानुबन्ध-
भ्राम्यद्भृङ्गानुषङ्गप्रकटपटुरवोदीर्णकर्णातिथेयाः ।
चञ्चत्सञ्चारपञ्चाननिनदसमाभुग्नकुम्भीन्द्रदम्भा-
वन्या वन्या विभागा विदधति कुतुकं चारुविन्यासभाजः ॥२९॥

( नेपथ्ये ) ( कलकलानन्तरम् )

वराहव्यूहोऽयं गवयततिरेषा मृगपति-
व्रजोऽयं सङ्घातस्तरुणशरभाणामयमयम् ।
गणो भल्लूकानामयमिह निकायः करटिनां
समूहो व्याघ्राणामयमिह मृगाणां समुदयः ॥३०॥

पुनस्तत्रव ।

मार्गः केसरिणाम्मतङ्गजशिरोमुक्ताभिराकर्कशः
पन्था गन्धगजव्रजस्य बहुलैर्दानाम्बुभिः पङ्किलः ।

वेणुव्रातविषक्तरोमरुचिरा सा पद्धतिश्चामरी
वाराही सरणी समृद्धिसरसी मुस्ताऽतिशस्ता पुरा ॥३०॥

( सर्वे कर्णं ददति )

देवः ( विलोक्य )। अये समुपक्रान्त एवास्मदीयैर्जनितहृदयामोदो मृगयाविनोदः।

यतः। विहस्तवनहास्तिकं विकलकर्णकण्ठीरवं
विलोलमृगपालकं विवलमानशार्दूलकम्।
विभिन्नवनसैरिभं तरुविलीनफेरुव्रजं
विदीर्णरुरुतर्णकं विपिनमेतदालक्ष्यते ॥३१॥

विदूषकः। वअस्स, पेक्ख।

भल्लो भल्लेण हत्तशी गोखग्गेण सल्लओ सल्लएण।
सारंगोवि विनिहत्त सारंगप्पहरिलहि वाणेहि ॥३२॥

( अन्यतो विलोक्य सभयसम्भ्रमम् )

वयस्स परित्ताआहि परित्ताआहि। एसो कोवि विकसिगतिक्खत्तणजणीअभयो अतुलवलविहभिअवा। उरा अं कणिकमित्तकसिणसि अक्सकतगोछन्ठसावयो अम्हाण समीव आवसइ ता पलाअम्ह।

देवः॥ ( विलोक्य सस्मितम् ) अहो मृगजातिवैश्राणिकत्वं द्विजातेः। दारुकोऽपि यूथभ्रष्टः सत्वरत्रुटितवागुरावलयोऽतिजवतया मृगयुभिरप्युपेक्षितः कृष्णसारयुवास्मदभ्यासमभ्यापतति।

विदूषकः ( सहासः ) ही ही सो एकन्नसाअम्हविहारुज्जाणपरमआयथाईख असअसवितीअ असंनणेण णति खदिगदसणेण अणामुणियो सगर्वतामऽहृथमियणुहदेसु...णावापादेमिदेवः

देवः॥ ( सोत्प्रासम् ) किं वक्तव्यश्च बहुधा दृष्टवीर्यो भगवान्? ( दारुकं प्रति ) अयमस्मान् विलोक्य क्रियासमभिहारसञ्जातजयोत्कर्षः पश्चिमतो धावति तत् प्रधाव्यन्तां रथ्याः।

दारुकः॥ यदादिशत्यायुष्मान् ( इति रथवेगन्निरूपयति )।

देवः ॥ ( हरिणं विलोक्य ) दारुक पश्य ।

उन्मीलेत्तृणमुन्नमय्य वदनं निस्पन्दकर्णद्वयं
देहस्यार्धमुदस्य पूर्वमपरस्थानम्य गाढान्तरः ।
वेगोद्रेकवशादलक्ष्यचरणन्यासः क्षितौ भूयसा
वल्गन् व्योम्नि च धावति प्रतिपदव्यावृत्तकर्णो मृगः ॥३३॥

विदूषकः ( सस्मितम् ) वयस्स सिअकसिणमिणिथेण हरिणेण णेन देहि-अतुन्त्यहित्लवणलच्छिविदे आवमुन्तेण विमसंसंरववालण ।

दारुकः ॥ पश्य पश्य । दूरङ्गतोऽप्येष सारङ्गः आसाद्यमान एव कमप्यारण्यकन्देवालयमवगाहते ।

देवः ॥ (साश्चर्यम् ) । कथमस्मिन् महति कान्तारे देवगृहः । तदद्भुतमिव प्रतिभाति । प्रवर्तय रथं विचरामः । ( किञ्चिदन्तरमतिक्रम्य विभाव्य ) वैष्णवोऽयमालय इति विभाव्यत एव लक्षणैः ।

दारुकः ॥ आयुष्मन् परग्रहणविलोकनप्रतिनिवृत्तेन मयाऽप्यालोकि— किमपि चरमभागेऽस्य निन्दितनन्दनमप्यथ्यमुद्यानम् ।

देवः ( साश्चर्यौत्सुक्यम् ) अरण्यदेवालयस्तत्र चाराम इति महदास्पदं कौतूहलस्य । तत् कुचेलद्वितीयोऽहं प्रविश्य यावत् प्रत्यावर्ते तावद्विहिताभिषेकाः क्रियन्तां हरिणानुधावनश्रान्तान्तरङ्गास्तुरङ्गाः ।

दारुकः ॥ यदादिशत्यायुष्मान् । निरुद्धरथ्यो रथः ।

देवः ॥ ( विदूषकेण सहारुह्य ) इदं गृह्यतां सशरन्धनुः ( अर्पयति )

दारुकः ( आदाय सरथो निष्क्रान्तः )

[ अर्वाचीनकविप्रवरकृष्णरायकृतमिदं सुमनोहरं नाटकं तेलेगु एकाडेमीतः प्रेषितात् हस्तलिखितात् पुस्तकान्मुद्रापयितुमुपक्रान्तमस्माभिः । परं पुस्तकस्य पाठानां विविधदोषदुष्टत्वात् प्राकृतभागानां च सर्वथाबोध्यत्वात् यावदेतस्य पुस्तकान्तरं नोपलभ्यते तावदित ऊर्ध्वं मुद्रणं नैव सम्भवति । अतः सम्प्रार्थ्यते येषां सविधे नाटकस्यैतस्य समीचीनानि पुस्तकानि वर्तन्ते ते कृपया प्रेषयन्तु तान्यस्मत्सविधे, साधयन्तु च सन्तृप्तिं सुरभारतीसेवकानामिति सं० सा० प० स० ]

# मेघनादवधम्

[ पूर्वतोऽनुवृत्तम् ]

[निबन्धकः—श्रीनित्यगोपाल- विद्याविनोदशर्मा]

हैमाभ्रदीप्तिशिखया कुहकोत्थया सा
गोरी प्रतीकमकरोत् पिहितं मनोज्ञम् ।
सायं समावृतमिवेन्दुमुखं नलिन्याः
किं वा तिरोहित उरुप्रिय इन्द्रचक्रात् ॥३५॥

स्मेरानना द्विरददन्तविनिर्मितेन
द्वारेण निर्गतवती सघना यथोषा ।
कामेन पुष्पधनुषा सह तूणधर्त्रा
पुस्फोट कण्टकमये नलिनी मृणाले ॥३६॥

कैलासनाम गिरिराजसमुच्चशृङ्गं
योगासनं जगति संस्तुतमस्ति यत्र ।
देव्या पराजितसमस्तगजेन्द्रगत्या
यातं जगद्धृदयमोहदया च तत्र ॥३७॥

आपो गता निरवतां सकलासु दिक्षु
वद्धा गभीरविवरे महतां गिरीणाम् ।
शान्तः समुद्र इव वा जलदा अपेता
ध्वान्तं यथोषसि विकीर्णसुहासरश्मौ ॥३८॥

भूतिप्रभूषिततनुं विनिमीलिताक्षं
मग्नं तपोजलनिधौ जटिलं त्रिनेत्रम् ।

देवी ददर्श पुरतो हतवाह्यसंज्ञं
प्रोवाच चेन्दुवदना मदनं सुहास्यम् ॥३९॥
पौष्पं शरं त्यज वृथा न नयस्व कालं
मीनध्वज प्रमथनाथमभीति देव्याः ।
आज्ञामवाप्य नमितोरुरतित्वरं स
विव्याध मोहनशरैश्च पिनाकपाणिम् ॥४०॥
शूली बभूव विकलो व्यचलच्च शीर्षे
भारो जटासमुदयस्य गिरेरिवालम् ।
शृङ्गं क्षितिप्रचलनेन कृतार्तनादं
धैर्यं जितेन्द्रियपतेरपि लुप्तमासीत् ॥४१॥
भाले जगर्ज्ज नितरां स हि चित्रभानु-
र्ज्वालाकुलोऽतिभयदो धगिति प्रकुर्वन् ।
शब्दं भृशं समविशद् गिरिजाङ्कदेशं
मात्रङ्कयात-हरिशाव इवातिभीतः ॥४२॥
घोरं प्रणेदुरम्बुतोदमुचां समूहाः
पर्यस्फुरत् प्रलयवह्निशिखेव विद्युत् ।
नेत्रं निमील्य झटितीश्वर उत्थितोऽभूद्
दुर्गा च मुक्तजलदावरणा दिदीपे ॥४३॥
शम्भुर्जगाद जगदद्भुतरूपमुग्धो
हृष्टः कथं विजनभूमिगतां निरीक्षे ।
एकाकिनीं प्रियतमां गणनाथधात्रि
कुत्रास्ति ते प्रियहरिर्विजया जया वा ॥४४॥
आचष्ट हासरुचिराननशम्भुजाया
विस्मृत्य सेवनरतां विजने कथं माम् ।
शृङ्गे महेश कुरुषे स्थितिमत्र दीर्घां
तेनाऽऽगता तव पदाब्जनिरीक्षणोत्का ॥४५॥

साध्वी प्रियं व्रजति कुल सखीसमेता
पत्युः सकाशमिह तत्प्रणयैकवाञ्छा ।
किं चक्रवाकरमणी स्वजनैर्विहीना
प्रत्यूषसि व्रजति न प्रियदर्शनाशा ॥४६॥

ईशः सहासमुपवेशितवान् समानं
कृत्यासने गिरिसुतां धृतचारुहस्ताम् ।
दिक्षु प्रफुल्लमभवत् सुमनःकदम्बं
हृष्टालयश्च समिता मधुगन्धलुब्धाः ॥४७॥

दिग् दक्षिणा परमहृष्टमनाः सुगन्धं
मन्दं ससर्ज पवनं श्वसितं सुदेव ।
स्निग्धं वनप्रियचया रुतमप्यगुञ्जन्-
श्टङ्गं समावृतमभूद्‌द्रुमसिक्तपुष्पैः ॥४८

अध्यास्य काम उर ईश्वरवक्षभाया
हर्षान्मुमोच कृतशिञ्जिनिघोषमुग्रम् ।
वाणान् प्रतीश्वरमुमामुखपद्मसूर्यं
सोऽप्युन्ममाद भृशमीप्सितलाभतुष्टः ॥४९॥

राहुर्हियेव शशिनं कवलं निनाय
भस्मन्यवाप वसतिं स हि जातवेदाः ।
मुग्धां विधाय दयितां धृतदिव्यमूर्त्ति-
र्देवः शिवः सुहसितं गिरिजां बभाषे ॥५०॥

जाने प्रिये तव मनोरथमद्य केन
शच्या सहात्र सहसाऽगमदिन्द्र एषः ।
कैलाससद्मनि तथाऽसमये कथं वा
पूजां तव प्रकुरुते रघुवंशनाथः ॥५१॥

भक्तोत्तमः स तु ममात्मपवंशकेतु-
र्दुष्टः कुकर्मफलतः समुपैति नाशम् ।
स्मर्तुं प्रिये भवति मे हृदयं विदीर्णं
दैवं निरोद्धुममरा अपि नैव शक्ताः ॥५२॥

कामं महेन्द्रभवनं गमयातितूर्णं
मायानिकेतनमरं समियात्तथेन्द्रः ।
सौमित्रिराप्तमहिमा त्वदनुग्रहेण
वीरं हनिष्यति महेश्वरि मेघनादम् ॥५३॥

वव्राज मार इव मुक्तकुलायतार्क्ष्यः
पश्यन् पुनः पुनरदः सुखमन्दिरं स्वम् ।
सौवर्णमेघनिचयाः पवनः सुगन्ध-
श्चित्रप्रसूननिवहाश्च तिरोदधुस्तौ ॥५४॥

द्वारे सुहेमघटिते हृदयेश्वरस्य
मोहप्रदा विधुमुखी जलविप्लुताक्षी ।
तस्थौ रतिर्विरहिणी मधुना तदैव
चायात् सखा मधुसखो मधुगन्धिरूपः ॥५५॥

बाहू प्रसार्य मदनो मुदितः स्वकान्ता-
मालिङ्गय तोषमनयत् प्रणयस्मितास्यम् ।
अश्रु प्रशुष्कमभवद्धिमवद्दिनेशो
पूर्वाचलं समुदिते नलिनीदलस्थम् ॥५६॥

प्राणेशमाप्य ललना वदनं विचुम्ब्य
द्वन्द्वं शुकस्य मधुमासि यथाऽतिरम्ये ।
प्रोवाच वल्लभ रतिं समजीवयस्त्व-
मागत्य पार्श्वमविलम्बमिहात्मयोने ॥५७॥

कस्मै वदामि कियतीं विदधामि चिन्तां
चित्तं दुनोति भवरोपकथास्मृतिर्मे ।
तुभ्यं शपे प्रियतम व्रज तं न जातु
दुर्वृत्तहिंसकवरः स हि वामदेवः ॥५८॥
माध्वीकनिन्दिहसितं समुवाच मार-
श्छायाश्रितो वद कुतो भयविह्वलोऽस्ति ।
भीमाद् विभाकरकराज्ज्वलनेऽधुना त्वं
सार्धं मया व्रज यतो वसति स्वरीशः ॥५९॥
मदनस्तत ओषधिनाथ इव
स्ववधूयुत आगत इन्द्रपुरम् ।
प्रणनाम पदाम्बुजमानतक-
मवदच्च निजागमहेतुममुम् ॥६०॥

इति श्रीमेघनादवधे महाकाव्ये देवेन्द्रमदनसङ्गमो नाम सप्तमः सर्गः ॥७॥

---

## अष्टमः सर्गः

तच्छ्रुत्वा रथमारुह्य देवराजो रथी द्रुतम् ।
प्रतस्थे रमणीयाय मायाया दिव्यवेश्मने ॥१॥
अमितेजस्विनो वाहा निष्कम्पचामरं ययुः ।
चूर्णीकृत्याभ्रवृन्दानि चक्राणि दध्वनुर्भृशम् ॥२॥
उपतस्थे क्षणादिन्द्रो मायाया भवने ततः ।
त्यक्त्वा बही रथं सद्म विवेश च रथीश्वरः ॥३॥
ददर्श वैभवं तत्र मायाया वागगोचरम् ।
ताञ्च सम्भृतसूर्यांशुभास्वरे कनकासने ॥४॥

कृताञ्जलिः प्रणम्येन्द्रः प्राह विश्वविमोहिनि ।
आशिषं देहि भृत्याय प्रणताय हरिप्रिये ॥५॥
उदीर्याऽऽशिषमाहासौ ब्रूहि कारणमागतेः ।
सहसाऽत्र सुराधीश दम्भोलिक्षेपकोविद ॥६॥
प्रत्युवाच शिवादिष्ट आगतोऽहं तवान्तिकम् ।
रावणिर्घानिता येन लक्ष्मणेन विधिं वद ॥७॥
सा चोवाच रणे शूरो लक्ष्मणस्ते प्रसादतः ।
शूराग्रनायकं नूनं मेघनादं हनिष्यति ॥८॥
क्षणं विचिन्त्य सा देवी प्रत्यवादीत् सुरेश्वरम् ।
तारकध्वंसवृत्तान्तं वृत्रहाश्वासहेतुकम् ॥९॥
यदा स तारको दुष्टो बलात्स्वर्गाक्रममग्रहीत् ।
सेनानीः पार्वतीगर्भे लेभे जन्म तदा गुहः ॥१०॥
वधाय तस्य गिरिशः सृष्ट्वाऽस्त्रं स्वेन तेजसा ।
शोभयामास वीरेन्द्रं कार्त्तिकेयं स्वयं ततः ॥११॥
पश्य तच्चर्म सौवर्णं तथाऽसिं सामनाशनम् ।
तूणीरं भैरवं पूर्णमसंख्येयैः शरैः सदा ॥१२॥
नागलोको यथा नित्यं पूर्णोऽस्ति गरलाकरैः ।
तूणीरश्च तथा शश्वदक्षयस्तीक्ष्णसायकैः ॥१३॥
दृष्ट्वा तत्र धनुः शक्रो धिक् चकार निजं धनुः ।
प्राह विद्योतते चर्म परिवेष इवान्धकृत् ॥१४॥
महातेजस्करः खड्गो वह्निज्वालासमप्रभः ।
मातः किं विद्यते भूमौ तूणोऽन्य ईदृशः क्वचित् ॥१५॥
आकर्णय सुराधीश सेनानीरेभिरायुधैः ।
निजघान महायुद्धे तारकं वीरपुङ्गवम् ॥१६॥
सत्यं वच्मि मेघनाद एतैरस्त्रैः सदा बली ।
भविता निहतो युद्धे येन वीरः स नेक्ष्यते ॥१७॥

येन घानिष्यते युद्धे रावणिस्तं त्रिविष्टपे ।
देवदानवमर्त्त्येषु नाहं पश्यामि कुत्रचित् ॥१८॥
'प्रेर्य्यतां लक्ष्मणायास्त्रं' लङ्कां यास्यामि(?) श्वः स्वयम् ।
त्रास्ये रामानुजं संख्ये देवराक्षससंकुले ॥१९॥
गच्छ देवकुलाध्यक्ष त्रिदशं श्व उषा यदा ।
प्रसूनसङ्गिनी द्वारं पूर्वाशाया विमोक्ष्यति ॥२०॥
हत्वेन्द्रजितमाजौ स वीरस्त्वाऽभयमानयेत् ।
लङ्कायाः पङ्कजरविश्चिरायास्तं गमिष्यति ॥२१॥
प्रत्युच्येयन्महामाया चकार निर्भयं हरिम् ।
आत्तायुधो महेन्द्रश्च नत्वा देवीं दिवं ययौ ॥२२॥ [ कुलकम् ]
हैमपीठे सुधर्मायामासीनो वासवोऽब्रवीत् ।
शूरं चित्ररथं नेतुं लङ्कामस्त्राणि सत्वरम् ॥२३॥
सौमित्रिः श्वः कथं संख्ये मेघनादं हनिष्यति ।
तद्वदिष्यति माया तं कृपया शक्त्यधीश्वरी ॥२४॥
भो गन्धर्वकुलाध्यक्ष ब्रूहि रघुकुलोत्तमम् ।
देवा हरप्रिया गौरी सर्वे तस्मिन् कृपान्विताः ॥२५॥
रावणौ निहते युद्धे मरिष्यति स रावणः ।
लप्स्यते जानकीं भूयो वैदेहीचित्तरञ्जनः ॥२६॥
ममाऽऽरुह्य रथं तूर्णं गच्छ बुद्धिमतां वर ।
सान्त्वयाऽऽशु रघुव्याघ्रं दत्त्वाऽभयमसंशयम् ॥२७॥
वीक्ष्य त्वां राक्षसेन्द्रश्चेल्लङ्कायां विवदिष्यते ।
आदेक्ष्यामि ततो मेघानाच्छादयितुमम्बरम् ॥२८॥
आज्ञास्यामि च पवनं मोक्तुं वायुकुलानि च ।
नर्त्तिष्यति बहिर्भूत्वा विद्युदम्भोलिसङ्गता ॥२९॥
प्रणम्य देवेन्द्रपदं गृह्णन् गन्धर्वनायकः ।
अस्त्राण्यवहितस्वान्तो मर्त्यलोकाय प्रस्थितः ॥३०॥

अथ देवगणाधीश आहूय वायुनायकम् ।
वात्यां विधातुमादिक्षल्लङ्कायां प्रलयोत्थिताम् ॥३१॥
वायुवृन्दं द्रुतं मुञ्च कारारुद्धं तथा घनान् ।
आयोधय क्षणं वारिनाथेन चिरवैरिणा ॥३२॥
देवो वायुर्ययौ हृष्टो बद्धमुक्तमृगेन्द्रवत् ।
यत्र गर्भे गिरेर्ध्वान्तसंवृते रुद्धवायवः ॥३३॥
कियद्दूराच्छ्रुतस्तेन ध्वनिः कोलाहलात्मकः ।
गिरिर्विकम्पत इव निःशङ्को रोद्धुमाशुगान् ॥३४॥
अपावृणोच्छिलाद्वारं स्पर्शमात्रेण मारुतः ।
निर्गता वायवस्तूर्णं यथापो भग्नबन्धनाः ॥३५॥
अकम्पत मही सिन्धुर्जगर्ज वीचयस्तथा ।
प्रोत्तुङ्गपर्वताकारा नेदुर्वायुयुधाहताः ॥३६॥
अधावन् जीमूता मन्द्रं परितश्चञ्चलाऽहसत् ।
भीमं ररास दम्भोलिः प्रतस्थेऽब्जः सतारकः ॥३७॥
इरम्मदान् समुद्गीर्य मेघैर्लङ्का तिरोहिता ।
दध्वनुः ककुभः सर्वा जज्वलुः प्रलयाग्नयः ॥३८॥
महावात्या ववौ व्योम्नि वृक्षा मडमडायिताः ।
उत्पेतुर्मूलसहिताः प्रलयाभ्रं ववर्ष च ॥३९॥
शिलावृष्टिरभूद् घोरा रक्षांसि स्वगृहं ययुः ।
उपतस्थे चित्ररथो राघवं शिबिरस्थितम् ॥४०॥
देहो गन्धर्वराजस्य रत्नाभरणभूषितः ।
बभौ दिवाकर इव मरीचिजालसूज्ज्वलः ॥४१॥
सारसनं बभौ कट्यां राशिचक्रसमप्रभम् ।
देदीप्यते ततः खड्गश्चापचर्मादि चाऽऽयुधम् ॥४२॥
हिरण्मयकिरीटाभाऽदहन्नेत्रेऽ(?)र्कभानुवत् ।
पूरयामास ककुभः सहसा दिव्यसौरभम् ॥४३॥

देवदूतं नमस्कृत्य पप्रच्छ रघुकुञ्जरः ।
बिना त्रिदिवमेतत्ते रूपं न भाति सुन्दरम् ॥४४॥
नन्दनं काननं हित्वा रुचिरं कथमद्य ते ।
स्वागतं वद नाकौक एतस्मिन् किङ्करालये ॥४५॥
नास्ति स्वर्णासनं तुभ्यमासितुं किं ददाम्यहम् ।
कुशासनमलङ्कृत्य कृपयाऽर्घ्यं प्रगृह्यताम् ॥४६॥
उदीर्याऽऽशिषमध्यास्य दर्भासनमनुत्तमम् ।
सोऽब्रवीद् विद्धि सत्यं मां राम चित्ररथाह्वयम् ॥४७॥
नित्यं सेवे सुराधीशं तद् गन्धर्वनृपोऽस्म्यहम् ।
तस्याऽऽदेशं शिरोधार्यं कृत्वागां भवदन्तिकम् ॥४८॥
स तु देवकुलाध्यक्षः सर्वदेवगणैः सह ।
निरन्तरं कामयते चतुरस्रं भवत्सुखम् ॥४९॥
पश्यसीदं यदस्त्रं त्वं नृमणे प्रेरितं तव ।
भ्रात्रे लक्ष्मणशूराय तेनेन्द्रजिद् वधैषिणा ॥५०॥
आविर्भूय प्रभाते श्वो माया तत् कौशलं स्वयम् ।
भ्रात्रे ते वक्ष्यति येन मेघनादं स नाशयेत् ॥५१॥
रघुवंशशिरोरत्न त्वं देवगणवल्लभः ।
सुप्रसन्नाभया साक्षात्त्वयि देवेन्द्रवन्दिता ॥५२॥
आनन्दसागरे लीनः प्रोवाच रघुनन्दनः ।
सन्देशेन सुभद्रेण गन्धर्वेश म्रिये न्वहं ॥५३॥
ब्रूहि त्वं करुणागृह्यः कथमज्ञानमानवः ।
अहं प्रदर्शयिष्ये तं कृतज्ञत्वं सुरेश्वरम् ॥५४॥
देवदूतो हसित्वाह शृणु राघवपुङ्गव ।
वक्ष्ये त्वां का हि योग्या स्याद् देवान् प्रति कृतज्ञता ॥५५॥
दरिद्राणां सुभरणमिन्द्रियाणां दमस्तथा ।
स्थितिर्धर्मपथे नित्या नित्या च सत्यनिष्ठता ॥५६॥

# सरलचित्सुखीसारम्

[ निबन्धकः—स्वर्गत-रमेशचन्द्र-वेदान्ततीर्थः ]

( पूर्वतोऽनुवृत्तम् )

तार्किकः ॥—ननु भवतु एवं कथंचित् अवेद्यत्वसिद्धिरित्यभ्युपगमेऽपि 'अपरोक्षव्यवहारयोग्यत्वे सति अवेद्यत्वस्य' कुतः सिद्धिः ?

वेदान्ती ॥—भो महात्मन्, कथमेवं भ्रान्तोऽसि ? अपरोक्षव्यवहारयोग्यत्वं तावत् भवतः अनुभूतौ सम्मतमेव, तत्र केवलव्यतिरेकिणश्च अनुमानात् सामान्यतोदृष्टानुमानसिद्धस्य अनिर्द्धारिताधिकरणविशेषनिष्ठस्य स्वरूपेण सिद्धस्य अवेद्यत्वस्य उभयवादिसम्प्रतिपन्नापरोक्षव्यवहारयोग्यानुभूतिविशेषावलम्बताया एव समर्पणात् कुतः अपरोक्षव्यवहारयोग्यत्वविशिष्टस्य अवेद्यत्वस्य असिद्धिशङ्कालेशोऽपि समुदेतुमर्हति ? एतेन स्थलविशेषे प्रसिद्धेऽनभ्युपगमात् केवलव्यतिरेकिताऽपि रक्षिता भवति। एषा च रीतिः भवतां परमपूज्यपादानाम् आचार्यवर्योदयनानामपि सम्मता। अतो नास्त्यत्र भवतः प्रतिवचनावसरः ॥

आचार्यनये चेद् न भवति भवतां गौरवभूमातिरेकः, तदा लीलावतीकृतां वल्लभाचार्याणां मतमनुसृत्यापि अन्यथा अनुमातुं शक्यते,—यद्विपर्यये असमीहितस्य ( अनिष्टस्य ) प्रसक्तिस्तत् क्वचिद् मानयोग्यम् इति अस्ति सामान्यव्याप्तिः। इह च अनुभूतिरनुभाव्या भवति न वेति वादिविप्रतिपत्तेः संशये सति अनुभूतेरनुभाव्यत्वे ( अनुभूत्यन्तरविषयत्वे ) तस्यापि पुनरन्यानुभूतिविषयत्वं स्वीकार्यम्, एवम् अनुभूतिविषयतापरम्परापाताद् अनवस्थाप्रसङ्गः एकासिद्धौ च सर्वासिद्धिप्रसङ्गात् स्वविषयत्वे च आत्माश्रयदोषात् अनुभूतौ अनुभूतिव्याप्यत्वाभावरूपस्य तद् अनुभूतिव्याप्यत्वविपर्ययस्य सामान्यतो मानयोग्यत्वाधिगमः, एवमत्र प्रयोगमवेहि,—वेद्यत्वम् अनुभवनिष्ठाभावप्रति-

त्यन्ताभावप्रतियोगि तर्कादिबाधितत्वात्, यद् यत्र तर्कादिना बाधितं तत् तत्र प्रामाणिकात्यन्ताभावप्रतियोगि, यथा शुक्तौ प्रत्यक्षादिबाधितं रजतं तन्निष्ठ-प्रामाणिकात्यन्ताभावप्रतियोगि ; यथा वा, यत्र प्रामाणिकात्यन्ताभावप्रतियोगि तत्र तर्कादिबाधितं यथा घटः। इत्थं सामान्यतः सिद्धस्य अवेद्यत्वस्य विशेष-प्रमाणापेक्षायाम् अनुभूतौ विशेषतो निश्चयाय व्यतिरेकिण उपन्यासात् नाप्रसिद्धविशेषणता। केवलान्वयिनि अनुमाने भवतामपि इत्थमेव गतिः, अन्यथा कथमिच्छादीनामष्टद्रव्यव्यतिरिक्तद्रव्याश्रितत्वं भवन्तो नैयायिका-दयोऽपि साधयेयुः।

गतिरियं भवतां कथामनुसृत्य दृष्टान्तेन प्रपञ्च्यते। श्रीमद्भिः खलु आत्मा-ख्यद्रव्यस्य सिद्ध्यर्थं केवलव्यतिरेकि अनुमानमाश्रीयते, अनुमानप्रणाली च भवतामेवम्,—इच्छादयो गुणाः अनित्यत्वे सति अस्मदाद्यचाक्षुषप्रत्यक्षत्वात् गन्धादिवत्, अनेन अनुमानेन इच्छादीनां गुणत्वे सिद्धे, ततः इच्छादयो विशेषगुणा गुणत्वापरजातिमत्त्वे सति नियतैकद्रव्यव्यवच्छेदकत्वात्' एवं विशेषगुणत्वे सिद्धे, इच्छादयः क्वचिदाश्रिताः गुणत्वाद् रूपवदिति सामान्यतो दृष्टानुमानेन अनिर्धारितविशेषे कस्मिंश्चिद् आश्रये सिद्धे, न तावद् इच्छादयः स्पर्शवद्विशेषगुणाः प्रत्यक्षत्वे सति अकारणगुण-पूर्वकत्वात्, प्रत्यक्षत्वे सति अयावद्द्रव्यभावित्वाद्वा, नापि आकाशविशेषगुणाः, बाह्येन्द्रियाप्रत्यक्षत्वाद्, नापि दिक्कालमनसां विशेषगुणत्वात् इत्यादिना अष्टद्रव्याशयत्वानुपपत्तौ सिद्धायाम्, इच्छादयोऽष्टद्रव्यव्यतिरिक्ताश्रयाः तेषु अनुपपद्यमानत्वे सति गुणत्वात्, यन्नैवं तन्नैवं यथा गन्धादिः, अत इच्छादीनां पूर्वोक्तानुमानैः पृथिव्यादिषु अनुपपद्यमानतया तद्व्यतिरिक्ते कस्मिन्नपि द्रव्ये वर्तन्ते, तच्च द्रव्यम् आत्मेति। अधुना भवान् पृच्छ्यते,—अत्र इच्छादीनामष्ट-द्रव्यव्यतिरिक्ताश्रितत्वानुमाने तद् अष्टद्रव्यातिरिक्ताश्रितत्वं कुत्रचिद् अधिकरण-विशेषे प्रसिद्धं न वा, अष्टद्रव्यव्यतिरिक्तद्रव्यस्याप्रसिद्धौ अप्रसिद्धविशेषणता, प्रसिद्धौ च हेतोस्तत्र वृत्तौ अन्वयव्यतिरेकितया केवलव्यतिरेकित्वासंभवः, हेतोः अवृत्तौ च असाधारणानैकान्तिकतापत्तिः। एते खलु दोषाः

अस्मदुक्तप्रकारेण भवतामुपजीव्याचार्याणां रीतेरनुसरणम् विना न कयाऽपि गत्या शक्यपरिहाराः ।

तार्किकः ॥—ननु पृच्छामि तावद् अत्रभवन्तम् ,—एवं सति सर्ववादिभिरङ्गीकृताया अस्या अप्रसिद्धविशेषणताया अदूषणतापत्तिः तथा च एवंविधपरिहारज्ञानस्य सर्वत्र सुलभत्वात् अवकाशाभावेन हतं बत अप्रसिद्धविशेषणतया तपस्विन्या ।

वेदान्ती ॥—न च एवं वक्तुमर्हति प्रमाणनिपुणो भवान् , न हि सम्भवति सर्वत्र एवं परिहारः, उक्तसामान्यतोदृष्टानुमानगोचरत्वासम्भवे भूः शशविषाणोल्लिखिता भूत्वाद् इत्यादौ तस्या अप्रसिद्धविशेषणतायाः सावकाशत्वात् । न ह्यत्र शशविषाणादेः केनचित् सामान्यतोदृष्टानुमानेन अवगमोऽस्ति, न च भूमौ शशविषाणोल्लेखनाभावे कस्यचिद् असमोहितस्य प्रसक्तिः, येन लीलावतीकारोक्तसामान्यव्याप्तिबलात् तस्य सिद्धिर्भवेत् । अत एवंविधस्थले अप्रसिद्धविशेषणताया अस्ति साम्राज्यमिति सन्तोष्टव्यं श्रीमता ।

अथ यदि वक्ररुचिर्भवान् अनया सरलरीत्या न सन्तुष्यति, तर्हि वक्ररीत्याऽपि अयं घटः एतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्यः पदार्थत्वात्, यो यः पदार्थः स स एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणान्यः पटवदित्यादिमहाविद्याप्रयोगैरप्यवेद्यत्वप्रसिद्धिरप्यूहनीया । यत एतद्घटान्यत्वविशिष्टं यद् वेद्यत्वं तस्य अनधिकरणम् अयं घटः, नहि वेद्यत्वविशिष्टेऽपि अस्मिन् घटे एतद्घटान्यत्वविशिष्टं वेद्यत्वं वर्त्तते, अस्मिन् घटे एतद्घटान्यत्वरूपविशेषणस्य अविद्यमानतया विशेषणाभावस्य विशिष्टाभावप्रयोजकत्वेन तद्विशिष्टवेद्यत्वस्यापि अवृत्तेः, ततश्च एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणात् एतस्माद् घटात् अन्यः पटः इति तत्र साध्यस्य एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणान्यत्वस्य प्रसिद्धेः, पदार्थत्वस्य हेतोश्च विद्यमानतया दृष्टान्तसिद्धिः । अतः एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणान्यत्वव्याप्यपदार्थत्वस्य अस्मिन् विद्यमानत्वात् अत्र व्यापकस्य एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणान्यत्वस्य सिद्धिः । तच्च एतद्घटान्यत्वे

सति वेद्यत्वानधिकरणान्यत्वं कथमत्र पक्षीभूते घटे वर्त्तितुमर्हतीति चिन्तनीयम्, —विशिष्टाभावस्य हि विशेषणाभावः, विशेष्याभावः, विशेष्यविशेषणोभयाभावो वा प्रयोजकः, सति विशेष्ये विशेषणाभावनिबन्धनः विशिष्टाभावः भवति, सति विशेषणे विशेष्याभावनिबन्धनः, असति उभयस्मिन् तदुभयाभावनिबन्धनः स भवितुमर्हति। पक्षे तु एतद्घटस्य एतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्यत्वम्, एतद्घटान्यत्वस्य विशेषणस्य अनधिकरणान्यत्वेन वा वेद्यत्वस्य विशेष्यस्य अनधिकरणान्यत्वेन वा एतद्घटान्यत्ववेद्यत्वयोरुभयोरनधिकरणान्यत्वेन वा स्यात्, आद्यपक्षाङ्गीकारे व्याघातः, नहि अस्मिन् एव घटे एतद्घटान्यत्वं वर्त्तते स्वस्मिन् स्वप्रतियोगिकभेदायोगात्, अत एव अस्मिन् घटे एतद्घटान्यत्वरूपविशेषणाभावेन एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणत्वमेव वर्त्तते, न तु तदन्यत्वम् अतश्च उभयाभावमादायापि नैतद् घटयितुं शक्यते : अस्मिन घटे विशेषणाभावस्य सिद्धत्वेन तेनैव विशिष्टाभावस्य सिद्धत्वात्। उभयाभावमादाय तद्भिन्नत्वस्य घटयितुमशक्यत्वात्।

अत एव विशेष्यस्य वेद्यत्वस्य अभावमादायैव विशिष्टाभावाधिकरणान्यत्वमस्मिन् सम्पादनीयम्, एवञ्च यदि अवेद्यं ( वेद्यत्वानधिकरणम् अनुभूतिरूपं ) किञ्चिद् वस्तु स्यात् तदैव एतत् अस्मिन् पक्षे वर्तितुमर्हति, तथाहि एतद्घटान्यत्वविशिष्टं वेद्यत्वानधिकरणम् अनुभूतिरूपं वस्तु, तदन्यत्वम् अस्मिन् घटे सिध्यति, नान्यथा, अत एवानेन अनुमानेन अवेद्यत्वस्य प्रसिद्धिर्जाता।

एतदनुमानशरीरघटकपदानां प्रयोजनं तावदवेहि,—अयं घटः वेद्यत्वानधिकरणान्यः इत्युक्ते अप्रसिद्धविशेषणता स्यात्, सर्ववेद्यत्ववादिनः अनुमानात् पुरस्तात् तदनधिकरणतायाः कुत्रापि अप्रसिद्धेः, अत उक्तम् "घटान्यत्वे सति" इति विशेषणम्। घटत्वानधिकरणत्वे सतीति अस्य दलस्यार्थः। एवं च सर्वेषु घटेषु स्वव्यतिरिक्तघटान्यत्वविशिष्टवेद्यत्वानधिकरणान्यत्वस्य विद्यमानत्वात् सिद्धसाधनता स्यादत उक्तम् "एतदिति"। एतस्य घटस्य वेद्यत्वाधिकरणत्वेऽपि स्वान्यत्वं प्रति अनधिकरणत्वात् तथाविधघटान्यत्वस्य च पटादावेव प्रसिद्धेः नाप्रसिद्धविशेषणतासिद्धसाधनते इत्यर्थः। घटमात्रं पक्षीकृत्य एतद्घटान्यत्वे

सति वेद्यत्वानधिकरणान्यः इत्युक्ते घटान्तरमादाय अर्थान्तरता, घटान्तरस्यापि एतद्घटान्यत्वे सति वेद्यत्वानधिकरणात् एतस्मात् अन्यत्वात्, तद्व्यवच्छेदार्थम् "अयमिति" पदम्। एतस्यैव घटस्य एतद्घटान्यत्वे वेद्यत्वानधिकरणान्यत्वे साध्यमाने घटान्तरमादाय अर्थान्तरताया अनवकाशात्। एतद्घटान्यत्वान-धिकरणान्य इत्युक्ते व्याहतिः स्यात् एतद्घटस्य एतद्घटान्यत्वायोगात्, तदर्थं "वेद्यत्व"पदम्। एवं वेद्यत्वं स्वस्वेतरवृत्तित्वानधिकरणात्यन्ताभावप्रतियोगि-वृत्तिधर्माधिकरणं मेयत्वात् इत्यादि अपि अनुमानमवेद्यत्वसाधनाय अलम्। अतो न स्वप्रकाशानुमाने अप्रसिद्धविशेषणतादोषः।

तार्किकः॥—ननु एवमपि अप्रसिद्धविशेष्यतादोषोऽस्त्येव उक्तरूपाया अनुभूतेरस्माकमसिद्धत्वेन विप्रतिपत्तेः स्वप्रकाशानुमाने अनुभूतिरूपपक्षस्य असिद्धत्वात्

वेदान्ती॥— न अप्रसिद्धविशेष्यता अपि, अनुभूतेः स्वरूपस्य उभयो-रेवावयोः प्रसिद्धत्वात्। सिद्धे हि तस्मिन् पक्षे स्वप्रकाशास्वप्रकाशत्वयोरेव विप्रतिपत्तेः, सिद्धे पक्षे साध्यसन्देहजनिकायाः तादृशविप्रतिपत्तेस्तु पक्षता-सम्पादकतया विचाराङ्गतया वा उपयोगाद् भूषणत्वमेव न दूषणत्वम्। अत एव हेत्वाश्रयस्य पक्षस्य अनुभूतेः सिद्धत्वात् न आश्रयासिद्धिरपि हेतोः॥

तार्किकः॥—न भवन्तु पक्षगता एते दोषाः, स्वरूपासिद्धिदोषस्तु हेतोर्भ-वत्येव। अनुभूतित्वहेतोः स्वरूपस्यासिद्धेः। ब्रवीतु तावन्मया पृष्टो भवान् किमिदम् अनुभूतित्वं नाम, यद् हेतुतया उपन्यस्यते भवता, न तावत् जातिः, अनुभूतेरेकत्वाङ्गीकारेण,

"व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः॥"

इत्यभियुक्तोक्तेः व्यक्तेरभेदस्य जातिबाधकत्वात्। अत एव नोपाधिरपि, अनुगतो हि उपाधिर्भवति, अनुभूतिव्यक्तेरेकत्वान्न तद्धर्मस्य अनुगतत्वं सम्भवति, अभ्युपगम्यमानेऽपि अनयोरन्यतरपक्षे अनुभूतिव्यतिरिक्तस्य तद्धर्मस्यापि अङ्गीकारादस्त्येव अद्वैतविरोधस्तुल्यदोषः, इत्यसिद्धिरेव हेतोः।

वेदान्ती ।।—न केवलं पक्षगता दोषा नोदेतुमर्हन्ति एवं स्वरूपासिद्धिरपि न अत्रावकाशमश्नुते, कल्पितव्यक्तिभेदनिष्ठस्य चन्द्रत्वसामान्यस्येव अनुभूतित्वसामान्यस्याभ्युपगमे सिद्धान्ताविरोधात्। अवधत्ताम् तावदत्रभवान्, यथा जलभेदेषु प्रतिबिम्बचन्द्रेषु चन्द्रत्वसामान्यमङ्गीक्रियते, एवं बुद्धिवृत्तिप्रतिबिम्बितासु अनुभूतिषु कल्पितम् अनुभूतित्वं जातिरस्माभिरङ्गीक्रियते एव, अतः कल्पितानुभूतित्वजातेः सिद्धत्वात् न अस्माकं हेत्वसिद्धिः, ईदृशानुभूतित्वस्य साधकत्वं, च समुचितमेव कल्पितस्यापि न्यायतः प्रतिबिम्बादिवत् साधकत्वसम्भवात्। न च प्रतिवादिनः तार्किकस्य असिद्धिः, तेनापि तार्किकेण भवता अनुभूतित्वसामान्यस्य अकल्पितस्य अभ्युपगमात् ।।

तार्किकः ।।—हंहो चतुरचूडामणे, यथा खलु अतिजवेन तरङ्गतरङ्गाकुले चलच्चञ्चलस्रोतसि चलन्तीं संशयितमज्जनां नौद्वयीम् एकस्या मज्जनेऽपि अन्या आश्रयितव्येति अध्यवसायेन अंशतोऽवलम्बमानस्य उभयतो भ्रंशः अवश्यम्भावी, एवं भवतोऽनुभूतित्वहेतोरपि कल्पितत्वाकल्पितत्वोभयतरणिमाश्रयतः कल्पिताकल्पितत्ववैषम्यात् अन्यतरासिद्धिः एव फलम्, तथाहि—प्रतिवादिना पारमार्थिकी अनुभूतित्वजातिराद्रियते, न हि तन्मतेन तव वादिनो हेतोः सिद्धिः, त्वया तु वादिना कल्पिता सा जातिरभ्युपेयते, न तया प्रतिवादिनं मां प्रति हेतोः सिद्धिः, तथा च उभयोरावयोः सम्मतस्य एकस्य हेतोरभावाद् असिद्धो हेतुः न साध्यं साधयितुमलम्।

वेदान्ती ।।—नच एवम् आशंकनीयम् अनुमाननयगहनसञ्चरणरसिकेन तार्किकपञ्चाननेन भवता, अवधीरितकल्पिताकल्पितविशेषस्य अनुभूतित्वमात्रस्य उभयवादिसिद्धत्वात्। मया हि कल्पिताकल्पितत्वविशेषमवधीर्य अनुभूतित्वमात्रमेव हेतूक्रियते, तच्च उभयोरेवावयोः सम्मतम्, नहि मदीयो हेतुः कल्पिताकल्पितत्वनौद्वयीमाश्रयते, अपि तु नावादिसाधनव्यतिरेकेण स्वशक्त्या द्वैततमोवारिधिं कल्पिताकल्पितभेदनौसाधनमवधीर्य स्वप्रकाशसम्पत्त्या समुत्तीर्य स्वयमेव विराजते, कुतोऽस्य असिद्धिशङ्कावतारः ? भवद्भिरशक्यसमाचाराऽपि रीतिरियमंशतोऽनुसृता, अन्यथा धूमवत्त्वादावपि तत्तद्देशनिष्ठ-

त्वादिविकल्पेन असिद्धादेर्दुष्परिहरत्वात्। तथाहि,—यो भवता पर्वते वह्निसाधनाय धूमादिहेतुरुपादीयते "पर्वतो वह्निमान् धूमात्" इत्यादौ, तत्र पृच्छ्यते मया, योऽयं धूमवत्त्वं हेतुरुपादीयते, तत् किं महानसनिष्ठं हेतुरुत पर्वतनिष्ठम्? आद्यपक्षे पर्वते पक्षे महानसनिष्ठधूमवत्त्वस्य अभावात् हेतोरसिद्धिः, पक्षे हेतोरवृत्तेरेव स्वरूपासिद्धत्वात्। यदि एतद्दोषभिया द्वितीयपक्षमाश्रित्य पर्वतनिष्ठं धूमवत्त्वं हेतूक्रियते, तदा महानसे सपक्षे तदभावात् साधनविकलं निदर्शनमिति दूषणद्वयापातात् महानसीयत्वपर्वतीयत्वरूपविशेषमवधीर्य धूममात्रस्य हेतुत्वस्वीकारात् अस्मदुदीरितपदवीव्यतिरेकेण नास्ति भवतां क्वापि काऽपि गतिः। अतः सिद्धम् अवधीरितकल्पिताकल्पितत्वविशेषस्य अनुभूतित्वमात्रत्वस्य उभयवादिसिद्धस्य हेतुत्वम्।

तार्किकः॥—नन्वेवं स्वरूपासिद्धेरभावेऽपि भवदुक्तानुमाने व्याप्तेरसिद्धतया व्याप्यत्वासिद्धिः भवत्येव दोषः।

वेदान्ती।—निरुपाधिकसम्बन्धस्य व्याप्तित्वेन सोपाधिकस्यैव सम्बन्धस्य निरुपाधिकसम्बन्धवैधुर्येण तथात्वात् (व्याप्तत्वासिद्धत्वात्) केवलव्यतिरेकिणि च उपाधेरसम्भवात् न च व्याप्यत्वासिद्धिः सम्भविनी। उपाधिर्हि साध्यव्यापकत्वे सति साधनाव्यपकः, स च अन्वयव्यतिरेकी कश्चिद् धर्मः, यतः साध्यस्य व्यापकत्वेन तेन अन्वयः, साधनस्य अव्यापकत्वेन च व्यतिरेकः, तदुभयवान् उपाधिः। तस्य किं पक्षव्यतिरिक्तस्थले साधव्यापकत्वम् अभिमतम् उत पक्षे एव, यदि पक्षव्यतिरिक्तस्थले इत्यभिधीयते, तन्न युक्तम्, व्यतिरेकिणि अनुमाने सपक्षस्य अभावेन पक्षव्यतिरिक्तभूमौ साध्यस्याभावात् स कथं साध्यव्यापकतया साध्येन अन्वयी स्यात्? न च पक्षे साध्येन अन्वयः तत्र साध्यस्य अद्यापि संदिग्धत्वात्। साध्येन उपाधेरन्वयसिद्धये पक्षे साध्यस्य निश्चये च भवतामभिमते सिद्धं नः समीहितम्, अस्माभिः साधनीयस्य भवद्भिः सिद्धत्वेनाभ्युपगमात्, उपाधेश्च दूषकत्वासम्भवात्। पक्षतः साध्यापहारो हि उपाधेः प्रयोजनं, तत्र साध्यं चेन्निर्णीतम्, तदा उपाधि किं करिष्यति? करणीयस्य साध्यापहारस्य, साध्यस्य सिद्धतया कर्त्तुमशक्यत्वात्। पक्षे च

उपाधिवृत्तौ साधनव्यापकता च दुर्वारा। यतः, पक्षे चेत् उपाधिः वर्त्तते, साधनं च तत्र वर्त्तते एव, तत् कथं तत्र उपाधेः साधनाव्यापकता शक्यसम्पादा, साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं हि उपाधेः साधनाव्यापकत्वम्, तत्र साधनवति पक्षेऽपि उपाधेर्वृत्तौ कथं तत्रैव तस्य अत्यन्ताभावः स्यात् ? तदेवं सति उपाधेरुपाधित्वमेव हीयेत। नापि अन्यत्र साधनाव्यापकत्वं केवलव्यतिरेकि-साधनस्य अन्यत्राभावात् * तदेवं नासिद्धो हेतुः।

क्रमशः

---

# कपिञ्जलाधिकरणन्यायः

प्रयोगरत्नमालासमाख्यस्यार्वाचीनव्याकरणस्य टीकायां सिद्धनाथविद्यावागीश-महोदयैः कपिञ्जलाधिकरणन्याय इत्थं व्याख्यायि। "क्वचिद् यागे 'कपिञ्जला-नाददीत' इति श्रूयते। कपिञ्जलः पात्रविशेषः। यदि बहुवचनस्य बहुत्वे शक्तिः स्यात्, तदा बहुपात्रग्रहणमायाति, तथा सति कति पात्राणीत्यनिश्चया-पत्तिः। यदि त्रित्वे शक्तिस्तदा त्रिपात्रग्रहणं स्यादिति नानध्यवसायापत्तिरिति बहुवचनस्य त्रित्वे एव शक्तिरित्येव रूपः।"

अत्र 'कपिञ्जलानाददीत' इति पाठः सम्प्रदायविच्छेदमूलकः प्रतिभाति। "वसन्ताय कपिञ्जलानालभेत" इति पाठ एव प्रामाणिकः। तथाच वाजसनेय-संहितायां [२४।२०] श्रूयते—

---

* इतः परं "साध्याभावव्यापकत्वे सति साधनाव्यापकत्व" "साध्याभावव्याप्यत्वे सति साधनाव्यापकत्व" साध्याभावव्यापकत्वे सति साध्याभावव्याप्यत्वे सति साधनव्यापकमित्या"दि उपाधिस्वरूपमाशंक्य मूलग्रन्थे विचारितम् तदनुपयोगात्, विस्तरभिया च परित्यक्तम्।

'वसन्ताय कपिञ्जलानालभेत, ग्रीष्माय कलविङ्कान् वर्षाभ्यस्तित्तिरीञ्छरदे वर्त्तिका हेमन्ताय ककराञ्छिशिराय विककरान् ।'

कपिञ्जलशब्दस्य च पात्रविशेषरूपोऽर्थो न समीचीनः। तथाच शास्त्रदीपिकायां [११।१।६] पार्थसारथिमिश्रपादानां व्याख्यानम्—

"वसन्ताय कपिञ्जलानालभेत इत्यादिषु बहुवचनेषु किं त्रयाणामेवाऽऽलम्भ उत त्रिप्रभृतीनामसंख्यानाम् इति सन्देहे बहुवचनस्य सर्वत्र वृत्तेः सर्वसंख्यानां शास्त्रार्थत्वं शास्त्रीयाच्च प्रयासगौरवात् फलभूयस्त्वमविवादम्। अतो यावदुत्साहं नानासंख्योपादानम्।

नैतदेवम्, बहुत्वमात्रं हि शब्दार्थः। न तु षड् देया द्वादश देया इत्यादिवत् संख्याविशेषाणां भेदेन शास्त्रमस्ति यद्बलात् फलभूयस्त्वं कल्प्येत। यो हि त्रीनालभते यश्च सहस्रं तयोरुभयोरपि बहुत्वसम्पादनमविशिष्टम्। यत्तु विशिष्यते सहस्रादि तदशास्त्रीयम्। न चाशास्त्रीयं गौरवं फलभूयस्त्वं कल्पयितुमलम्। एवं च त्रीननालभ्य चतुर्णामालम्भनासम्भवादवश्यं त्रय आलब्धव्यास्तावता च सिद्धे शास्त्रार्थे नाधिकालम्भं तावच्छास्त्रं कल्पयति। निवृत्तव्यापारे च विधौ न हिंस्यादिति निषेधशास्त्रं प्रवर्त्तेत इत्यधिकानालम्भः।"

---

## समालोचनम्

*Notes on Matriculation Sanskrit Selections. Poetry Portion 1936* by *Prof.* H. P. Sastri, M. A. Thoroughly revised by Pandit Ramrup Vidyavagish. Published by Bhattacharya Brothers, 12 Marcus Lane, Calcutta. *Price Rupee one only.*

कलिकाताविश्वविद्यालये प्रावेशिकपरीक्षामुत्तितीर्षूणां ये तावत् संस्कृत-पद्यांशाः पाठ्या वर्त्तन्ते तेषां व्याख्यापुस्तकमिदम्। यद्यपीदृशानां ग्रन्थानां समालोचनं नैव विधीयतेऽस्माभिः प्रायेण तथाऽप्यस्य समुत्कर्षविशेषो बलादिव

प्रवर्तयत्यस्माकं लेखनीम्। अत्र प्रथमतः प्रतिपद्यं सन्धिविश्लेषस्ततः प्रतिपदम् आङ्‌लभाषामयो वङ्गभाषामयश्च प्रतिशब्दः, ततो दण्डान्वयः, ततो वङ्गभाषामयोऽनुवादः ततश्चाङ्‌लभाषामयोऽनुवादः, ततश्चाङ्‌लभाषामयं सुविस्तृतं व्याख्यानम्, ततो व्याकरणप्रक्रिया, ततो वाच्यपरिवर्त्तनं परमरमणीयया भङ्गया समुपनिबद्धम्। ततश्च Additional Notes इतिशीर्षकं व्याकरणादिगतविशेषप्रदर्शनं समुल्लसति। कै-धातोर्डिमिप्रत्ययेन किम्-शब्दो निष्पन्नः, स्त्यैधातोर्ड्रटि स्त्रीशब्दः, पाधातोर्डुम्सुनि च पुम्स्-शब्दः इत्यादीनि वैचित्र्यमात्रसाराणि सर्वथा बुभुत्सूनां बालानामनुपकारीणि निर्वचनानि लेशतोऽपि नात्र प्रतिपादितानि। अपेक्षिता एव विषयाः सरलया सुबोधया च प्रणाल्या प्रपञ्चिताः। व्याख्यापुस्तकमिदमीदृशानां ग्रन्थानां सर्वथा शिरसि वर्त्तते इत्यत्र नास्ति स्तोकोऽपि संशयावकाशः। कविगुरोर्वाल्मीकेर्हृद्यानवद्यरूपाणां पद्यानामीदृशं व्यङ्ग्यार्थप्रकाशकं परमरमणीयं रसिकजनहृदयहारि व्याख्यानं दुर्लभमेव सन्द्रष्टुम्। समास्वाद्यतां तावदाङ्‌लभाषाभिज्ञैः शास्त्रिमहोदयपरिवेषितः काव्यरसः। तथाहि

क्षुधितस्य च सिंहस्य मृगशत्रोस्तरस्विनः।
आशीविषस्य वदनाद्दंष्ट्रामादातुमिच्छसि॥

इत्यस्य व्याख्यानम्—

क्षुधितस्य—a hungry lion is an angry lion and will therefore all the more readily punish any one that interferes with him. मृगशत्रोः—A lion is the killer of deer as Rama of Raksasas like you. The implication is that before the superior power of the lion Rama, you are no better than a deer. तरस्विनः—impetuous, not given to philosophical speculations like Hamlet, but wreaking vengeance then and there. आशीविषस्य—not of an ordinary serpent, but of the most deadly species of cobra that kills from a distance by merely looking at on object. दंष्ट्रा—the fangs, the most treasured possession, the thing that enables them to eat and live.

महागिरिमिवाकम्प्यं महेन्द्रसदृशं पतिम् ।
महोदधिमिवाक्षोभ्यमहं राममनुव्रता ॥

इति पद्यरत्नस्य व्याख्यानप्रसङ्गेन वाल्मीकेर्हृदयं शास्त्रिमहोदयेनोद्घाटितम् । वाल्मीकिरामायणस्य सुबहूनि व्याख्यानानि पर्यालोचितान्यस्माभिः परं पद्यस्यास्य परमार्थतो हृदयग्राहि व्याख्यानमितः पूर्वं कुत्रापि नोपलब्धम् । विवाहविधौ सप्तपदीपरिक्रमावसरे वरो वधूमुपब्रूते—

| | |
|---|---|
| इष एकपदी | ऊर्जे द्विपदी |
| रायस्पोषाय त्रिपदी | मायोभव्याय चतुष्पदी |
| प्रजाभ्यः पञ्चपदी | ऋतुभ्यः षट्पदी |

सखा सप्तपदी भव सा मामनुव्रता भव ।
पुत्रान्विन्दावहै बहूंस्ते सन्तु जरदष्टयः ॥

इति । इमं मन्त्रं मनसि निधाय सीतयोच्यते—यथा विवाहावसरे पत्या "सा मामनुव्रता भव" इति सम्प्रार्थिताऽस्मि तथैव कायेन मनसा वाचा सर्वथैव तस्यानुव्रताऽस्मि । "राममनुव्रता" इत्यत्र रामम् इत्यत्र द्वितीया विभक्तिः समीचीना वार्षी वेत्यपि सम्यग् विचारितम् ।

अवश्यं संग्राह्यमिदं पुस्तकं प्रावेशिकपरीक्षासमुत्तितीर्षुभिश्छात्रैश्च तदध्यापकैश्च । अयञ्चास्यापरो विशेषो यत् सममेवेदमुपकरिष्यति मृत्पिण्डबुद्धीनां च कुशाग्रीयधिषणानां च बालानाम् । अत्र हि तथा व्याख्यातानि विषमतमान्यपि स्थलानि यथा तानि परिहृत्य काठिन्यमात्मीयमतिमात्रं सुबोधानि संवृत्तानि । रामायणमहाभारतादिकालादिनिर्णयविषयको विचारः संक्षिप्तमितिवृत्तादिकञ्च कस्य वा सचेतसश्चेतो नापहरेत् । विविधाभिनवविषयभासुरे सर्वाङ्गरमणीयेऽस्मिन् प्रबन्धे न जानीमः कस्य वा विशेषस्य समुल्लेखं विदधामः, परःशता हि ते अहमहमिकया प्रादुर्भवन्तः पुरतः परिस्फुरन्ति । संगृह्णन्तु पुस्तकमिदमध्यापकाः, प्रवर्त्तयन्तु स्वीयांश्छात्रानस्य संग्रहाय, अलस्यानां च रामायणमहाभारतादिगतसानुवादसुभाषितानां पठनाय च धारणाय च पालनाय चेति शिवम् ।

**मेघदूतम् ।** श्रीक्षितिनाथघोषविरचितम् । कमलाबुकडिपो लिमिटेड्, १५नं कलेज् स्कोयार, कलिकाता इत्यतः प्रकाशितम् । मूल्यं सार्धं रूप्यकत्रितयम् ।

बहोः कालात् पूर्वमशेषशेमुषीजुषा प्रथिततमेन हेयारविद्यालयस्य प्रधान-शिक्षकचरेण विविधशास्त्रपारदर्शिना जातकग्रन्थानुवादकेन विद्याव्यसनिना श्रीमता ईशानचन्द्रघोषमहोदयेन पुस्तकस्यास्य हस्तलिपिः प्रदर्शिता तदीय-भूतपूर्वच्छात्राय परिषत्-पत्रिकायाः साम्प्रतिकसम्पादकाय । तदानीं ग्रन्थस्यास्य निराभरणमूर्त्तिसन्दर्शनेनैव हर्षविस्मययोः परां कोटिमध्यरोहाम वयम्, आशीमहि च, अत्रत्या अलङ्कारशास्त्रीया विचाराः सर्वथा न समीचीनाः, अन्यत् सर्वमति-सुन्दरमेव । अत एव निरस्यतामसौ भागः, विशेषतो विमर्शनपुरःसरं वा पुनर्विलिख्यतामिति । इदानीं सुरुच्यारमणीयपरिबर्हस्य विचित्रचित्रविमण्डितस्य समुच्छलल्लावण्यस्यास्य सन्दर्शनेन सचेता वाऽचेता वा पण्डितो वाऽपण्डितो वा मर्मज्ञो वा पामरो वा को वा न विन्देतामन्दमानन्दसन्दोहं न वा प्रसारयेत् पाणिमस्य संग्रहणाय । अत्रत्यानि पद्यानि हृदयङ्गमानि सरसमधुराणि च, चित्राणि लोचनलोभनीयानि मानसावर्जकानि च, मुद्रणमपि विचित्रं मनोहरञ्च । भूमिकायां प्राच्यप्रतीच्यालङ्कारिकाणां काव्यात्मानमधिकृत्य मतभेदाः सुनिपुण-मुपप्रदर्शिताः, मेघदूतगता गुणा दोषाश्च विमर्शसरणिमनुप्रापिताः । अन्ते च मूलमपि सान्वयं सप्रतिशब्दं संयोजितम् । सुबहूनि त्रिवर्णरञ्जितानि चित्राणि प्रतिपृष्ठं च द्वित्राण्येकवर्णाङ्कितानि चित्राणि सुतरामावर्जयन्ति चित्तानि दर्शकस्य । ये कालिदाससुभाषितसुधास्वादसमुत्कण्ठिताः, ये च विचित्रचित्र-सन्दर्शनलालसमानसास्ते सर्वे एव सादरं च सत्वरं च संगृह्णन्तु पुस्तकमिदम् । ईदृशस्यानर्घ्यस्य ग्रन्थरत्नस्य मूल्यं केवलं सार्धं रूप्यकत्रयमित्यहो कोऽप्ययं भाग-धेयोदयो वाचकानाम् ।

यद्यप्येतद्गतानि मतानि सर्वत्र नास्माकं सम्मतानि, यद्यपि चान्तरान्तरा मुद्रणप्रमादा अपि बाहुल्येन नयनपदवीमवतरन्ति तथाऽपि पुस्तकस्यास्य समुत्क विषये नास्ति लेशतोऽपि संशयावकाश इति शम् ।

---

# संस्कृत-साहित्य-परिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| Novembar, 1934. | १८५६ शकीये कार्त्तिके १७श-वर्षस्य ७म-संख्या | Vol. XVII No. 7 |

## संस्कृत-साहित्य-परिषदोऽष्टादशवर्षीयकार्यविवरणम्

माननीयाः सभापतिमहोदयाः, मान्याः सभ्यमहोदयाश्च—

अद्य खलु संस्कृत-साहित्य-परिषदोऽष्टादशवर्षीयो महोत्सवो वर्त्तते। अत्र कृपया समागतेभ्यः सर्वेभ्य एव भवद्भ्यः सादरसम्भाषणादिकं विज्ञाप्य विगतवर्षीयं कार्यजातमुपस्थापयितुमुद्युक्ता वयम्।

प्रारम्भे एव भवद्भ्यः काञ्चन शोकवार्त्तां निवेदयामः। येषां खलु महात्मनां प्रयत्नविशेषेण परिषदा राजकीयसाहाय्यं लब्धमासीत्, ये खलु सज्जनपरिपोषकाः परिषदोऽकृत्रिमहितैषिणश्चाऽऽसंस्ते—माननीयाः प्रभासचन्द्रमित्रमहोदयास्तथा परिषदोऽन्यतम-सभापतयः सुगृहीत-नामधेया वैद्यधुरन्धरा दानमानादिभिरूर्जिताः कविराजशिरोमणि-श्यामादास-वाचस्पतिमहोदयास्तथा परिषद आजीवनसदस्या वदान्य-प्रवरा दुःखदारिद्र्यप्रपीडितानां मित्रभूता रायबाहादुर-कुमार-मन्मथ-नाथ-मित्रमहोदयाश्च परलोकं प्रस्थिताः। एतेषां महात्मनां वियोगेन परिषदा या हानिरनुभूयते कदा तस्याः पूर्त्तिर्भविष्यतीति न जानीमः।

यथा दुःखासंभिन्नं सुखं न दृश्यते तथा सुखासंभिन्नं दुःखमपि नोपलभ्यते। तथाहि—दुःखपीडिताऽपि परिषत् केषाञ्चन सभ्यानामभ्यु-दयविशेषेण शोकभारं लघूकुर्वती कथञ्चित् प्रकृतिमापन्ना दृष्टेव वर्त्तते।

तेषु च सभ्येषु—वङ्गीयप्रधानविचारालयस्य प्रधानविचारपतिपदमारूढाः श्रीमन्तो मन्मथनाथ-मुखोपाध्यायमहोदयाः, कलिकाता-विश्वविद्यालयस्य नेतृत्वमधिकुर्वाणाः श्रीमन्तः श्यामाप्रसाद-मुखोपाध्याय-महोदयास्तथा कलिकाता-विश्वविद्यालयस्य प्रधान-संस्कृताध्यापकपदभाजः श्रीमन्तः प्रभातचन्द्र-चक्रवर्त्तिनश्च समुल्लेखमर्हन्ति ।

वर्त्तमानवर्षीय-कार्यजातसमुपस्थापनावसरे प्रथममेव मानसमारोहति विगतवर्षीयो वार्षिकमहोत्सवः; यः खलु सौराश्विनस्य द्वितीयदिवसे इउनिभार्सिटि इन्ष्टिटिउट्भवने तत्रभवतां प्रख्यातकीर्त्तीनां वैद्यप्रवराणां प्रत्यक्षशारीरकादि-ग्रन्थनिर्मातॄणां महामहोपाध्यायपदभाजां श्रीमतां गणनाथसेन-सरस्वती-विद्यानिधि एम्, ए, एल्, एम्, एस् महोदयानामाध्यक्ष्येण सुनिष्पन्नोऽभूत् । अद्येव तद्दिवसेऽपि समागतानां विविधविद्याविद्योतितमानसानां सामाजिकमहोदयानां समागमनेन सङ्कुलमासीदास्थानमण्डपस्थानमिति हन्त ! स्मरामि च हृष्यामि च ।

तत्रावसितेष्ववान्तरकृत्यनिवहेषु सम्पादकेन श्रीमता अमरेश्वरठाकुरेण स्वरचित-संस्कृतभाषया निबद्धं परिषदः सप्तदशवार्षिककार्यविवरणं पठितमासीत् । समनन्तरञ्च सभापतिमहोदयेन सुगृहीतनामधेयानां स्वधर्मपरिनिष्ठितमतीनां विप्रान्ववायानां 'सुषङ्गा'धिपतीनां महाराजकुमुदचन्द्र-सिंह-महोदयानां तैलचित्रमपावरणं कृतम् । अवसरे च तस्मिन् तत्रभवन्तः म० म० शितिकण्ठवाचस्पतिमहोदयाः, श्रीयुक्त-भागवतकुमार शास्त्रिणः श्रीयुक्त-कालीपद-तर्काचार्य महोदयाश्च परासोस्तत्रभवतः संस्कृत-साहित्यानुरागप्रमुखान् गुणानधिकृत्य सुमधुरा वाचः प्रावर्त्तयन् । ततश्च सभापतिमहाभागैः स्वपाण्डित्यानुरूपं संस्कृतभाषामयमभिभाषणं वाचितम् । तदिदमभिभाषणं हृदयग्राहि च पाण्डित्य-बहुज्ञत्वयोनिदर्शनञ्चेति समेताः सभासदस्तदतिमात्रं प्राशंसन् । सभापतिभ्यो धन्यवादप्रदानेनावसिते सभाकर्मणि परिषत्सदस्यैः भासकृतस्य 'प्रतिमा' नाटकस्य बोधायनकविकृतेर्भगवदज्जुकीय'प्रहसनस्य चाभिनयः कृतः ।

संस्कृत-साहित्य-परिषद् उद्देश्यं तावत् संस्कृतभाषायाः संस्कृत-साहित्यस्य च प्रभावविस्तार एव। एतदुद्देश्यसाधनार्थं परिषदा केचिदुपाया अवलम्बिताः। मासिकाधिवेशनव्यवस्था, तत्र संस्कृतभाषोपनिबद्धानां प्रबन्धानां वाचनं तत्समालोचनञ्च ; चतुष्पाठीस्थापनेन शास्त्राध्यापनम् ; मुद्रितानाममुद्रितानाञ्च ग्रन्थानां संग्रहेण ग्रन्थागारसंरक्षणम् ; अप्रकाशितपूर्वाणां ग्रन्थानां प्रकाशः ; संस्कृतभाषामय्या मासिकपत्रिकायाः सम्पादनम् ; शास्त्रव्याख्यानम् ; संस्कृतरूपकाभिनयश्च—तेषूपायेषु प्रधानत्वेन कल्पितः।

एतेषामुपायानां साफल्यप्रापणाय अस्माभिः किं किं कृतं क्रियते च तत् समासतो विवृणुमः।

**मासिकाधिवेशनम्**—व्यतीते वर्षे नवसंख्याकानि मासिकाधिवेशनानि सम्पन्नानि। तत्र तत्राधोनिर्दिष्टा निबन्धा वक्ष्यमाणनामभिर्महाभागैर्वाचिताः।

१। कलापव्याकरणस्य वैशिष्ट्यम् श्रीमता क्षितीशचन्द्र-चट्टोपाध्यायेन।
२। वोपदेवस्य वङ्गीयत्वम् ,,
३। प्रत्यभिज्ञारसिकः कः श्रीमता रामलिङ्ग-शास्त्रिणा।
४। वेदापौरुषेयत्ववादः श्रीमता विनोदविहारी मजुमदार एम, ए, इत्यनेन,
५। काशिकावृत्तिः श्रीमता क्षितीशचन्द्र-चट्टोपाध्यायेन।
६। अपूर्वम् श्रीमता यादवेश्वर-काव्यव्याकरणतीर्थेन।
७। जानकीहरणम् श्रीमता क्षितीशचन्द्र-चट्टोपाध्यायेन।
८। देवभाषामयं मासिकं पत्रं ,, ,,
९। संस्कृतशिक्षापद्धतिः श्रीमता रामकृष्ण-चक्रवर्त्ती एम, ए इत्यनेन।

संस्कृतभाषया निबद्धास्त इमे निबन्धास्तत्र तत्राधिवेशने समेतैः पण्डितवर्य्यैर्यथायथं संस्कृतभाषया समालोचिताः। एतत् खल्वत्र द्रष्टव्यं

नवानां निबन्धानां मध्ये पञ्चैव तत्रभवता क्षितीशचन्द्र-चट्टोपाध्यायमहोदयेन पठिता इति। अनेन खलु महात्मना श्रमातिरेकमुररीकृत्य परिषत्-कृत्यपरिनिष्ठायामनन्यसुलभं साहायकं रचितमित्यस्मै हार्दिकीं कृतज्ञतां विज्ञापयामः।

व्यतीते वर्षे कार्यनिर्वाहकसमितिरपि नव धारान् सङ्घटिता सती परिषदः कार्यजातं निरवाहयत्। कार्यनिर्वाहकसभ्यवृन्दानि च तत्र तत्राधिवेशने समुपस्थाय महान्तमेव कर्मोत्साहमदर्शयन्निति तेभ्यो धन्यवादान् वितरामः।

**चतुष्पाठी**—परिषद्विद्यालये च पण्डितप्रकाण्डाः श्रीमन्तः सीतानाथसिद्धान्तवागीशमहोदया यथाकालं यथानियमं यथोपयुक्तञ्चोपस्थाय छात्रानध्यापयन्तो वर्त्तन्ते। चिराध्ययनैकव्रतानाममीषां पण्डितवर्याणामध्यापननैपुणी छात्राणामज्ञानान्धकारान् विधुन्वाना तेभ्यः किञ्चन नूतनं तत्त्वमावेदयति। अत्र च विद्यालये न केवलं शिक्षार्थिनः शिष्या अधीयते शिक्षिताश्चानेके शिष्यत्वमधिगत्य शिक्षितेष्वपि शास्त्रेषु विशेषबुभुत्सयाऽत्र अधीयते। व्यतीते वर्षे त्रिंशत्संख्यकाश्छात्रा वेद-न्याय-साहित्य दर्शनादिष्वधीतिन आसन् तेष्वष्टौ गभर्णमेण्टपरिगृहीतायां परीक्षायां नैकं विषयमधिकृत्यावतीर्णा उत्तीर्णाश्चाप्ष्टावेव।

नहि चिरातीतः स समयो यत्र प्रायः सर्व एवाध्यापका आहारादिप्रबन्धस्य सुव्यवस्थां विधाय छात्रानध्यापयन्तः प्रशंसार्हा आसन्; दुर्भाग्यतः पुनरद्यत्वे सा व्यवस्था लुप्तप्रायेति महान्तं खेदमनुभवन्ती संस्कृतसाहित्यपरिषत् तां धारयितुं कृतयत्ना प्रतिवर्षं यथाशक्ति वृत्तिपुरस्कारादिदानद्वारा छात्रानुत्साहयति। परमर्थकृच्छ्रात् तद्वृत्त्यादि यथाप्रयोजनं वर्धयितुमशक्नुवती विषादमनुभवन्ती सहृदयानामवधानमर्थयते।

**ग्रन्थागारः**—ग्रन्थागारसंरक्षणं तदुत्कर्षसाधनञ्च परिषदोऽन्यतमं कर्मणी। एतदर्थं कर्पोरेशनसभातः परिषदा सार्धषट्शतरूप्यकाणि

प्रतिवर्षमासाद्यन्ते। एतदेव साहाय्यं परिषद्ग्रन्थागारसमृद्धेर्निदानमिति कृतवेदितागलन्मनोभिरस्माभि स्तत्सभासद्स्या विनिवेद्यन्ते। ग्रन्थागारस्य यादृशी समृद्धिरस्माभिः काम्यते यद्यपि सा न सञ्जाता तथाऽपीदं विभिन्नस्थानवास्तव्यानां शास्त्रानुशीलननिरतानां विबुधानाम् अनुसन्धित्सापरवशानां छात्राणाञ्च महते उपकाराय कल्पते इत्यस्माकं महान् परितोषः। वर्षेऽस्मिन् अचिरसंगृहीतानाम् अष्टाविंशत्युत्तरशतसंख्याकमुद्रितपुस्तकानां तथा पञ्चविंशतिसंख्यकहस्तलिखितपुस्तकानां च समवायेन सम्प्रति ग्रन्थागारे मुद्रितपुस्तकानां संख्या अष्टाविंशत्युत्तरचतुःशताधिकचतुःसाहस्री, हस्तलिखितपुस्तकानाञ्च सपादशतद्वयोत्तरत्रिसाहस्री। श्रीमता अशोकचन्द्र-चट्टोपाध्यायमहोदयेन मुद्रिताश्चत्वारो वेदाः परिषदे उपहृताः, सोऽयमुपहारः सार्द्धषट्शतरूप्यकलभ्यग्रन्थरूप इति उपहर्त्रे तत्रभवते शतशो धन्यवादा वितीर्यन्ते। परिषद्ग्रन्थालयाध्यक्षा विविधशास्त्रज्ञानमण्डितबुद्धयः श्रीमन्तो जानकीनाथ-साहित्यशास्त्रिणो ग्रन्थागारसमुन्नतिविधौ सर्वथा प्रयत्नपरायणा वर्त्तन्ते इति तेभ्यः कृतज्ञतां धन्यवादञ्च ज्ञापयामः। अर्थस्य पर्याप्तिविरहेण पृथग् ग्रन्थप्रकाशासमर्था अपि वयं तत्र दत्तावधानाः परिषत्पत्रिकाद्वारेण 'सर्वप्रत्ययमालां' वररुचिकृतां 'लिङ्गवृत्तिं' पूर्वमेघस्य "सारोद्धारिणीं" नाम टीकाञ्च प्राकाशयाम। सत्यामर्थपर्याप्तौ अमुद्रितानामन्येषां ग्रन्थानां मुद्रणाय यतिष्यामहे।

**परिषत्पत्रिका**—सप्तदश वत्सरान् यावत् पाठकानां हृदयमावर्जयन्ती परिषत्पत्रिका नानाविषयगुम्फिता यथानियमं प्रकाश्यते। सेयं विगतं वर्षपञ्चकं यावद् विश्वविद्यालयाध्यापक-श्रीमत्-क्षितीशचन्द्र-चट्टोपाध्याय एम्, ए महोदयेन लालिता सम्पादननैपुण्येन परिपोषिता विभिन्नदेशवास्तव्यानां सुधीवृन्दानां सुदृष्टिक्षेपसंवर्धिता च परिषदो वैशिष्ट्यं प्रकटयन्ती वर्त्तते इत्यस्माकं मोदाय।

**विशेषाधिवेशनम्**—व्यतीते वर्षे द्वे विशेषाधिवेशने सम्पन्ने। तत्रैकं परिषदोऽन्यतमसहसभापतीनां श्रीमतामादित्यनाथ-मुखोपाध्याय-महोदयानां कलिकाताविश्वविद्यालये 'पञ्चमजज्जे' अध्यापकपदप्राप्तौ आनन्दप्रकाशार्थम् आहूतम्। तस्यां सभायां तत्रभवते संस्कृतभाषानिबद्धं मुद्रितमभिनन्दनं प्रदत्तम्। तत्रोपस्थिता महामहोपाध्यायप्रचुरा बहवः सदस्या अभिनन्दनीयस्याऽऽदित्यनाथमुखोपाध्यायस्य गुणानुदाहृत्य सुमधुरां वाग्मितां प्राकाशयन्। सभान्ते परिषत्सदस्या बोधायनकविकृतं भगवज्जुकीयं नाम नाटकमभ्यनैषुः।

'कलिकाता-संस्कृतकलेज' प्रधानाध्यापकानां श्रीमतां कुञ्जविहारि-तर्कसिद्धान्त-महोदयानां महामहोपाध्यायोपाधिप्राप्तौ पुनरपरमधिवेशनं सञ्जातम्; तत्र श्रीमद्भिरादित्यनाथ-मुखोपाध्यायमहोदयैः सभापति-पदमलङ्कृतम्। अस्मा अप्यभिनन्दनीयाय परिषत्पक्षतः संस्कृतभाषामयं मुद्रितमभिनन्दनं प्रदत्तमासीत्। समेताः सदस्यास्तत्रभवतामनितर-साधारणं पाण्डित्यं चरित्रोत्कर्षञ्चावलम्ब्य वाग्विस्तरं विरचयामासुः। सभान्ते परिषत्सदस्यैर्मत्तविलासनामकं प्रहसनमभिनीतम्।

राजकीयसाहाय्यं व्यतीते वर्षे राजतीनां पञ्चशत्यां परिणतम्। प्रयोजनापेक्षयाऽपर्याप्तमिदं साहाय्यमिति कोऽत्र वचनावकाशः। सर्वदेश-साधारणी अर्थकृच्छ्रतैवात्र कारणमिति भगवत्समीपेऽस्या अवस्थायाः प्रतीकारमेव केवलं याचामहे।

**शास्त्रव्याख्या**—शास्त्रज्ञानपिपासूनां सन्तोषविधानार्थं पण्डित-प्रकाण्डाः श्रीमन्तो जानकीनाथ-साहित्यशास्त्रिणः प्रतिसोमवासरं शास्त्र-व्याख्यामारचयन्नासन्, परं वर्षस्यान्तिमे भागे शारीरिक्या असुस्थतया गृहीतमपि भारं वोढुं नाशक्नुवन्; तदत्र भगवदिच्छैव मानवाना-मभिलषितमन्यथयन्ती निदानमित्यवधारयामः।

**संस्कृताभिनयः**—संस्कृतरूपकाभिनयेन संस्कृतभाषायां जनानाम् अनुरागो वर्द्धितो भवेत्, नाट्यकलायाश्च समुत्कर्षः स्यादिति

मन्यमाना संस्कृतभाषायास्तथा तन्निबद्धवस्तुजातस्य प्रसारार्थिनी परिषत् सदस्यद्वारेण रूपकाभिनयं तदुद्देश्यसाधनोपायत्वेन स्वीकृतवती। वार्षिकसभावसरे प्रतिवर्षं परिषदा रूपकाभिनयं कृत्वा प्रेक्षकाणामानन्दो विधीयते इति विदितमेव भवताम्। परिषदा साकल्येन चतुर्विंशतिसंख्याकानि रूपकाण्यभिनीतानि, तत्र चत्वारि वर्जयित्वा सर्वाण्येव साम्प्रतिके काले अनभिनीतपूर्वाणि। वङ्गेतरेष्वपि प्रदेशेषु परिषदभिनयः समादृतोऽभूदिति बहुशो विज्ञापितमस्माभिः।

स्वकीयगृहाभावेन परिषत्कार्याणां विघ्नः सञ्जायते। आयासार्जितानां मुद्रितानाममुद्रितानाञ्च ग्रन्थानां प्रचुरार्थव्ययेन निर्मापितानाञ्च तैलचित्राणां कथं संरक्षणं भवेदिति चिन्तया पीड्यमाना वयम् 'मनोहरपुकुराख्य' वर्त्मपार्श्वे स्थितायां परिषद्भूमौ गृहनिर्माणव्यवस्था करणीयेति निर्धार्य गृहनिर्माणसमितिमेकां परिकल्पितवन्तः। तत्राऽऽध्यक्ष्यमास्ते आइ, सि, एस् इत्यधिकारवतां श्रीमतां प्रबोधचन्द्र-दे-महोदयानाम्। सुधियोऽत्र साहाय्यकं विदधत्विति प्रार्थयामहे।

मान्याः सुधियः, समासेनास्माभिर्विगतवर्षीयं कार्यजातम् अर्थाभावकृतमसौकर्यञ्चोपवर्णितम्। अस्माकं सभ्यतायास्तथा समाजस्य च प्रकारः कीदृश आसीदिति यां भाषामन्तरेण न परिज्ञायते, यया च भाषया अस्मत्पूर्वजानां माहात्म्यं सम्यगवबुद्धं भवति, यदुपनिबद्धेषु शास्त्रेषु अस्माकं सुखलाभस्य दुःखहानस्य चोपायो निर्दिश्यते, या भाषा वेदवेदान्तमीमांसादीनां स्मृतिपुराणेतिहासानां तन्त्रज्योतिषायुर्वेदच्छन्दसां काव्यालङ्कारव्याकरणादीनाञ्च शास्त्राणां जननी, उपेक्षावशेन औदासीन्यवशेन वा यदि तां न यथायथं परिपालयामस्तदाऽस्माकं विध्वंसोऽवश्यम्भावीति निश्चिनुमः। तस्याः सर्वजनपूजितायाः संस्कृतभाषायाः संस्कृतोपनिबद्धस्य शास्त्रस्य च प्रसारार्थं प्रयतमानामिमां परिषदं सर्वथा सुदृढां कुर्वन्तु भवन्त इति प्रार्थयमाना भवद्भ्यः पुनरपि सादरसम्भाषणादिकं विज्ञाप्य विरमामो वयम्।

# सभापतेरभिभाषणम्*

संस्कृत-साहित्य-परिषद् उद्देश्यं संस्कृतशिक्षायाः प्रभावविस्तार इति समासतो वक्तुकामेनाभिधेयम्। संस्कृतसाहित्य एव वयमस्माकं पूर्वतनानां रीतेर्नीतेः सभ्यताया धर्मस्य च स्वरूपमुपलभामहे। कथं वयमास्म कथं वा अभूम भविष्यामो वेति प्रश्नानां विश्लेषणमुत्तरञ्च संस्कृतसाहित्यमनुशीलयन्त एवोपलभामहे। अस्माकमतीतगौरवाणां निदर्शनं संस्कृतसाहित्ये यथा निहितं न तथाऽन्यत्र।

संस्कृत-साहित्य-परिषत् स्वोद्देश्यसिद्ध्यर्थं साधारणतः कांश्चनोपायानवालम्बत। तेषां संस्कृतभाषामय्याः पत्रिकायाः प्रकाशः, मुद्रितामुद्रितानां ग्रन्थानां संग्रहसंरक्षणं, चतुष्पाठीपरिचालनम्, ग्रन्थप्रकाशो रूपकाभिनयश्च विशेषेणोल्लेखमर्हन्ति। उपायानमून् फलवतः कर्तुं परिषदा आप्राणपातं प्रयत्यते। मुद्रितग्रन्थागारे बह्वोऽमूल्या ग्रन्थाः संगृहीताः, हस्तलिखितानां पुस्तकानां संख्याऽपि गरीयस्येव। स्वर्गीयमहामहोपाध्याय-हरप्रसाद-शास्त्रिमहोदयप्रमुखा बहवो विशेषज्ञाः पुस्तकागारस्य प्रशंसामरचयन्।

कस्यचन सुपण्डितस्याध्यापकस्य शिक्षानैपुण्येन चतुष्पाठी सुन्दरतरं परिचाल्यते। परिषदो बहवश्छात्रा इदानीं प्रतिष्ठाभाजः पण्डिताः।

परिषत्पत्रिकासम्पादनभारो योग्यतमस्य पुरुषस्य हस्ते न्यस्तः। तस्य पाण्डित्येन परिश्रमेण च पत्रिका अनुदिनमुन्नतिपथमधिरोहति।

रूपकाभिनयेऽपि परिषदा महन्नैपुण्यं प्रदर्श्यते। वङ्गाधिपेन 'लर्ड लिटन' महोदयेन समाहूतेयं परिषत् तदालये अभिज्ञानशाकुन्तलस्याभिनयं प्रदर्शितवती। तदभिनयदर्शनादाहितसन्तोषेण 'लर्ड लिटन'

---

* संस्कृत-साहित्य-परिषदोऽष्टादशवर्षीयमहोत्सवे सभापतीनां 'आइ, सि, एस्' इत्यधिकारवतां श्रीमतां किरणचन्द्र-दे-महोदयानां वङ्गभाषामयाभिभाषणस्यानुवादः।

महोदयेन या नाम प्रशंसालिपिरस्यै वितीर्णा सा परमार्थत एवोत्साहं दीपयति। एवमेव भारतवर्षस्य प्रदेशान्तरेभ्योऽपि समाहूता परिषत् तत्र तत्राभिनयकौशलं प्रदर्श्य प्रशंसामर्जितवती। नेदं नाऽऽशास्यं यत् परिषद्श्चेष्टया संस्कृताभिनयकला पुनर्जीवितं लप्स्यत इति।

ग्रन्थप्रकाशकर्मण्यपि न तावत् कार्पण्यं परिदृश्यते परिषदः। सत्यामपि नैकविधायां दुर्विधायामद्य यावत् परिषदा दर्शनादिविषयविशेषेषु विंशतिर्ग्रन्था मुद्रिताः। ते च स्वदेशीयैर्विदेशीयैश्च पण्डितैर्मुक्तकण्ठं प्रशंसिताः।

देशवासिनो विदेशवासिनश्चानेके विद्वांसः परिषदः कार्यजातं प्राशंसन्। देशस्य सुदिने राजपुरुषाः परिषदः प्रभूतमर्थसाहायकं कृतवन्तः; सम्प्रति तत् साहायकं लाघवमगमदिति, देशे सर्वसाधारणी द्रव्यकृच्छ्रता जातेति च परिषदिदानीमभावग्रस्ता वर्त्तते। एवंविधमेकं प्रतिष्ठानमर्थाभावेन नश्येदिति महानयं परितापः। परिषदो रक्षायां समुन्नतौ च देशवासिभिरवधातव्यम्। इति शिवम्।

---

# न्यायतत्त्वकणिका

[ निबन्धकः—श्रीचण्डीचरण-तर्कतीर्थः ]

सुविदितमेवात्र सर्वेषां न्यायतत्त्वपीयूषरसास्वादकानां तत्रभवन्तो न्यायसिद्धान्तशिरोमणयो वङ्गदेशस्य परमालङ्कारभूताः श्रीमन्तो मथुरानाथ-तर्कवागीशाः कीदृशाः सुमनीषिण आसन्निति ।

ते किल महाभागा दुरवगाहतत्त्वस्य तत्त्वचिन्तामणेस्तत्त्वम् अनतिक्लेशमल्पमतयाऽपि यथा गृह्णीयुस्तथैव प्रयतमानास्तत्त्वचिन्तामणेरुपरि रहस्याख्यां काम्यनन्यसाधारणीं टीकां कृतवन्त इत्यपि केषां परं नाविदितं शास्त्रदृशाम् ।

सेयमपूर्वतमा विद्वत्समाजसमादृता रहस्याख्या टीका चिराद्ध्ययनाध्यापनपरम्पराभिः प्रसिद्धा चिन्तामणितत्त्वजिघृक्षूणां मानसकमलं समलङ्कुरुते स्म इत्यविसंवादितं तत्त्वम् ।

अस्य च रहस्याख्यटीकाग्रन्थस्य व्याप्तिवादपञ्चलक्षण्याम् "अव्ययीभावसमासस्याव्ययतया तेन समं समासान्तराभावाच्च" इत्येवं पङ्क्तिविशेषो गुरुपरम्परया श्रूयते। तस्य हि स्वार्थे प्रामाण्यग्राहकस्तत्समानार्थको लेखः कुत्रचिद् व्याकरणे अन्यत्र वा क्वचिच्छास्त्रे नैवोपलभ्यते, वस्तुस्थितिरपि न तथाविधाऽस्ति, इत्यप्रमितविषया हि श्रीमन्मथुरानाथकृतिनः कृतिरियमिति भ्रमो विदुषामपि मानसं समनुसृतः, अतोऽस्याः पङ्क्तेरुपरि प्राप्तानां विवरणानां विवेचनात्मकः कोऽपि विचारविशेषः प्रबन्धरूपेणात्रोपलिप्यते। यदि तत्राल्पमतिकस्य मे क्वचिच्च केचित् प्रमादाः स्युस्ते सुधीभिर्यत्नेन निरसनीयाः ।

अव्ययीभावसमासस्याव्ययतया तेन समं समासान्तराभावाच्चेति वाक्ये, अव्ययीभावसमासस्येति षष्ठ्यर्थो वृत्तित्वम्, अव्ययतयेति तृतीयार्थः

प्रयोज्यत्वं तस्य चाग्रिमसमासान्तराभावादिति समासान्तराभावपदार्थे ऽन्वयः, सममित्यस्य साहित्यमर्थः; तच्च तेनेति तत्पदार्थनिरूपितं घटितत्वरूपम्। एवञ्च अव्ययीभावसमासनिष्ठाव्ययत्वप्रयोज्यतद्घटित-समासान्तराभावः इत्ययमेव शाब्दोऽत्रार्थः पर्यवसितः। स च पाणिन्यादितन्त्रे क्वापि न दृष्टचरः, भूतलोपकुम्भमित्यादिप्रयोगविरुद्ध-श्चेत्यप्रमितविषयकतयाऽस्य वाक्यस्य स्वार्थे न प्रामाण्यमिति बहूनां विप्रतिपत्तिः।

अथानुमानतस्तदर्थसाधनाभिप्रायकोऽयं ग्रन्थः। भूतलोपकुम्भमित्यादि-प्रयोगस्य प्रामादिकत्वशङ्काकवलिततया साध्यसंशयसम्पादकत्वादनुमिता-वनुकूलत्वमेव। अनुमानप्रकारस्तु अव्ययीभावसमासः घटकत्वसम्बन्धा-वच्छिन्नप्रतियोगिताकाव्ययीभावसमासेतरसमासाभाववान् अव्ययत्वात्, यत्र यत्र अव्ययत्वं तत्र तत्र घटकत्वसम्बन्धावच्छिन्नप्रतियोगिता-काव्ययीभावसमासेतरसमासाभावः। यथोपवध्विति। नचायमप्रयोजकः व्यभिचारशङ्कानिवर्त्तकतर्कविरहादिति वाच्यम्, घटकत्वसम्बन्धेना-व्ययीभावसमासेतरसमासत्वावच्छिन्नं प्रति अव्ययत्वेन प्रतिबन्धकस्य तद्ग्राहकस्य सत्त्वात्। तथाच अव्ययत्वं यदि घटकत्वसम्बन्धावच्छिन्न-प्रतियोगिताकाव्ययीभावसमासेतरसमासाभावव्यभिचारि स्यात्तदा तादृश-सम्बन्धावच्छिन्नाव्ययीभाव-समासेतर-समासत्वावच्छिन्न-प्रतिबन्धकताव-च्छेदकं न स्यादिति तर्कशरीरम्। न च सकलतन्त्रव्युत्पादितनञ्तत्पुरुषादि-समासोऽनेन विरुध्येत नञो निपातत्वेनाव्ययतया तत्समासप्रतिबन्धकत्वा-दिति वाच्यम्, नञुपाध्यादिरूप-तत्तदव्ययभिन्नाव्ययत्वेनात्राव्ययानां प्रति-बन्धकतास्वीकारात्। तथाच घटकत्वसम्बन्धेनाव्ययीभावसमासेतर-समासत्वावच्छिन्नं प्रति नञुपाध्यादीनामव्ययानां प्रत्येकतस्तत्तद्भेद-विशिष्टाव्ययत्वेनात्र प्रतिबन्धकत्वं कल्पनीयम्। हेतुत्वमपि तत्रेतर-समासाभावे अव्ययत्वस्य तादृशभेदविशिष्टाव्ययत्वेनैव ग्राह्यमिति न व्यभिचारः।

अथात्र नञुपाध्यादीत्यादिपदग्राह्या: ये तद्विशेषाः प्रतिबन्धकतावच्छेदकीभूतभेदप्रतियोगित्वमर्हन्ति, तेऽपि प्रतिबन्धकतापरिच्छेदार्थं लक्षणीयाः, अन्यथाऽव्ययीभावसमासस्यापि प्रतिबन्धकतावच्छेदकभेदप्रतियोगिकुक्षौ निःक्षेपे अव्ययीभावसमासघटिततदितरसमासस्य सम्भवेन निरर्थक एवानुमानप्रयासः इति, चेत् सत्यम्। तेषां परिसंख्यातत्वात्। परिसंख्यातारश्च ते वैयाकरणाः। तथा च परिगणितस्य पुनर्गणनं न मन्दधियामपि प्रवृत्तिविषय इत्यव्ययीभावसमासघटिततदितरसमासस्यात्र कः प्रसङ्गः। एवञ्च शब्दव्युत्पत्तिविषयतयाऽस्य ग्रन्थस्य व्याकरणानुशासनशिष्टविषयताकत्वरूपप्रामाण्यमिति शङ्कैव न घटते। असति बाधके प्रमापरामर्शजन्यस्य प्रमात्वनियमात्। अव्ययीभावसमासस्याव्ययतया तेन समं समासान्तराभावाच्च इत्यादि नञुपाध्यादिरूपतत्तदव्ययविशेषाणामेव समस्यमानत्वेन परिगणितत्वादित्यन्तग्रन्थस्य एतादृशानुमानार्थस्वरसताऽस्तीति तदर्थतात्पर्यावधारणञ्चात्र नासम्भवदुक्तिकम् इति चेत्, उच्यते।

स्यादेवं यद्यत्रानुमाने व्यभिचारशङ्कानिवर्त्तकतर्कमूलभूतस्य प्रतिबध्यप्रतिबन्धकभावस्य कल्पकः कश्चित् स्यात् स एव नास्ति। "अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु" इति सूत्रेणार्थविशेषमन्तर्भाव्यैवाव्ययानां सुबन्तैः सहाव्ययीभावसमासविधानादव्ययत्वमात्रस्याव्ययीभावसमासेतरसमासप्रतिबन्धकतायाः पाणिन्यादितन्त्रविरुद्धत्वात्। एवञ्च व्यभिचारशङ्का निवर्त्तकतर्काभावादेव न तादृशानुमानसवित्ति तेन नाव्ययीभावसमासघटिततदितरसमासाभावसिद्धेः सम्भावनाऽपि। भवतु तद्यथा तथैव। इदमत्र पृच्छ्यते अव्ययीभावसमासः घटकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाव्ययीभावसमासेतरसमासाभाववान् अव्ययत्वादित्यनुमानेन किम् अव्ययीभावसमासत्वावच्छेदेन इतरसमासाभावः ाध्यते, उत तत्सामानाधिकरण्येन, सामानाधिकरण्येन

साध्यसिद्धेरुद्देश्यत्वे अनुमानवैकल्यम्, प्रकृते अवृत्तमित्यनेन सह विशिष्य-साध्याभाववतः समासनिषेधस्याप्राप्तत्वात्। भूतले अघटमित्यसमासस्य इष्टत्वेन सिद्धसाधनञ्च। अवच्छेदावच्छेदेन साध्यत्वे तु बाध एव, 'आसमुद्रक्षितीशानामानाकरथवर्त्मना'मित्यादिप्रयोगान्तर्भावे साध्याभाववत्तानिश्चयात्, सामानाधिकरण्येन बाधनिश्चयसत्त्वेऽप्यवच्छेदावच्छेदेनानुमितिप्रतिबन्धात्।

नचैवं विशिष्यावृत्तमित्यस्यैव पक्षताऽङ्गीक्रियते, साध्यता च अवच्छेदावच्छेदेनैव। तथाच नासिद्धिर्नवा बाध इति वाच्यम्। तथा सति साध्याभाववत्पदेन सह समासनिषेधार्थमुत्तरत्वसम्बन्धावच्छिन्नघटकत्वसम्बन्धेन इतरसमासाभावस्यैवात्र साध्यतापर्यवसाने, तेन च सम्बन्धेनावृत्तमित्यनेन समं "अव्ययं विभक्ति-समीपेत्यादिसूत्रानुशिष्टोऽव्ययीभावसमासः "प्रथमानिर्द्दिष्टं समास उपसर्ज्जनम्" इत्यनेन निषिद्धतया समासाभावमात्रस्य साध्यत्वावश्यकत्वेन अव्ययीभावसमासेतरत्वपर्यन्तानुधावनस्य व्यर्थत्वापातात्।

अथ समाससामान्याभावस्यैव साध्यत्वमिष्टमिति चेन्न व्यभिचारात्। तद्वारणाय च पुनरव्ययीभावसमासेतरसमासाभावस्य साध्यतायामर्थान्तरमेवेति। एवञ्चाव्ययीभावसमासनिष्ठाव्ययत्वप्रयोज्यतद्घटितेतरसमासाभावरूपोक्त-रहस्यग्रन्थपङ्क्तिपरिप्राप्तोऽर्थः शब्दव्युत्पादकशास्त्रैरननुशिष्टः-अनुमानेनापि च साधयितुमशक्य इत्येव स्थितम्।

अत्र प्राचीनाः।

अव्ययीभावसमासस्याव्ययीतयेत्यस्याव्ययीभावसमासनिष्ठाव्ययत्वकथनपरता न सम्भवति अव्ययत्वधर्ममात्रस्याव्ययीभावसमासेतरसमासनिषेधकत्वाभावादतोऽव्ययतयेत्यस्यानुपस्थितसुप्कतयेत्यर्थः। तथाच सुबन्तपदसाध्योऽव्ययीभावसमासेतरसमासः सुब्रहितेनाव्ययीभावसमासपदेन कथं नाम साध्यताम् इति वदन्ति। तत्तुच्छम् नहि अव्ययीभावसमासत्वावच्छेदेन सुब्रहितत्वमस्ति, तद्विशेषे सुब्रहितत्व-

सत्त्वेऽपि प्रकृत एवावृत्तमित्यकारान्ताव्ययीभावसमासस्य सुब्रहितत्वा-भावेन तद्घटितसमासान्तराभावस्यापादनासम्भवात्। सुब्रहितेनापि दधिप्रभृतिपदेन सहाव्ययीभावसमासेतरसमासदर्शनाच्च। नच सुप्-सामान्याभाव एवेतरसमासाभावनियामकः साध्याभाववतोऽवृत्ति यत्रेति मत्वर्थाभावपक्ष एवायं दोष इति वाच्यम्, अव्ययत्वस्येव सुब्रहितत्वस्यापि इतरसमासाभावनियामकतायास्तन्त्राननुशिष्टत्वात्। अव्ययं विभक्तिसमीपेत्यादिसूत्रेण सुबन्तैः सहाव्ययीभावसमास-विधानात्तद्विरोधाच्च।

अपरे तु 'अव्ययं विभक्तिसमीपे'त्यादिपाणिनिसूत्रे अव्ययमधिकृत्या-व्ययीभावसमासविधानादव्ययत्वेन सामान्यतोऽव्ययीभावसमास एव साध्यते, इतरसमासस्तु क्वचिद् विशेषविधिबलादिति प्रकृतेऽवृत्तमित्यनेन सह साध्याभाववतस्तत्पुरुषो न सम्भवति, इत्येवैतद्ग्रन्थतात्पर्यमित्युप-वर्णयन्ति। तन्न मनोरमम्। 'अव्ययं विभक्तिसमीपे'त्यादिसूत्रेण तत्र-भवता पाणिनिना अव्ययत्वधर्ममात्रेण न तावदव्ययीभावसमासः साध्यते, अपि तु विभक्तिसमीपसमृद्ध्याद्यर्थान्तर्भावेन। तथाचाव्ययत्व-धर्ममात्रस्येतरसमासाभावव्यभिचारितया तदकिञ्चित्करमेव। अनन्ता-ननुगततत्तदव्ययभेदानां हेतुतावच्छेदकगर्भे प्रवेशमाहत्य व्यभिचार-वारणप्रयासस्तु लोकमर्यादाबहिर्भूत एवेति।

अत्र ब्रूमः। "अव्ययीभाव समासस्याव्ययतया तेन समं समासान्तरा-भावश्च" इत्यत्र तेनेति तत्पदोपस्थाप्योऽव्ययीभावसमासः उत्तरपदभूत एव ग्राह्यः, प्रकरणबलात्। एवञ्च अव्ययीभावसमासनिष्ठाव्ययत्वप्रयोज्य उत्तरपदभूततद्घटितेतरसमासाभाव इत्येव मथुरानाथतर्कवागीश-पङ्क्तेरर्थः। अव्ययं विभक्तिसमीपेत्यादिसूत्रे अव्ययमिति प्रथमान्त-निर्देशात् "प्रथमानिर्दिष्टं समास उपसर्जनम्" इतिसूत्रेणाव्ययपूर्वपदका-व्ययीभावसमासस्यैव विधेयतयाऽव्ययोत्तरपदकसमासाभावस्तत्र तत्र तन्त्रसिद्ध एवेति नात्राप्रमितविषयकत्वशङ्कावकाशः।

इत्थञ्च अव्ययीभावसमास उत्तरत्वसम्बन्धावच्छिन्नघटकत्वसम्बन्धेन अव्ययीभावसमासेतरसमासाभाववान् अव्ययत्वादित्येवानुमानप्रकारः। अक्षपरि, शलाकापरि इत्याद्यव्ययोत्तरपदकाव्ययीभावसमाससङ्ग्रहार्थमव्ययीभावसमासेतरेति। आसमुद्रक्षितीशानामित्यादिप्रयोगसम्पत्तये पुनरुत्तरत्व सम्बन्धावच्छिन्नेति।

उत्तरत्वसम्बन्धावच्छिन्नघटकत्वसम्बन्धेनाव्ययीभावसमासेतरसमासत्वावच्छिन्नेनाव्ययत्वेन च प्रतिबध्यप्रतिबन्धकभाव एवात्रानुकूलतर्कः।

नच नमस्कृत्य समूलघातमित्याद्यव्ययोत्तरपदकाव्ययीभावसमासेतरसमासान्तर्भावे व्यभिचार इति वाच्यम्; अव्ययीभावसमासप्रयोजकविभक्तिसमीपादितत्तदर्थविशेषविशिष्टाव्ययत्वेन प्रतिबन्धकताया वाच्यत्वात्। तथाच विभक्तिसमीपादितत्तदर्थविशिष्टाव्ययत्वविरहादेव नमस्कृत्येत्यादौ न समासप्रतिबन्धः। अव्ययीभावसमासस्थले तु सर्वत्रैव तादृशार्थकत्वावश्यकत्वेन तद्विशिष्टाव्ययत्वरूपप्रतिबन्धकतावच्छेदकधर्मोऽव्याहत एवेति तत्प्रतिबन्धकता घटते। अत एवात्राव्ययीभावसमासत्वेन सिद्धाया अव्ययीभावसमासप्रयोजकविभक्तिसमीपादि तत्तदर्थविशिष्टतायाः परित्यागेन केवलस्याव्ययत्वस्यैव इतरसमासाभावप्रयोजकत्वमुक्तम्। एवं हि अव्ययीभावसमासस्य बाधकस्य सत्त्वेन तद्घटितेतरसमासस्य कथमप्यसम्भवादत्रोत्तरत्वसम्बन्धावच्छिन्नेत्यपि न देयम्। आसमुद्रक्षितीशानामित्यादिप्रयोगस्तु प्रयत्नेनोपपादनीयः।(१) अव्ययीभावसमासस्याव्ययत्वञ्च "अव्ययीभावश्चे"ति पाणिनिसूत्रानुशिष्टमेवेति बोध्यम्।

---

(१) प्रयत्नश्च पञ्चपुलीमानय इत्यादौ समासलभ्यसमाहारार्थस्यानयनक्रियायामन्वयानुपपत्त्या यथा पञ्चपुलीशब्देन समाह्रीयमाणवस्तुन उपस्थितिः, तद्वदासमुद्रक्षितीशानामित्यत्रापि अन्वयानुरोधादासमुद्रमित्यनेन मर्य्यादाविशिष्ट पदार्थस्यैवोपस्थिति रित्यव्ययीभाव समासप्रयोजक विभक्तिसमीपादि तत्तदर्थविशिष्टताया अभावादेव नाव्ययीभावसमासप्रसक्तिः कुतः पुनस्तत्प्रसङ्गेनेतरसमासाभावस्य तत्रापदन सम्भावना, येन तत्पुरुषसमासप्रतिबन्धः स्यादिति।

नन्वेवं नञुपाध्यादिरूपाव्ययविशेषाणामेव समस्यमानत्वेन परिगणितत्वादित्युक्तिविरोधः नञ्तत्पुरुषादिसमासस्थले नञादेरव्ययीभावसमासप्रयोजकतत्तदर्थविरहादेव निषेधस्याप्राप्तत्वादिति चेत्, न ; नञुपाध्यादिरूपाव्ययविशेषाणामेव समस्यमानत्वेन परिगणितत्वादित्यस्याव्ययीभावसमासप्रयोजकतत्तदर्थविशिष्टाव्ययत्वेन प्रतिबन्धकतायाः हेतुत्वस्य च कथनाभिप्रायकत्वात् ।

अथवा प्रामादिकोऽयं पाठः। नहि कथञ्चिदापतितः कस्यचिद् विपरीतलेखोऽपि प्रामाणिकग्रन्थगर्भगततया क्वचित् स्वार्थे प्रामाण्यमर्हति। एवंविधाश्च प्रमादा बहुषु पुस्तकेषु दृश्यन्ते, अतोऽत्र तत्कल्पनं नातिसाहसम्। भवतु, अत्र एतावन्तो विचारा विदुषां पुरत उपस्थापिताः परमन्येऽधिकं विवेचयन्तु सन्त इत्यलं पल्लवितेन।

---

## त्वरन्तां वाचकमहाभागाः

विदितमेवैतत् प्रायेण गीर्वाणवाणीसेवकानां यत् संस्कृते साहित्ये समुपलभ्यन्ते बहूनि वचनानि येषां मूलानि दुर्विज्ञेयानि। ईदृशानां वचनानामाकरपरिज्ञानाय कस्य वा सचेतसश्चेतो नोत्कण्ठते। अत एवान्तरान्तरा प्रकाशयिष्यन्तेऽस्माभिरीदृशवचनजातानि। प्रियवाचकमहाभागै रेतेषामाकरसमुल्लेखेन विधीयतामुपकारो देवभाषाप्रणयिनाम्। सञ्चिकायामस्यां पुण्यपत्तनस्थपरिषत्पत्रिकाप्रणयिविशेषप्रेषितानि संमुद्र्यन्ते कानिचन वाक्यानि। कृपया सूचयन्तु वचनानाममीषां मूलानि प्रियपाठकमहाभागाः ; ये च मूलानि निर्दिश्येरंस्तेषां नामानि परिषत्पत्रिकायां प्रकाशयिष्यन्ते, यस्य चैषामाकरप्रदर्शनेऽतिमात्रं पाटवं सन्दृश्येत तस्मै पारितोषिकमपि दशमुद्रातोऽन्यूनं प्रदास्यते संस्कृतसाहित्यपरिषत्पत्रिकासम्पादकेन। अत्र विचारे सर्वथा परिषत्-पत्रिकासम्पादक एव प्रमाणम्। एतद्गतं पत्रादिकं सर्वं 61 A Ramkanta Bose Street P. O. Bagbazar, Calcutta इत्यत्र प्रेषणीयमिति शिवम्।

१। पञ्चसु त्वेकरूपासु जय एव भविष्यति।

२। उभौ लोकौ सञ्चरसि इमं चामुं च देवल।

३। स्वर्गं लोकं न प्रजानाति मूढः।

४। नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः॥

५। गन्ता खेटं विकत्थनः। ६। आगामुकं वाराणसीं रक्ष आहुः।

७। सख्यं जनाः साप्तपदीनमाहुः।

८। तिमिरपटलैरवगुण्ठिताश्च रात्र्यः।

९। गतो गणस्तूर्णमसिक्निकानाम्।

१० । अशिशुमिव मामयं शिशुरभिमन्यते ।

११ । केनायं मुषितः पन्था गात्रे पक्ष्मालिधूसरः ।
केनेदं लिखितं चित्रं मनोनेत्रविकासि यत् ॥

१२ । सर्वे शकुनालयो भक्ष्या विष्किराः कुकुटाद्वते ।

१३ । ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः ।

१४ । व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥

१५ । वनं तापसरक्षितम् । १६ । सौर्ये हिमवतः शृङ्गे ।

१७ । लोमनखं स्पृष्ट्वा शौचं कर्तव्यम् ।

१८ । यस्य त्रैवर्षिकं धान्यं निहितं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥

१९ । सत्येन शापयेद् विप्रान् । २० । ईर्ष्यं भवन्तोऽनुचरन्ति चक्रम् ।

२१ । सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी ।

२२ । सैष दाशरथी रामः सैष राजा युधिष्ठिरः ।
एषैष रथमारुह्य मथुरां याति माधवः ॥

२४ । जयो वर्तते ब्राह्मणानाम् ।

२४ । यदा प्रोष्ठपदो मेघो धरणिमभिवर्षति ।

२५ । भक्तकश्चेन्न विद्यते वधकोऽपि न विद्यते ।

२६ । घटदिति गम्भीरमम्बुदैर्नदितम् ।

२७ । भिक्षामात्रं न ददाति याचितः ।

२८ । समुद्रमात्रं न सरोऽस्ति किञ्चन ।

२९ । आश्वीनानि शतं पतित्वा ।

३० । अकर्मकममुष्याहुर्वराह इव पुष्यति ।

३१ । अघृणी खलु वान्ताशी । ३२ । अद्यास्यते वृथाद्य लोकः ।

३३ । अतः स्तुनीहि मासतूं न । ३४ । अभ्यर्णे सेने आसाते ।

३५ । आरेकं संशयं प्राहुः । ३६ । उत्साहाद् भवते लक्ष्मीम् ।

३७। उन्नमिताखिलमहीधरकन्धरस्य। ३८। उपतस्थुः प्रकृतयः।
३९। एकं द्वादशधा जज्ञे। ४०। एवमाज्ञप्तोऽस्मि सामाजिकैः।
४१। तपयित्वा घनसम्पदमम्बुशोषः कृतः सवित्रा।
४२। क्षीरभोजिन्याः श्रुतिन्धरः पुत्रो भवति।
४३। क्षोप्ता नव्योऽयम्। ४४। खड्गखेटकौ हेंती।
४५। चक्रपाणिं पणायति। ४६। जाग्रति बुधाः।
४७। जिह्वाशतान्युल्ललयत्यभीक्ष्णम्। ४८। तडित् खचयतीवाशाः।
४९। तात ताडय ताटकाम्। ५०। तेन भूतिषु कर्तृत्वम्।
५१। त्रपोद्दलितः। ५२। दधते धनमर्थिभ्यः।
५३। दध्वान ध्वनयन्नाशाः।
५४। दशा वर्तिरवस्था च दशा वस्त्रान्तावयवाः।
५५। धान्तो धातुः पावकस्येव राशिः। ५६। नद्यप्रभावात्।
५७। न म्लेच्छन्ति ये नापभाषन्ते। ५८। नवज्वरो लङ्घनीयः।
५९। नित्यं न भवनं यस्य यस्य वा नित्यभूता।
न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव॥
६०। तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः।
प्रयोजकक्रियामाहुर्भावनां भावनाविदः॥
६१। पन्नानि नाभ्युज्जिहीते तृणानि।
६४। परयाऽपि तृषा विबाधितो न हि रथ्यागतमम्बु पीयते।
६५। परार्थे क्लिश्यतः सतः। ६६। परिलललने ललितम्।
६८। पार्थः शरान् वर्षति। ६९। प्रध्वंसाभावो ज्ञीप्स्यते।
७०। प्रवालफललुम्बिभिः। ७१। प्रस्तुम्पति गां वत्सः।
७२। प्रालम्बं कण्ठाद्दूत्तुलम्बि माल्यम्। ७३। भावयेज्ज्योतिरान्तरम्।
७४। भावयेद् ब्राह्मणं तपः। ७५। भेषजक्षपिताङ्गानां च।
७६। महीपतिवचः श्रुत्वा जुघुषुः पुष्यमानवाः।
७७। मुसलक्षेपहुङ्कार।

७८। मेरुं स्पर्धिष्णुनेवान्यो धृतो नाको हिमाद्रिणा।

७९। यथैव सुसमिद्धोऽग्निः।

८०। याचितारश्च नः सन्तु दातारश्च भवामहे।

८१। रजन्यां व्युष्टायामुषसि जनयामास तनयम्।

८२। राजर्षिकल्पो रजयन्मनुष्यान्। ८३। लङ्कापि दशाङ्कापि।

८४। लोकात् सूरिभिरत्यूह्यं लक्ष्यमूलं हि लक्षणम्।

८५। वञ्चं वञ्चन्ति वणिजः।

८६। वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।

८७। वान्ति पर्णशुषो वाताः। ८८। विमोतिकराङ्गुलिः।

८९। शेषो भुवं धीयते। ९०। श्वेतं नीलति मरकतकान्त्या।

९१। सङ्घोऽयुतसिद्धानाम्। ९२। समाशा गोमता जिता।

९३। स्तरीमास्तीर्य। ९४। स्पर्धमानः स कृष्णम्।

९५। स्वर्णं रत्नकरम्बितम्। ९६। हन्ये पाने न गोमयम्।

९७। हेत्वर्थानुप्रवेशोऽपि बुद्ध्यारोपाण्णिचं विना।

९८। काव्यालापांश्च वर्जयेत्।

९९। न पित्र्यमनुकुर्वन्ते मातृकं द्विपदाः।

१००। सर्वंसहापतितमम्बु न चातकानाम्।

१०१। गन्धर्वा वै हाहा हूहूः।

१०२। जमदग्निर्वै पञ्चममवदानमवाद्यत्।

१०३। ब्रह्मणो ह्येषा पितृप्रसवित्री तनुः।

१०४। अहोरात्राविमौ पुण्यौ। १०५। जीव्यात् सहस्रं समाः।

१०६। न तां वदेद्वृषलीं गां पापलोक्याम्।

१०७। व्रीडावनम्रवक्त्रेन्दुः। १०८। व्रीडादमुं देवमुदीक्ष्य।

१०९। य ईर्ष्युः परवित्तेषु।

११०। काममपायि मयेन्द्रियकुण्डैर्यद्यपि दुष्कृतहालहलौघः।

१११। जनार्दनश्चात्मचतुर्थ एव। ११२। दुःखः सतो निर्गुणः।

११३। सर्वं दुःखं विवेकिनः। ११४। सुगममेव हि मन्यमपां पतेः।
११५। राजन्वान् लोक उच्यते। ११६। अ मा नो नाः प्रतिषेधे।
११७। बुद्धेः फलमनाग्रहः। ११८। दर्भाणां स्थाने शरैः प्रस्तरितव्यम्।
११९ गोत्रस्खलितं किलाश्रुतं कृत्वा।
१२०। झिल्लिकाझाङ्कृतीनाम्। १२१। या जनित्री त्रिलोक्याः।
१२२। पद्भ्यामेव यथा तथा। १२३। अभिवाद्योपसंग्राह्य
१२४। निष्प्रवाणिर्नवः पटः।
१२५। येनान्तर्जलचारिभिर्जलचरैरप्युत्क्रमुत्कूजितम्।
१२६। सूर्यः समेषां समः। १२७। कुलस्यान्तः प्रभुः स्त्रियः।
१२८। प्रियादर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः।
निर्वाणमाप्यते येन सरागेणापि चेतसा॥
१२९। संवाहनं स्पर्शसुखम्।
१३०। अकरणिरिह भूयादप्रशस्तस्य धातुः।
१३१। पुलाका इव धान्येषु।
१३२। पुलाककारी विपुलाशयः स्यात्।
१३३। तपो न कल्कोऽध्ययनं न कल्कः। १३४। विचरेद् युगमात्रदृक्।
१३५। वर्जयेत् कटधूमं तु। १३६। प्रकीर्णभाण्डामनवेक्ष्यकारिणीम्।
१३७। क्षणे रक्ष्याः कुलस्त्रियः। १३८। क्षणपरपुरजिद्दत्तदेहप्रहारान्।
१३९। वृत्तदेहः स्नायुसारः। १४०। तीर्थं तद्धव्यकव्ययोः।
१४१। एकमेवेदं संविद्रूपम्।
१४२। प्रवृत्तौ च निवृत्तौ च संविदं स्थापयेद्रणे।
१४३। धर्मस्योपनिषत् परा। १४४। जीवेच्च शरदां शतम्।
१४५। सूर्यांशवः शशिनि लब्धपदा यथैव।
१४६। नवनखपदलेखालाञ्छितं बाहुमूलम्।
१४७। बाहुप्रमाणं परिधिरच्छिन्नाग्रोऽतिपल्लवः।
१४८। आधिं प्राप्तो यो न मुह्येत् स धीरः।

१४६। अनुबन्धमवस्थां च ज्ञात्वा दण्डं निपातयेत्।

१५०। सिन्धोः परमपुरुषम्। १५१। आपतन्तमभितोऽरिमपश्यत्।

१५२। व्याप्तं व्योमनि वर्मणा। १५३। चारत्येनः कृतं पूर्वम्।

१५४। गर्भस्थेन समः सदा। १५५। रम्भागर्भमृदुः।

१५६। भर्तृगर्भद्रुहां चैव।

१५७। दुन्दुभ्या किल तत् कृतं पतितया यद्‌द्रौपदी हारिता।

१५८। जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः।

१५९। दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः।
अयातयामन्येतानि नियोज्यानि पुनः पुनः॥

१६०। न शत्रोः प्रत्ययं गच्छेत्। १६१। समयाच्छ्रावयेच्छिष्यम्।

१६२। गुणिनां नात्ययं कुर्यात्। १६३। वाक्पारुष्येऽत्ययः शतम्।

१६४। सर्वस्यैव हि दानस्य ग्रहीता गुरुरुच्यते।
कन्यायाश्चैव विद्यायाः प्रदाता पूज्यते गुरुः॥

१६५। प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जनः।

१६६। वृषाकपायीमभ्येति सत्रपः किं न गोत्रभित्।

१६७। सर्वाः क्रिया मन्त्रमूला नृपाणाम्।

१६८। महापातकिनां पुंसां भवेत् प्राणान्तिका क्रिया।

१६९। गुरुदेवक्रियारतः। १७०। क्रियां विना को हि जानाति कृत्यम्।

१७१। अतो न रोदितव्यं हि क्रिया कार्या प्रयत्नतः।

१७२। विच्छायः पुरुषो भवेत्। १७३। संक्रान्तच्छाय आदर्शः।

१७४। सप्त कक्ष्या अतिक्रम्य।

१७५। परिधानाद्बहिः कक्ष्या निबद्धा ह्यासुरी भवेत्।

१७६। तानि कृत्याहतानीव। १७७। वारं वारमुदारसङ्करमुखे।

१७८। सङ्करो विक्रियाकरः। १७९। अन्योन्यं वृत्तसङ्करौ।

१८०। सङ्करे शरणं सुहृत्।

१८१। आडम्बराणि पूज्यन्ते स्त्रीषु राजकुलेषु च।

१८२। वरं कूपशताद्वापी। १८३। मात्राशी सर्वकालं स्यात्।

१८४। चतुःपीठमिदं तन्त्रम्। १८५। साधारणं भवेत्तन्त्रम्।

१८६। दुष्करं पुष्करं गन्तुम्। १८७। पर्वतान्तरिताः स्त्रियः।

१८८। अन्तरङ्गो भव सदा धनस्य च जनस्य च।

१८९। अयमभ्यन्तरो मम।

१९०। प्रश्नश्चोद्यधिया पृच्छा तस्य भञ्जनमुत्तरम्।

१९१। शीलधनः साधुः।

१९२। षड्युग्मकस्तलस्तालो वितस्तिः शङ्कुराननम्।

१९३। न केवलं भुवो भर्ता।

१९४। भिक्षित्वाऽपि बुभुक्षिता यदेहा। १९५। भावालसा विलासिन्यः।

१९६। स्वं भावं भावयेद्योगी।

१९७। वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन व्यवस्थितः॥

१९८। हृदि स्वमवलोकयन्। १९९। उत्क्रान्तसत्त्वो मृगः।

२००। त्यक्तापदेशो यतिः।

२०१। अग्रतो बाहुपाशेन केशपाशेन पृष्ठतः।
पार्श्वयोः कर्णपाशेन सर्वतो बन्धनं प्रिये॥

२०२। त्व[म]द्दन्ताङ्कितपाणिकक्षरुधिरक्लिन्नाग्रपुङ्खं शरम्।

२०३। चतस्रः कर्षूः पितृभ्यः कुर्यात्। २०४। रसस्यातिरसः सर्पिः।

२०५। रौद्रोरन्ध्रमजिह्वदत्। २०६। उपष्टम्भकं चलं च रजः।

२०७। युक्तश्छन्दांस्यधीयीत। २०८। सर्वान् गुणानेष गुणोऽतिभाति।

२०९। सक्तुधुवानो गीर्वाणाः। २१०। आराच्छत्रोः सदा वसेत्।

२११। संप्रीतान् स्थापयेद्दारात्।

२१२। बत वितरत तोयं तोयवाहा नितान्तम्।

२१३। नाना नारीं निष्फला लोकयात्रा।

२१४। ननु चण्डि प्रसीद मे।

२१५। आशीविषो वा संक्रुद्धः सूर्यो वाऽभ्रविनिर्गतः।
भीमोऽन्तको वा समरे गदापाणिरदृश्यत॥

२१६। सामिसंमीलिताक्षी। २१७। नूनं हन्तास्मि रावणम्।

२१८। जोषमास्ते जितेन्द्रियः। २१९। को नामायं सवितुरुदयः।

२२०। दष्टेऽधरे रादिति नाम तन्वी। २२१। स्वर्गतस्य ह्यपुत्रस्य।

२२५। अहह प्रज्ञाप्रकर्षो राज्ञः।

२२६। चिराय निर्धनो भूत्वा भवत्यह्न महाधनः।

२२७। कान्तं [ कान्तां ] मुहुर्ध्यायति।

२२८। पुनः पुनर्वारि पिबेद्भूरि। २२९। शश्वद्वक्ति कुशिक्षितः।

२३०। अभीक्ष्णमास्फालयतीभकुम्भम्।

२३१। स्राक् सरत्यभिसारिका।

२३२। सपदि प्रदहत्युपेक्षितोऽग्निः।

२३३। द्राग् विद्रुतं कातरैः। २३४। तरसोदिता सह जलेषु।

२३५। किमुत ब्रह्मविन्निभिः। २३६। सुसिक्तमाम्रः फलति।

२३७। विना वातं विना वर्षं विद्युत्प्रपतनं विना।
विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ॥

२३८। त्वामन्तरा तामरसायताक्षि।

२३९। वितर गिरमुदारां येन मूकाः पिकाः स्युः।

२४०। पद्भ्यां याति कुतश्चन।

२४१। कदाचित्क्रूरतां याति मरणे कृतनिश्चयः।

२४२। सत्रा कलत्रैर्गार्हस्थ्यम्। २४३। सङ्गो द्विजिह्वैः सह।

२४४। प्राध्वं कुरुध्वं बुधाः। २४५। मुग्धे मुधा ताम्यसि।

२४६। उताहोस्विद्धरेद्राजा नलः परपुरञ्जयः।

२४७। एकमेव वरं पुंसामुत राज्यमुताऽऽश्रमः।

२४८। आख्यामि तु तत्त्वं ते।

२४९। न हि न हि महिमानं प्राप्य तुष्यन्ति भूपाः।

# संस्कृत-साहित्यपरिषदोऽष्टादशवर्षीयमधिवेशनम्

सुनिष्पन्नं संस्कृतसाहित्यपरिषदोऽष्टादशवर्षीयमधिवेशनं व्यतीते सौराश्विनस्य विंशदिवसे। सभामण्डपः 'इउनिभार्सिटि इन्ष्टिटिउट्' इत्याख्यस्थाने कल्पितः। अस्य चाधिवेशनस्य सुसम्पादनविधावन्तरोत्पद्यमानानपि प्रतिकूलव्यवहारनिवहान् समुत्सारयन्त्या भगवदनुकम्पाया अनुपदं प्रथमतस्तेषामेव परिषत्सदस्यानां तदनुवर्त्तिनाञ्च सहृदयानां महानुत्साहः कारणतामधिगच्छति येऽविगणय्य कायक्लेशम् अप्रमाणीकृत्यामूल्यसमयातिवाहनदोषमनवधार्य चावश्यशङ्कनीयामवधीरणाभीतिमनारतमुपस्थाय समनुशीलितैरभिनयैः सुव्यवस्थापितैश्चाधिवेशनकर्मनिवहैर्महोत्सवमिमं सुसम्पादितं व्यदधुः। अतस्तेभ्यः, तेभ्यश्च यथाकालमिहागत्य दर्शकतया महोत्सवं साङ्गं विदधानेभ्यो धन्यवादसहस्रमादावुत्सृजामः।

प्रारिप्सिते सभाकर्मणि प्रथमतस्तावत् परिषदः स्थिरसभापतेर्महामहोपाध्याय-श्रीयुक्त-दुर्गाचरण-साङ्ख्य-वेदान्ततीर्थ-महोदयस्य प्रस्तावमवलम्ब्य सहकारिसभापतेः म० म० श्रीयुक्त-शितिकण्ठवाचस्पति-महोदयस्य समर्थनायामुपलब्धायां 'आइ, सि, एस्,' इत्यधिकारवता (मण्डलीयन्यायाधीशेन) बहुमान्यास्पदेन तत्रभवता श्रीमता किरणचन्द्र-दे-महोदयेन सभापतिपदमलमकारि। पाण्डित्याभिजनयोरनुरूपां विनयसम्पदमुपदर्शयद्भिस्तैरादौ तथाविधायामभिरूपभूयिष्ठायां सभायामात्मनः साभापत्येन बिभ्यद्भिरिव विलज्जमानैरिव च स्वल्पेन वचसा स्वाहंकारः परिहृतः।

सभाकार्यप्रारम्भे च परिषत्सम्पादकेन श्रीमता अमरेश्वरठाकुर-वेदान्तशास्त्रिमहोदयेन परिषदः अष्टादशवर्षीयं कार्यविवरणं स्वरचित-संस्कृतभाषामयं वाचितमभूत्। संक्षेपेण सर्वकार्यविवरणगर्भः सुललितः सोऽयं निबन्धः पत्रिकाया अस्याः प्रथमांशे दिदृक्षुभिर्द्रष्टव्यः। ततश्चान्यतमेन सहकारिसम्पादकेन श्रीमता दीनबन्धुसाहित्यशास्त्रिमहोदयेन वङ्गदेशवास्तव्यानामसंस्कृतज्ञानाञ्च सभ्यानां सुखबोधाय विस्तरतो वङ्गभाषया संकलितं परिषदः कार्यविवरणम् कार्यनिर्वाहकसमितेः

संस्कृत-साहित्य-परिषद्ः १३४१-वङ्गाब्दीय-

## कार्यपरिचालकाः

### सभापतिः

महामहोपाध्याय-श्रीयुक्तदुर्गाचरण-सांख्यवेदान्ततीर्थः

### सहकारि-सभापतयः

१। महामहोपाध्याय-श्रीयुक्त-अनन्तकृष्णशास्त्री
२। महामहोपाध्याय-श्रीयुक्त-शितिकण्ठ-वाचस्पतिः
३। महामहोपाध्याय-श्रीयुक्त-कुञ्जविहारी तर्कसिद्धान्तः।
४। डक्टर-श्रीयुक्त-आदित्यनाथमुखोपाध्यायः एम्,ए,पि,एइच,डि
५। पण्डित-श्रीयुक्त-द्वारिकानाथःन्यायशास्त्री
६। पण्डित-श्रीयुक्त-सीतानाथ-सिद्धान्तवागीशश्च

### सम्पादकौ

१। श्रीयुक्त-अमरेश्वर-ठाकुर-वेदान्तशास्त्री, एम्, ए,पि,एइच,डि
२। श्रीयुत्त-यतीन्द्रनाथ वसुजः एम् ए, एम्,एल,सि,च।

### सहकारि-सम्पादकाः

१। पण्डित-श्रीयुक्त-दीनबन्धु-साहित्यशास्त्री
२। ,, ,, रसमयचट्टोपाध्यायः एम्, ए
३। ,, ,, रामकृष्ण-चक्रवर्त्ती एम्, ए
४। ,, ,, अशोकनाथ-भट्टाचार्य-वेदान्ततीर्थः एम्,ए,च

---

## कार्यनिर्वाहकसमितेरन्ये सदस्याः

१। पण्डित-श्रीयुक्त-जगदीशचन्द्र-वेदव्यासः
२। „ „ जगन्मोहन-ज्योतिर्विनोदः
३। „ „ वामापद-विद्यारत्नः
४। „ „ दक्षिणाचरण-भट्टाचार्यः, एम्,ए
५। „ „ जानकीनाथ-साहित्यशास्त्री
६। „ „ कालीपद-तर्काचार्यः
७। „ „ वामाचरण-काव्यतीर्थः
८। „ „ चिन्ताहरण-चक्रवर्त्ती काव्यतीर्थः एम्,ए
९। „ „ योगीन्द्रमोहन-विद्यारत्नः
१०। „ „ दक्षिणाचरण-भट्टाचार्यः
११। कविराज-श्रीयुक्त-वसन्तकुमार-राय-विद्यारत्नः
*१२। पण्डित-श्रीयुक्त-भुवनमोहन-सांख्यतीर्थः
१३। श्रीयुक्त-जगमोहन-वसुजः, वि एल् ( काउन्सिलर )
१४। श्रीयुक्त-राजेन्द्रनारायण-वन्द्योपाध्यायः,वि,एल(काउन्सिलर)
१५। पण्डित-श्रीयुक्त-दुर्गामोहन-काव्यसांख्यपुराणतीर्थः, एम्,ए
१६। „ „ कालीपदव्याकरणतीर्थः
१७। „ „ क्षितीशचन्द्र-चट्टोपाध्यायः, एम्, ए
१८। श्रीयुक्त-भूपतिरायचतुर्धुरीणकाव्यतीर्थः
१९। „ सुनीतिकुमार-चट्टोपाध्यायः एम्, ए, डि, लिट्
२०। पण्डित-श्रीयुक्त-चिन्तामणिसाहित्याचार्यः
२१। „ „ वनमालिवेदान्ततीर्थः, एम्, ए
२२। श्रीयुक्त-क्षितीशचन्द्र-चक्रवर्त्ती, एम्,ए,वि एल
२३। „ „ उपेन्द्रमोहन-सांख्यतीर्थः
२४। श्रीयुक्त-ब्रजेन्द्रकिशोर-भट्टाचार्यः

---

* व्यतीते सौरकार्त्तिके पण्डितप्रकाण्डोऽयं लोकान्तरं प्रस्थितः।

२५। पण्डित-श्रीयुक्त-चण्डीचरण-तर्कतीर्थः
२६। ,, ,, भवविभूति-विद्याभूषणः, एम्, ए,
२७। श्रीयुक्त-उपेन्द्रनाथ-घोषालः, एम, ए, पि- एइच् डि,
२८। ,,उमेशचन्द्र-भट्टाचार्यः, एम् ए,
२९। ,, रमाप्रसाद-मुखोपाध्यायः एम्, ए, बि, एल्
३०। ,, दामोदर-दास-खान्ना
३१। पण्डित-श्रीयुक्त-विमलानन्द-तर्कतीर्थः
३२। ,, प्रबोधचन्द्र दे आइ, सि, एस् सिद्धान्त-सिन्धुः
३३। श्रीयुक्त-प्रबोधकुमार-दासः एम्, ए, बि, एल् च

## विभागीय-कर्मपरिचालकाः

### पत्रिकासम्पादकः

पण्डित-श्रीयुक्त-क्षितीशचन्द्र-चट्टोपाध्यायः, एम, ए,

### पत्रिका-सहकारि-सम्पादकः

पण्डित-श्रीयुक्त-उपेन्द्रमोहन-सांख्यतीर्थः

### ग्रन्थाध्यक्षः

पण्डित-श्रीयुक्त-जानकीनाथ-साहित्यशास्त्री

### आचार्यः

पण्डित-श्रीयुक्त-सीतानाथ-सिद्धान्तवागीशः

### नाट्यसम्पादकौ

पण्डित-श्रीयुक्त-जगन्मोहन-ज्योतिर्विनोदः
,, ,, वामापद- विद्यारत्नश्च

## नाट्य-सहकारि-सम्पादकाः

श्रीयुक्त-क्षेत्रनाथ-विद्यारत्नः

„ कार्त्तिकचन्द्र-चक्रवर्त्ती

„ व्रजेन्द्रकिशोर-भट्टाचार्यश्च

## सङ्गीताचार्यः

श्रीयुक्त-सतीशचन्द्रदत्तजः

## आय-व्यय-लिपिरक्षकः

पण्डित-श्रीयुक्त-रामकृष्ण-चक्रवर्त्ती, एम. ए.

## आय-व्यय-लिपिपरीक्षकः

श्रीयुक्त-मलयकुमार-देवः, बि. एस्-सि, जि. डि. ए,

## गृहनिर्माणसमितेः सदस्याः

१। श्रीयुक्त-प्रबोधचन्द्र-दे, आइ सि एस्, ( सभापतिः )

२। म० म० श्रीयुक्तकुञ्जविहारि-तर्कसिद्धान्तः

३। श्रीयुक्त-रसमय-चट्टोपाध्यायः एम्, ए,

४। „ अशोकनाथ-वेदान्ततीर्थः एम्, ए,

५। „ प्रबोधकुमार-दासः एम्, ए,

६। „ दीनबन्धु-साहित्यशास्त्री

७। „ वामाचरण-काव्यतीर्थः

८। „ क्षितीशचन्द्र-चक्रवर्त्ती, एम्, ए, बि, एल्

९। अमरेश्वर-ठाकुर-वेदान्तशास्त्री, एम्-ए, पि-एइच्, डि,

---

संस्कृत-साहित्य-परिषदः अष्टादशवर्षस्य ( १३४० वङ्गाब्दस्य )

आय-व्यय-निष्कर्षः

## (१) साधारणकोषः

| आयः | | व्ययः | |
|---|---|---|---|
| गतवर्षस्य व्ययावशिष्टः | | पत्रिकार्थम् ... | १०८६≡१५ |
| सेविंस व्याङ्कागारे | | पुस्तकालयार्थम् ... | ८६६) |
| (पोः आः+व्याङ्क) | ३५६\|\|\|=१० | पुस्तकप्रकाशार्थम् ... | २५\|\|≡० |
| हस्ते ... | ३=१० | सभाभिनयाद्यर्थम् ... | ३३०=१० |
| ष्ट्याम्प ... | २\|\|≡१० | शिक्षाविभागार्थम्* | ६१≡१५ |
| अग्रिमादिः ... | २४)१५ | गृहभाटकाद्यर्थम् ... | ७४३\|\|\|=० |
| वृत्तिरूपेण प्राप्तः— | | वर्तनाद्यर्थम् ... | ४८५\|\|-५ |
| ( कलकत्तातः ) | १४३४\|\|\|० | गृहोपकरणाद्यर्थम्... | २०)१५ |
| ,, ( स्थानान्तरात् ) | ४३१\|० | स्मृतिरक्षार्थम् ... | १४५ |
| सामयिक-दानरूपेण— | | सारस्वतपरीक्षार्थम्— | |
| दातृभ्यः ... | १२८) | ( वर्षद्वये ) ... | ४६\|\|\|-५ |
| गवर्णमेण्ट-सकाशात् | | | |
| ( १९३३-३४ ) | ५००) | पाथेयार्थम् ... | ४३\|१५ |
| कर्पोरेशन-सकाशात् | | पत्रादि-शुल्कपत्रार्थम् | २३\|=१० |
| ( १९३२-३३ ) | ८००\| | वि. पि. शुल्कपत्रार्थम् | २८≡१० |
| पुस्तकादि-विक्रयात् | १६३=१० | विविध-विषयार्थम्... | २८\|\|० |
| प्रावेशिक-रूपेण ... | २\|\|० | | |
| वि. पि. शुल्कपत्रात् | २३≡१० | | ४८३४≡५ |
| कुसीदरूपेण ( सेविंस- | | उद्वृत्तः | |
| व्याङ्कागारात् ) | १२०\|\|=० | ष्ट्याम्प ... | ११\|\|-१५ |
| अन्यतः ... | १२\|\|१० | प्राप्तः ( अग्रिमादिः ) | १०\|-५ |
| गृहीतम् (ग्रन्थागारकोषतः) | १३२\|५ | हस्ते ... | १७६\|=० |
| | ४१३५=० | | ४१३५=० |

वर्षेऽस्मिन प्रदेयोऽध्यापकपुरस्कार आगामिनि वर्षे दास्यते।

## ( २ ) गृहकोषः

( १३४० बङ्गाब्दे )

गतवर्षस्य व्ययावशेषितः

( १९४५-५५ )

| | |
|---|---|
| गवर्णमेण्ट-लोनपत्रे | १०००) |
| क्याश सार्टिफिकेट-पत्रद्वये | १५००। |
| | २५००) |

वर्षेऽस्मिन् आय-व्ययाभावात्

तदेवोद्वृत्तम् ।

उद्वृत्तस्य विवरणम्

| | |
|---|---|
| पूर्वोक्ते गवर्णमेण्टलोन पत्रे- | १०००) |
| क्याश-सार्टिफिकेटपत्रद्वये | १५००) |
| | २५००) |

## (३) ग्रन्थालय-कोषः

( १३४० बङ्गाब्दे )

| | |
|---|---|
| गतवर्षस्य प्रत्यर्पणावशेषितः | ३६६) |
| १३४० बङ्गाब्दे न्यासरूपेण प्राप्तः ... | ८४॥० |
| | ४५०॥० |

आय-व्यय-लिपिरक्षकः

श्रीरामकृष्ण-चक्रवर्त्ती

आय-व्यय-लिपिपरीक्षकः

श्रीमलयकुमार-देवः

| | |
|---|---|
| | ४५०॥) |
| १३४० बङ्गाब्दे प्रत्यर्पितः | ६०) |
| अतिरिच्यमानः | ३९०॥० |

सेण्ट्रालः-याङ्क आगारे पो० आ० सेविंस व्याङ्क आगारे च वर्तते ।

१३४० बङ्गाब्दावसाने

## परिषदः साधारण-कोषस्य

ऋणम्

| | | | | |
|---|---|---|---|---|
| १३३३ बङ्गाब्दे गृहकोषाद् गृहीतम् | | | ... | ७८॥० |
| १३३४ | ,, | ,, | ... | ७७५) |
| १३३६ | ,, | ,, | ... | १०२५। |
| १३३७ | ,, | ,, | ... | १०००। |
| १३३८ | ,, | ,, | ... | १२५। |
| | | | | २००३॥० |
| १३३८ बङ्गाब्दे ऋण-प्रत्यर्पम् | | | ... | ७७५। |
| | | | | २२२८॥० |
| १३३९ बङ्गाब्दे गृहकोषाद् गृहीतम् | | | | १०८७॥० |
| | | | | ३३१६। |

सम्पादकौ

श्रीअमरेश्वर-ठाकुरः

श्रीयतीन्द्रनाथ-वसुजश्च

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| December 1934. | १८५६ शकीये अग्रहायणे<br>१७श-वर्षस्य ८म-संख्या | Vol. XVII No. 8 |
|---|---|---|

## डिम्भसंबोधनम्*

[ निवन्धकः—श्रीमहालिङ्ग-शास्त्री ]

चौर्याभिसरणमुख्या-
न्यच्युतचरितानि निन्द्यानि ।
यस्मादभिनन्द्यन्ते
डिम्भत्वं जयति तद्धि निरवद्यम् ॥१॥

लोष्टककाञ्चनसमदृक्
सङ्कल्पाभावनिश्चिन्तः ।
अविहितकार्याकार्यः
स्वात्मनि रममाण इव सुखी डिम्भः २॥॥

अनवगतं ह्यवनिगतं
तुल्यं हसितं हिताहितयोः ।
रागद्वेषविहीनं
विलोभनीयं हि डिम्भ तव चरितम् ॥३॥

अविरतसंस्पन्देष्व-
प्यविदितसुखसङ्क्लेशेषु ।
कुम्भेष्विन्द्रियनिचयं-
र्मिथ्यायस्तेषु मुग्धलोकेषु ॥४॥

धन्योऽसि डिम्भ धन्योऽ-
स्येको नित्यं धृताह्लादः ।
शान्तं मनस्त्वदीयं
वस्तुष्वाहार्यभावशून्यत्वात् ॥५॥

अतिलोभनीयरमणी-
बाहुलताबन्ध-बन्धनयोः ।
अविशेषप्रतिपत्ति-
र्निराकुलो भवसि सर्वतस्तुल्यः ॥६॥

स्मयमानवदनकमल-
श्चेष्टमानं फणिनमुत्पाणि ।
अतिमानमुच्छ्वसन्तं
बहुमानात्त्वं ग्रहीतुमभिपतसि ॥७॥

न व्यतिषजन्ति दोषा-
स्त्वयि भूयस्ते गुणायन्ते ।
भस्मभिरेवोद्धूतः
शुद्ध्यति मुकुरो विशेषेण ॥८॥

अविदितहेतुस्मितकल-
मनपेक्षितसत्क्रियारम्भम् ।
निम्नोन्नतानभिज्ञं
चित्रं तव किमपि चेष्टितं डिम्भ ॥९॥

हस्तोद्यतकरवालं
हन्तुं त्वामाहरन्तमपि ।

कुरुषे सपदि कृपाकुल-
　　मकाण्डहसितेन मुग्धवदनेन ॥१०॥
स्वयमुपनतमुपभुङ्क्षे
　　स्वयमखिलैरादृतो भवसि ।
निर्वृतिभाजो यत्नै-
　　रिति वादस्त्वयि तु सापवाद इव ॥११॥
अङ्गानि पङ्कमलिना-
　　न्यगृहीताच्छादनान्यपि ते ।
का लज्जा च जुगुप्सा
　　का भीतिः का च चरसि निश्शङ्कः ॥१२॥
अक्षुण्णं रेखाभिः
　　सङ्कल्पभवै(?)र्मनःफलकम् ।
जानीमस्तव डिम्भ
　　स्वयमेवाध्यास्त भगवती शान्तिः ॥१३॥
अविकम्पी धीरमना
　　अपि कामाद्यैर्महावातैः ।
अविषक्तमोहतिमिरः
　　संसृतिपङ्केऽप्यनाविलस्त्वमसि ॥१४॥
त्वयि देवा नियमन्ति
　　त्वयि भूतिस्त्वयि च शर्म परम् ।
छलवृत्तिभिर्भ्रमद्भि-
　　र्दुरवापा निर्वृतिस्त्वयि सा ॥१५॥
आसन्नं वोत्सन्नं
　　यदि वापन्नं च संपन्नम् ।
वस्तु प्रीतिपदं नः
　　प्रवृत्तमनसामनल्पखेदाय ॥१६॥

चोरेभ्यः पिशुनेभ्यो
राज्ञो रिपुतः मनाभिभ्यः ।
आ पुरुहूतात् कृपणात
सत्रासस्तत इतोऽपि बत लोकः ॥१७॥
विधिचक्रपरिभ्रमितो
नैकत्र स्थाप्यते सुचिरम् ।
लोकस्संशयनिहतो
न च स्वतन्त्रो वृथादुरभिमानः ॥१८॥
कान्तासु कनकनिचये-
प्त्तुङ्गदशाविवर्तेपु ।
विबुधानामपि चेतः
क्षीवत्वं व्रजति गाढमवगाढम् ॥१६॥
आजन्मदेहलब्ध-
प्रसराशक्या पृथक्कर्तुम् ।
प्रक्षाल्यतां कथं मा
सांसारिकवासनाऽधुना महती ॥२०॥
अनिरूपितनिष्कर्पः
पूर्वैरपि सूरिभिर्विविधैः ।
बहुकलुपे हृदये मे
प्रतिफलतु कथं नु नैगमस्सारः ॥२१॥
भविनामतथ्यसुखदः
प्रज्ञामभिभूय संरूढः ।
भावो विचित्रवृत्ति-
र्निष्ठां पर्यस्यति क्षणान्मनसः ॥२२॥
मदघूर्णितमतिरभसं
विषयास्वादैषणलोलम् ।

नवसस्यलम्पटर्पभ-
दुर्वारं हृदयमात्मह्रितदूरम् ॥२३॥
उपभुज्योपरतिर्न-
स्तस्मान्न जुगुप्सया घटते ।
मग्नं नोन्मज्जति य-
न्मनस्सुखास्वादरसिकतापङ्के ॥२४॥
निस्सारे विषमगतौ
संसारे मज्जनं तदिह ।
विषयानभिज्ञता नः
परमाशास्या तव स्वनस्सिद्धा ॥२५॥
ज्ञानाभासाभिभवा-
दज्ञानस्वास्थ्यमेव वरम् ।
सङ्गत्यागेऽनीशाः
सक्तिमभूतां तव प्रशंसामः ॥२६॥
नयनानन्दन नन्दन
वयमानन्दाय ते सरणिम् ।
लिप्सामो(?)नैसर्गिक-
निवृत्तिरूपामनन्यपद्याहीः ॥२७॥
आभीरवामनयना-
नयनदलापीतलावण्यम् ।
नन्दालिन्दचरं तत्
स्मरामि किंचिन्महस्सदा डिम्भम् ॥२८॥

इति श्रीमन्महालिङ्गकवेः कृतिषु मणिमालाख्ये गुम्फे प्रथमं
डिम्भसंबोधनं नाम लघुकाव्यं समाप्तम् ॥

# आरव्ययामिनी

(अथैकवाहकस्य त्रयाणामुदासीनानां राजकुमाराणां वग्दादप्रदेशस्थ-रमणीत्रयस्य सदुपन्यासः ।।)

सहर्जादिर्नरपतिं पतिं प्रति कथितजनानामुपन्यासस्य आमूलवर्णनं कारयामास। पुरा आसीन् मनोहरमन्दिरनिकरपरिवेष्टनकरप्रखरविस्तार-प्राचीरविसरसंवेष्टितः निस्तुलितसौधसङ्घातधवलज्योत्स्नामण्डलन्यक्कृत-धवलवलभूषित-सुशोभिततरुसञ्चय–प्रसूनप्रबन्धस्तबकसंराजितमधुकरनिकर-मनोहरगुञ्जनस्वरमोहितमनुजमनोनलिनकुल-सुपक्कफलमकलविलसितकोकिल-कलापलपितसंयुतविश्वम्भरामण्डल-मण्डनप्रकाण्डदोर्दण्डप्रतापपरिपूरितवीर-वरवसतिमन्दिरविद्वज्जनगणनिकेतनविविधयशस्य प्रचन्धसम्भूतिनिदानवग्दा-दप्रदेशमध्ये विशेषविद्यावीर्यविक्रमसंवित्समन्वितभूपालकुलपूजितपादजलज-निखिलाशामण्डलप्रकाशीकृत-कुमुदबान्धवसमनिर्मलज्योत्स्नाजालो हारुणल-रसीदनामधेयो वादशाहः ।।

योऽद्यापि भूमण्डले प्रधानपृथिवीपालनामकीर्त्तिं स्वकीयातुलकीर्त्ति-कलापप्रभावात् लोकप्रबन्धैः कीर्त्तितो भवते ।।

सदा कीर्त्तनं स्यात् समन्तान्मनुष्ये<br>
क्षितौ वित्तवृन्दोऽभवद्यक्ष भूत्वा।<br>
ययौ विक्रमे विक्रमादित्यतुल्यो-<br>
ऽनिशं कीर्त्तनं किं करोम्यस्य भूयः ।।

आसीत्तस्य राज्यानुशासनसमये तत्प्रदेशमध्यस्थितः कोऽप्येको निकृष्टजनो वाहकः। स च वाहकोऽभवद् यद्यपि जघन्यो वरेण्यवारागण्य एवमकरोः? यदि विजालीयकायक्लेशकरः व्यवसायः, तथाऽपि स्वकीयकार्यसम्पादनावशेषे स्वविज्ञातया रसिकतायाश्च कर्तुं प्रकाशनं कदापि क्षान्तियुक्तो नाभवत्। स च वाहकः कस्मिंश्चिद् दिवसे

सातिशयप्रत्युषे दिननाथस्य किञ्चिन्नप्रकाशे स्वकीयसन्निधाने करण्डिकामेकां संस्थाप्यासीद्दण्डायमानो दण्ड इव क.ण्डबलवान्, तस्मिन्नेव समये आसीत् प्रादुर्भूता सातिशयधवलमञ्जुलनिचोलावगुण्ठनवती चामीकररौप्यादिनिर्मित-निर्मलप्रभामण्डलमण्डनसकलस्वाङ्गप्रत्यङ्गधारणवती परममनोहरवेशधरा प्रशस्तचिकुरनिकरा नरविसरमनोहरा कन्दर्पदर्पध्वंसकरा काऽप्येका सुरूपा तरुणी तस्य च वाहकस्य सन्निधाने। यस्याश्च—

नेत्रेणापहृतं कुरङ्गनयनं वक्त्रेण चन्द्रच्छवि-
र्वक्षोजेन सरोजकोरकरुचिर्वर्णैः सुवर्णद्युतिः।
कट्या सिंहकटीप्रभा जघनतो रम्भातरुर्मञ्जुलो
दन्तौघैः किल कुन्दपुष्पसुषमा पादेन पद्मस्य भाः॥

अपि च

मुखं पद्मतुल्यं विभाति ध्रुवं
　　सुनेत्रञ्च भृङ्गप्रभं राजते।
विभान्तीह दन्ता लसत्केसरा
　　गलो भाति तस्या मृणालोपमः।

समये च वाहकसन्निधाने वदति स्म कोकिलकलापिकलापानिन्दित-भाषितवती सा युवती सुमधुरमृदुमृदुवचनेन—हे वाहक, आगच्छ त्वं मम पश्चात् पश्चात् करण्डिकाया विधारणं विधाय। स च वाहकस्तस्या निरुपम-सुषमासमन्वितरमण्या एतादृशसुमधुरव्याहारविसरमाकर्ण्य श्रवणं पीयूष-प्रबन्धेनाभिषिञ्चितकलेवरमिव विविच्य किञ्चिदपि प्रत्युत्तरप्रदानमकृत्वा तत्क्षणमेव करण्डिकायाः स्वकीयोत्तमाङ्गे समुत्तोलनं विधाय एवमेवोन्मत्त-वद् वचनमिदम् अवदन् मुहुर्मुहुः। अहो वर्त्तमानवासरे आसीत् किमनिर्वच-नीयमदीयसौभाग्यसञ्चयोदयः। अहह! मदीयसुप्रभातमेव वर्त्तमान-वासरेऽभवत् संजातम्। यतोऽभवमहमेतादृशरमणीरत्नानुवर्त्तिनी।

समीक्षणे सुन्दरकामिनीनां
सर्वश्च मर्त्यो भविता कृतार्थः।

अयत्नतो मे रमणीक्षणं स्याद्
विशेषतो वाक्श्रवणं भवेन्मे ॥

स च वाहक एवंविधकालेन स्वकीयानन्दसन्दोहपूर्वकमकरोत् पश्चाद्गामी भूत्वा मुहुर्मुहुस्तस्याः समीक्षणं पादादिशीर्षदेशपर्यन्तम्। चिन्तयति च तस्याङ्गप्रत्यंगसमीक्षणं कृत्वा स्वान्तमन्दिरे नितान्तम्। अहो कामिनी-भूषणं रमणीरत्नमिदं निर्मितमासीद् विधातुर्विशिष्टनिविष्टमनसा।

नो चेत् सम्भवेत् किमेवम्भूतनिस्तुलितमनोहरवेशो रमण्याः। अहन्तु बहुप्रदेशे भारवहनं विधाय करोमि विचरणम्। आसीद् बहुतररमणीगण-समीक्षणं कदाऽप्येवंभूताभूतपूर्वमनोसञ्जातविकारकरसुन्दरतररमणीसमी-क्षणं न करोमि।

मनोहरां युवतिमिमां विलोक्य के
विचित्रतां भुवि नितरां वदन्ति नो।
नितम्बिनीं बहुसमयं विलोकितुं
न कुर्वते क इह लसत्सुराः पदम् ॥
न केऽनिशं विदधति तस्य वेधसो।
विनिन्दनं विमलधियो मुहुर्मुहुः।
चकार यो वपुषि बत द्विलोचनं
सुवाञ्छितेक्षणविषयेऽप्यतृप्तितः ॥
अहो तत्र नेत्रेऽपि पक्षद्वयं स्याद्
धरण्यां रमण्यां वरेण्याग्रगण्या।
विभाति प्रभातार्कपद्मा स्मरेयं
* * * *
अमुष्याः प्रियस्यात्र हि स्यादजस्रं
सुभाग्योदयः सर्वथा सर्वलोकात् ॥
कविभिः कथितं चैतत् काव्यानां ग्राम्यलक्षणे
नाल्पेन तपसा लभ्यः सुन्दरस्त्रीसमागमः ॥

परन्तु सा तरुणी तरुणजनमनोमोहिनी हंसीव गमनं विधाय वाहकं

पश्चादुवर्त्तिनं कृत्वा कस्यापि मनोहरभवनस्य सन्निधाने आसीन् समुप-स्थिता। एवञ्चकार सत्वरं तन्मन्दिरद्वारवर्त्तिनि देशे कवाटं रुद्धमालोक्य प्रखरतरकराघातं तेन चाभूदन्तःपुरमध्यभागात् सुदीर्घपक्वश्मश्रुसमन्वितः कोऽप्येकः प्राचीनजनः खेटिकायानः कवाटमोचनं कृत्वा समागतः।

आपक्वकुन्तलकुलं शिरसि प्रभाति
कुष्माण्डवर्णमिव दण्डधरस्य तस्य।
श्मश्रु विभाति वदने किल पट्टसूत्र-
मासंश्च दन्तनिवहाः पतिताः समूलाः ॥१०॥

सा च कामिनी समालोक्य तं स्थविरं किञ्चनापि वचनमनुक्त्वा चकार समर्पणं तस्य करकमले कतिपयमुद्राणाम्। स च स्थविरः पुर्वैव परिज्ञात आसीत् तस्या युवत्या मनोगतनिगूढाभिप्रायम् अतस्तत्क्षणमेव स्वभवनाभि-मुखगमनं कृत्वा कियत्कालविलम्बानन्तरं सुरापूर्णपात्रमेकं सन्धृत्य तस्याः सन्निधाने संस्थापयामास. विलोक्य च तत् सुरापरिपूर्णपात्रं प्रमोदान्विता सा प्रमदा वाहकं प्रति वचनप्रयोगमिममकार्षीत्। अरे वाहक, सत्वरं सुरापात्रमेतत् करण्डिकामध्ये संस्थाप्य कुरु पूर्ववत् मत्पश्चादगामी भूत्वा गमनम्। स च वाहकस्तद्वनितावचनमाकर्ण्य तत्क्षणमेव तदाज्ञासम्पादनं विधाय तद्रमणीपश्चादकार्षीद् गमनं महानन्दसन्दोहसमन्वितः। चकार चिन्तनं चेतसि निगूढभावेन। अहो वर्त्तमानावसरे आसीन्मम किमप्यनिर्वचनीयसुखसमयः। समागताया नितान्तशर्मप्रबन्धेन किंरूपाश्चर्य-प्रमोदप्रवाहस्याभ्युदयः स्यात् तस्य वर्णने नासीन्मे सामर्थ्यं कथमपि।

भारस्य वाहनवशान्न विभाति मेऽस्मिन्
क्लेशस्य लेश इह दारमुखं समीक्ष्य।
पीयूषतुल्यवचनं परितः श्रुतौ मे
पीयूषतुल्यमिव कर्णविलं भवेत ॥११॥

स च वाहकः पूर्ववत् बहुविधं कल्पनं कृत्वा तस्या अनुगमनं करोतिस्म। परन्तु सा कामिनी मृदुमन्दगामिनी निःशङ्कं सञ्चारिणी चकार चंक्रमणं

कस्यामपि पण्यवीथिकायां फलप्रसूनविक्रयकरनरसन्निधाने समेत्य च ददर्श विविधफलपुष्पप्रबन्धान्। चकार सा नितम्बिनी महानन्दपूर्वकं क्रयं खर्जूरद्राक्षादाडिमरसालतालनारिकेलप्रभृतिसर्वदेशप्राप्यफलप्रबन्धं विविधमञ्जुलदलसकलं जातिमालतीबकुलपाटलकमलप्रभृति मनोहर-प्रसूनकलापञ्च। येषाञ्च कुसुमस्तोमानां कान्तगन्धप्रबन्धवशात् कन्दर्पा-विर्भावो निर्विकाराणामपि मानवानां प्रभवेत् निरन्तरम्। परन्तु वाहकं प्रति एतदादेशमकार्षीत् सा सीमन्तिनी—हे वाहक! कुरु करण्डिकामध्ये यत्नपूर्वकमेतेषाम् आमोदकरवस्तुनिकराणां संस्थापनम्। स च चकार तस्या आदेशवशात् तदाचरणमचिरात् अतःपरञ्च परित्यज्य पुष्पादिपण्यशालां चकार प्रयाणं पललकलापविक्रयिपण्यवीथिकायाम्। समये च समालोक्य सद्यश्छिन्नसुन्दरसुस्निग्धविशिष्टलक्षणं महानन्दवृन्दप्रकाश-पूर्वकम् अकार्षीत् क्रयं कतिपयपललखण्डस्य; तस्यापि तद्वाहकमस्तक-स्थितकरण्डिकायामकरोत् संस्थापनं एवमवदद् वाहकं पश्चादागन्तुं सा सीम-न्तिनी। तदनु सा रमणी मनोहरवस्तुनिकरसंग्रहार्थं करोति स्म मुहुर्मुहु-रितस्ततो भ्रमणम्।

मृदुगमनवशात् सा कामिनी पण्यशाला-
स्थितसकलमनोज्ञान् वस्तुसङ्घान् विलोक्य।
निजविलसितवस्तुस्वेक्षणेनेक्षणेन
क्रयमपि कुरुते स्मानन्दवृन्देन युक्ता ॥१२॥

परन्तु कस्यचित् पण्याजीवस्य पण्यशालायां पदार्पणं कृत्वा परिमित-हितफलकलापरसनिर्मितशुष्कपिष्टकस्याकरोत् क्रयम्, एवं तन्निकटस्थिता-परविपणिस्थजनानानाविधविदेशीयफलविशेषसंग्रहपूर्वकं सर्वेषामेव समुचितमूल्यप्रदानं कृत्वा चकार संस्थापनं तद्वाहकमस्तकोपरिस्थित-प्रकाण्डकरण्डिकायाम्। एवमपरपण्याजीवविपणिस्थितविविधमुख-प्रियकरसुमधुररसपरिपूर्णसातिशयोत्तमवस्तुसमस्तं कृत्वा सर्वस्यैव संगृ-हीतं द्रव्यसंघातस्याकार्षीत् परिरक्षणं तद्रक्षकवाहकरक्षणस्थाने करण्डिका-

भिधाने। स च वाहकः स्वकीयकरण्डिकाभाण्डं वस्तुसमस्तैः सम्पूर्णं समीक्ष्य सातिशयकातरताप्रकाशपूर्वकं कथयामास तत्कामिनीसन्निधाने—अयि! मदादेशकारिणि! कामिनि! कुनचूडामणिरमणि, अकार्षीद् भवती बहुतरद्रव्यनिकरसंग्रहं यदि मामधमं प्रति किञ्चिदिङ्गितभाषितेनैतावद् वृत्तानुवर्णनमकरोत् पूर्वं तदा प्रखरतरभारवाहकमेकमश्वतरम् अथवा गर्दभप्रवरं मदीयसमभिव्याहारं कृत्वाऽकरिष्यं समानजनमेतद्गुरुतरभारनिकरधारणान्तरं भवदीयमन्दिरे नेतुं न भवेन्मम क्लेशलेशमात्रमपि। किन्तु विविधविनयं विधाय करोमि निवेदनं भवत्याः सन्निधाने अस्मादधिकतरवस्तुविसरसंग्रहे नो भवेन्मे नेतुं कथमपि सामर्थ्यम्। नितान्तनिःस्वतासमन्वितस्य स्वजठरवैश्वानरनिकरनिवारणार्थं बहुतरायासकरगुरुतरभारवहनजन्यपरिश्रमपारितोषिककियदल्पार्थसंग्रहणेन संसारयात्रानिर्वाहकस्यापि मम त्वकूपललशोणितनिर्मितमेव कलेवरम् एतद्विवेचनं भवत्या सर्वथा विधेयम्।

दीनस्य वाहकगणस्य विशेषदुःखं
भारस्य धारणवशात् परितः समीक्ष्य।
कस्यापि चेतसि भवेन्न च भूमिमध्ये
कारुण्यलेश इति चित्रतमं हि मन्ये॥

वाहकस्य भाषितमाकर्ण्य सा वनिता किञ्चिद् हास्यरससमन्विता किञ्चन वचनं नावदत्। केवलं एतदादेशं तं वाहकं प्रति चकार सत्वरं मम पश्चादागमनं कुरु। परन्तु परितः परिभ्रमणपूर्वकं करोति स्म कस्यचिद् गन्धवणिजः पण्यशालायां पदार्पणम्। सा परमप्रमोदप्रकरप्रकाशं प्रकृत्य समये च तद्भवने तस्मात् पण्याजीवात् लवङ्गजातिफलमरिचार्द्रकादिविविधकलेवरपोषणकरवस्तुनिकरं क्रीत्वा चकारान्यान्यसुगन्धिद्रव्यप्रबन्धकपृष्ठादिस्य क्रयम्। तेनैव च वस्तुसमस्तेनासीत् प्रकाण्डकरण्डिका तूर्णमेव सम्पूर्णरूपेण परिपूर्णा। अन्यस्य कस्यापि वस्तुनः संस्थापने नासीत्

तस्यां स्थानमिति। परन्तु सा कामिनी वाहकं समाहूय कथयामास वचनमिदं हे वाहकप्रवर! विधाय भारग्रहणमागच्छ मया सह। स च वाहकस्तद्वनितावचनावलम्बनं कृत्वा करोति स्म प्रयाणं तस्याः पश्चाद्भागे। तदनु बहुलकालपर्यन्तमर्त्यभ्रमणेन नानाविधनगरमन्दिरविपिनादिकं विहाय आस्तां मनोहरप्रकाण्डदण्डाकारसातिशयो वैस्तरस्तम्भसान्निध्यस्थितमतङ्गजप्रबन्धदन्तवृन्दविनिर्मितस्वच्छस्फटिकवहलन्यक्कृतनिर्मितद्वारमनोरम्यहर्म्यस्यैकस्य सन्निधाने समुपस्थितौ तौ मनोहररमणीवाहकौ। यस्य च मन्दिरस्य मञ्जुलशोभामालोक्य लोका विकलाः सन्तो विविधप्रजाधीश्वरपुरन्दरपुरे अस्ति न वा एतादृशमनोहरमन्दिरमिति परितो विविधवितर्कं कुर्वन्ति। यस्य निर्मलविभामण्डलमालोक्य धवलकलानिधिज्योत्स्नाजालं भवेन्नवा एतन्मञ्जुलशोभासन्निभमिति विवेचयन्ति। यस्य सन्दर्शने चित्रपुत्तलिका इव स्पन्दनशून्या भवन्ति। एवंविधागारद्वारसन्निधाने दण्ड इव दण्डायमाना सा सीमन्तिनी आसीत् कवाटे कराघातं कर्त्तुं प्रवर्त्तमाना। यावत्कालपर्यन्तं तत्पुरद्वारमोचनं नाभवत् तावत् स च वाहको मनोमन्दिरे चकार बहुविधतर्कवितर्कादिकं एवमवदत् किमाश्चर्यकार्यमेतत् परितः परिवीक्ष्यते। एतादृशी मदनमनोमोहनकारिणी रमणी कदापि दास्यकर्मोपयुक्ता नैवेति मन्यते। अहो या राज्ञो राज्ञीसन्निभा सा किं कस्यचिद्दास्यकर्म्मणि शोभनीया सम्भवति। अथात्रैवं तद्भवनाधीश्वरस्य निकाय्यकर्मकरणे प्रवर्त्तिता दृश्यते। किमप्यत्र तस्यानुसन्धानं कर्त्तुं न शक्यते। तदनु तस्या भामिन्या भावभङ्ग्यादिकं समीक्ष्याकार्षीदनुमानमिदं मनोमन्दिरे। इयं योषा रमणीगणभूषा नास्ते यद्यपि स्वाधीना तथाप्यत्र कस्यचिद्दासी नैवेति। असम्भावनीयकार्यं किं कथंकारं भवितुं पार्यते। अपि तु नैव नैवेति। परन्तु चकारोपक्रमं तस्या युवत्या अवस्थाविषयजिज्ञासां कर्त्तुं वाक्यप्रयोगस्य। तस्य वाहकस्य केवलमोष्ठाधरौ प्राप्तौ प्रकम्पितौ। इत्यस्मिन् समये प्रचक्रे समीक्षणं स च वाहकः गृहाभ्यन्तरादपरा मनोहरवेशधरा काऽप्येका कामिनीगणभूषणा

नितान्तकान्तिसंयुता सुन्दरी रमणी सहसा तत्र समागत्य करोति स्म कवाटोद्घाटनम् । यस्याश्च—

हिमांशुतुल्यं वदनं मनोहरं
कुरङ्गनेत्रोपमलोचनद्वयम् ।
विनिन्द्य कुन्दं दशनो विराजते
सुवर्णवर्णोपमविग्रहः परः ॥

यस्याश्च समीक्षणेन नितान्तानिर्वाच्यरूपलावण्यवत्या गुरुतरभारवहनकारकवाहको नितान्तानन्दप्रबन्धरत्नकरशम्बरतरङ्गे निमज्जितो भूत्वाभवद् युगपद् विमोहितः । येनाभूत् तस्येदृशो बोधोदयः—मस्तकस्थकरण्डिकाद्रव्यादिभिः सममासीद् भूतले निपतितः ।

न तस्य श्रमलेशोऽपि रमण्याः परिवीक्षणात् ।
आसीत् सन्तोषसन्दोहैस्तस्य कायः प्रपूरितः ॥

परमुन्मत्तवत् स्वयमेवैतन्निजगाद नाकार्षमहं जीवनकालमध्ये कदापि विलोकनं सम्मुखस्थितसुन्दरीसन्निभरमण्याः । अहो विधात्रा निर्ज्जनस्थानसमासीनेन निर्माणं क्रियते स्मैतद्रमणीरत्नस्य किमाश्चर्यं भूतले चञ्चला चाञ्चल्यभावं परित्यज्य अचला इव अवलेयमवस्थितासीदिति ।

परन्तु पारगामिनी सभाजनमकार्षीत्तं वाहकं समभिव्याहारं विधाय, सा चतुरचूडामणी रमणीगणशिरोमणिः तस्य वाहकस्य भावानुभवमाकृत्य चकार तत्कारणानुमानम् एवं तस्य च वाहकस्य मुखभङ्गिद्वाराऽकार्षीत् तन्मनोऽभिप्रायविषयचिन्तनम् अतो गमनार्थमुद्घाटितकवाटेऽपि च तस्मिन् मनःसंयोगाभावात् ज्ञातुं न शक्यते तत् कवाटोद्घाटितादिकम् ।

एकस्मिन् विषये यस्य मनः स्यादपकर्षितम् ।
विषयेऽन्यत्र कुत्रापि तस्य वृत्तिर्न सम्भवेत् ॥१६॥

परन्तु अभ्यन्तरादागता कामिनी अवन्त्यामागतवतीं युवतीं प्रति—अयि ! सखि बहिर्देशे दण्डायमाना भूत्वा कस्यापेक्षां कुरुषे ? सत्वरमभ्यन्तरे

प्रयाणम्। किं न पश्यसि वाहको गुरुतरभारवहनजन्यातिशयपरिश्रमयुतो भवति। साम्प्रतं सोढुं न शक्यत इव मन्यते।

स्वेदप्रबन्धेन शरीरमस्या-
भिषिक्तकल्पं प्रभवेदिदानीम्।
आरक्तनेत्रं वदनञ्च शुष्कं
सुदीर्घनिःश्वासवियोजनं स्यात् ॥१७॥

सा च समागतवती युवती तस्या द्वारपालिकायाः समाकर्ण्य एतादृश-भाषितविसरं चकिता भूत्वा अभ्यन्तरे भवति स्म प्रविष्टा। वाहकोऽपि तत्पश्चात् आसीत् सङ्कुलः। एवं समागता अबलाऽपि पुनर्द्वारन्ध्रं विधाय तयाः सहैव आसीत् प्रयाता; परन्तु ते योषे द्वे वाहकश्चेति त्रिसम्मित-जना एकस्यांगनस्य मध्यभागेन गमनं कृत्वा चतुर्दिक्षु कुटीरोपरितः बहि-र्द्वारप्रकोष्ठैः सुशोभितं किमप्येकं सभामन्दिरं संलक्ष्य प्रवेशयामासुः। तस्य च सभाभवनस्यैकभागे चन्दनकाष्ठनिर्मितं कृष्णवर्णेन सुनिर्माणं स्तम्भचतु-ष्टयोपरि संस्थापितं बृहदाकारं चमत्कारकरं हीरकमणिमुक्तादिभिः खचितं सुवर्णमण्डितं रक्तवर्णसुविचित्रबहुमूल्याच्छादनेन समाच्छादितम् एकं मनोहरं प्रकाण्डसिंहासनमासीद् विराजितम्। एवं तन्मध्यस्थितशुभ्रवर्णप्रस्तरस्यैकं बृहत्पात्रमभवद् भास्वरम्। तदुपरि संस्थापितधातुनिर्मितसुशोभनस्यै-कस्य सिंहस्य प्रतिमूर्त्तिरासीत् समवस्थिता। तस्मादजस्रमभवत् कीलाल-धारापतनम्। एतेषामाश्चर्यसुषमाविलोकने न कस्य चेतः समुल्लसति? न कस्यानन्दवृन्दस्योदयो भवति? न कस्य नयनद्वयस्य निष्पन्दत्वं भवति? न कस्य विमोहितजनवद्भावो भवति? यद्यप्यासीद् वाहको गुरुतरभारवहन-जन्यनितान्तपरिश्रमसमन्वितः तथापि तस्य सौधशिखरस्य मनोहरसुषमां परितः परिलोक्य एवं मञ्जुलद्रव्यादेः शोभासमीक्षणेन तस्य परमानन्द-सन्दोहस्य समभ्युदयः प्रादुरासीत्। विशेषतस्तु तत्सिंहासनाधीश्वरस्य परमसुन्दरीं रमणीशिरोमणिं कामिनीं समीक्ष्य तस्य तस्यानिर्वाच्यरूप-

लावण्यसन्दोहेन तस्य वाहकस्य स्वान्तकन्दरं महानन्दसम्बरेण पूरितमासीत् परितः। यस्याश्च—

नेत्रं पद्मदलायते सुवदनं चन्द्रायते योषितो
वक्षोजः कलिकायते श्रुतियुगं गृध्रस्य कर्णायते।
भ्रूयुग्मञ्च शरायते कचकुलं कृष्णाभ्रतुल्यायते
दन्तः कुन्दसमायते क्षितितलेऽप्योष्ठः सुबिम्बायते ॥१८॥
श्रोणिः सिंहकटायते सुनयनापाणिर्मृणालायते
पादः पद्मनिभायतेऽपि च सदा वर्णः सुवर्णायते।
तामालोक्य नितम्बिनीं स च महाश्रान्त्यन्वितो वाहको
दुःखं मोक्षमिव प्रतन्यत इदं मन्ये च तद्वृत्ततः ॥१९॥

* * * *

नितम्बिनीवदनरुचिं विलोक्य सः।
सुखप्रबन्धयुत इवाबभूव भोः
निमेषशून्यलोचनतो मुखं मुहुः ॥

सा च सिंहासनासीना तरुणी ते च समागतवत्यौ युवत्यौ समीक्ष्य तन्निम्नदेशेऽवतरणं विधाय सन्देहाभावतयैव चकार संज्ञानम्। सिंहासनासीना कामिनी आसां प्रधानमेव। वस्तुत एव सा गृहाधीश्वर्येव, अपरे चावले द्वे तस्या अनुचर्यावास्ताम्। प्रधानाङ्गनाया आसीत् 'जोवादी'त्यभिधानं या च द्वारमोचनमकार्षीत् तस्या नामधेयं सफीति एवं या चाहारीयद्रव्यप्रबन्धनयनार्थं चकार गमनं तस्या अभिधानमामिनीति सा च भवनाधीश्वरी जोवादी सहचरीद्वयस्य प्रविधाय सम्बोधनं प्रत्यवादीत् भावितमिदम्। अयि, सख्यौ गुरुतरभारवहनजन्यः अभवन्नितान्तपरिश्रमः। पश्यतां पश्यतां मुखं मसीवर्णमभूत्। स्वेदसन्दोहप्रबन्धेन कलेवरमासीदभिषिक्तम्। अभवदारक्तवर्णं लोचनद्वयम्, धमन्यासीत् स्फीता। अस्य मस्तकादविलम्बितं भाराहरणं कृत्वा यथोचितमुद्रार्पणेन कथं नाकुलतां विदायम्।

दुःखिनो दुःखसंघं यो संज्ञायापि निरीक्षते ।
शक्तो मोचयितुं किं स प्रमात्यो जनसञ्चये ॥

तस्या जोवाद्या एवंविधभाषितसङ्केतेन सा आमिनी सखी च त्वरान्विता भूत्वा वाहकस्य मस्तकस्थितभारावतारणार्थं ते द्वे कामिन्यो स्वस्वहस्तप्रसारणं विधाय करण्डिकाया उभयपार्श्वे प्रचक्रतुः सन्धारणम् । एवं जोवाद्यपि तयोः साहाय्यार्थमकार्षीद् धारणम् । इत्थञ्च पेलवपाणिपल्लवसञ्चालनेन त्रिमितास्तद्रमण्यः तस्य वाहकस्य मस्तकादकुर्वन् सहसा भारावतारणं निम्नप्रदेशे । परन्तु ताः सकला एव मञ्जुलरूपलावण्यवत्यो युवत्यः किञ्चित् किञ्चित् कृत्वा कुर्वन्ति स्म द्रव्यप्रबन्धसमुत्तोलनं एवं कुर्वते स्म यथास्थाने संस्थापनम् । परन्तु आमिनी स्वकीयकरकमलस्थितमुद्राधारात्मुद्रावहिष्कृतं विधाय चकार वाहककरे समर्पणम् तस्य गुरुतरभारवहनस्य भृतिकस्वरूपम् । स च वाहको यत्मुद्राप्रापणमकार्षीत् तेनैव महासन्तुष्टो भूत्वा स्वकीयकरण्डिकां करकमले सन्धृत्य चकार स्वस्थानाभिमुखे प्रस्थानोद्योगं किन्तु तत्रिमितयुवतीः प्रति पूर्ववद् दृष्टिपातपूर्वकपर्यवलोकने तस्य वाहकस्य स्वान्तमध्ये किमेकानिर्वाच्यभावस्योदयोऽभूत् । येन द्वित्रिमितपादचालनमाशु कृत्वा पुनर्गमने तस्य वासना नैव बभूव ।

अनिर्वाच्यरूपं मुहुर्वाहको विलोक्य अतिहर्षान्वितो भूत्वा तदा-
परित्यज्य तूर्णं गतिं सुस्थिरः पुनस्तत्र तस्थौ महाचिन्तितः ॥२२॥

विशेषस्त्वामिन्येतावत्कालपर्यन्तमासीदवगुण्ठनवती परं ताभ्यां सन्दर्शने गृहागमनान्तरं मुखावरणवसनोत्तोलने वाहकस्तामप्यामिनीं तद्भवनस्थितद्विमितांगनायाः समां मनोहररूपवतीं परितः परिवीक्ष्य प्रायः आसीद् विमोहितः अधिकन्तु तन्मनोहरमन्दिरमध्ये एकमात्रपुरुषो नैव विराजते स्म । केवलं तत्रिमितरमणीरत्नमात्रमेव विलसति स्म । तन्निदानजिज्ञासाजन्यञ्च तस्य वाहकस्य चेतस्यत्यौत्सुक्यमासीत् सञ्जातम् । अत्र एवासीत सुगतिक्रियायां विरतः स वाहकः । एवं चेतस्यनेन करोति स्म च तर्कवितर्कभावम् । इयमामिनी कामिनीशिरोमणिः कपर्दि शुष्कफल-

पिष्टकमिष्टान्नादिकस्य चकार समानयनम् । तत्तावद्द्रव्यसन्दोह एवातिरिक्त-मद्यपानकारकाणां नृत्यगीतादिविधायकानाञ्च प्रियतमो यथोपयुक्तश्च ।*

इत्याख्ययामिन्यां सहरोयारसहर्ज्जादिसंवादे वग्दादस्थितरमणीत्रयसहितं वाहकस्य सन्दर्शनं नाम एकविंशतितमः सर्गः ।

# मेघनादवधम्

[ निबन्धकः—श्रीनित्यगोपाल विद्याविनोदः । ]

( पूर्वतोऽनुवृत्तम् )

## नवमः सर्गः

प्रेमोद्याने पतिविरहिणी कातराऽश्रुप्रसिक्ता
पुष्पारण्ये दनुजकुलजा पर्यटन्ती प्रमीला ।
वृन्दारण्ये पुलिनभवने सूर्य्यजायाः स्वकान्त-
मप्रेक्ष्यार्त्ता पशुपदुहिता दुःखितेवाऽऽरुरोद ॥१॥

कञ्चित् कालं निजगृहवरे यापयित्वाथ कञ्चित्
स्थित्वा बाह्ये विरहविधुरा शून्यनीडे कपोती ।
यादृक् तादृक् श्रितगृहशिराश्चञ्चला दैत्यबाला
प्रेक्षाञ्चक्रेऽनिमिषनयनं दूरसंस्थाञ्च लङ्कां ॥२॥

भूयो भूयो नयनसलिलं मार्जयन्तीं स्ववस्त्र-
प्रान्तेनैनां विरहमथितां वीक्ष्य सख्यो विषेदुः ।
वीणावंशीप्रभृतिनिखिलं वाद्यभाण्डञ्च मूकं
तस्थौ शोकाहतमिव सहावस्थितायाः स्वजन्याः ॥३॥

शोकाच्छन्नं सकलभवनं पञ्जरस्था विहङ्गा-
मूकाश्चासन् घनवृतमिवाकाशमानन्दतिथ्याम् ।
काले ग्रीष्मे मधुविरहिता काननाली सुतप्ता
भ्रष्टश्रीका विगतकुसुमा केन नालोक्यतेऽस्मिन् ॥४॥

---

*वाचकानां रीतिविचारसौकर्य्यार्थं लेखोऽयं प्रायेण यथावदेव मुद्रापितः ।

प्रीत्युद्याने विधुसहचरी रात्रिरागात्तदैव
तां दृष्ट्वार्त्ता मृदुमधुवचः प्राह साध्वी प्रमीला ।
वासन्त्याः सा धृतगलतटा दिक्षु गन्धं किरन्त्याः
पूर्णां सर्वां हरितमकरोद्रोदनैर्दीर्णकर्णैः ॥५॥
पश्यैतां त्वं तिमिररजनीं कालसर्पीव भीमा
यायात्येनां लघु लघुपदा दंष्टुकामाऽतिघोरा ।
कुत्रास्ते मे प्रियतमसखो मेघनादो जितेन्द्रो
यो रक्षेन्मां विषमविपदः सत्वरं सङ्गदानात् ॥६॥
इन्द्रारिः स द्रुतमहमयि ! प्राणकान्ते पुनस्त्वा-
मायामीति प्रकृतशपथः प्रस्थितः प्राणकान्तः ।
नाहं जाने प्रियसखि कुतस्तस्य कालातिपातो
वेत्सि त्वच्चेद् वद मम कथं नागतो जीवितेशः ॥७॥
वासन्ती साऽवददतिमधुव्याहृतिः कोकिलेव
काले पुष्पोद्गमसुखकरे केन ते प्राणबन्धुः ।
नायात्यालीत्यहमनुमिता चेतसा भर्त्तृभक्ते
निश्चिन्तैधि त्वरितमनघे प्राप्स्यसीष्टं प्रियं ते ॥८॥
मा भैषीस्त्वं द्रुतमिह समागंस्यते ते प्रियेण
हत्वा शत्रूंस्तु तुमुलसमरे राघवं वीरसिंहम् ।
का भीतिस्ते दृढतनुवरो यस्य भेद्यो न बाणै-
र्युद्धे देवासुरगणकृते तस्य के धन्विनोऽन्ये ॥९॥
कुञ्जं गेहं चल लघु लघु ग्रन्थितुं पुष्पमाल्यं
प्रेम्णा कण्ठे तव हृदिशयस्याङ्क दोदुल्यमानम् ।
कर्त्तुं हासच्छुरितवदनं तद् यथानन्दमत्तो
लोको धत्ते विजयिनि रथे केतनं जिष्णु कम्प्रम् ॥१०॥
उत्कूयत्ते वनमभिगते यत्र केलिप्रमत्ता
ज्योत्स्ना सार्द्धं विमलसरसा चञ्चरीका रुवन्ति ।

चित्रं पुष्पं विकसति तथा कोकिला गीतिहृष्टा
खद्योताली वहति वनभू-वालपाश्येव शोभाम् ।।११।।
वात्यत्यर्थं मलयपवनो मर्मरं रौति प..
ते द्वे सख्यौ परममुदिते चिक्यतुः पुष्पपुञ्जम् ।
पूर्णं कृत्वाञ्चलपुटमहो अश्रुसिक्ताश्चकार
पुष्पश्रेणीः पतिविरहिणी दुःखिनी सा प्रमीला ॥१२॥
दृष्ट्वा दूरे विरसवदनां नाम सूर्पनखां सा
पत्नीं पूष्णो बत सुमनसं विप्रयोगातिदूनाम् ।
तिष्ठन्ती • तां विरहविधुराऽवोचनासीमदुःखा
रात्रौ यादृक् तव सखि दशा तादृशी मेऽप्यसह्या ॥१३॥
ध्वान्तं घोरं भुवनमधुना दह्यते दग्धनेत्रं
विच्छेदाग्निर्दहति नितरां दग्धचित्तं सदा मे ।
पश्यन्ती यं कमलदयितं जीवितं धर्त्तुमीशा
सोऽद्यास्ताद्रिं चिरमुपगतो मदसौभाग्यपाकात् ॥१४॥
चित्वा कुञ्जे बहुलकुसुमं श्वासमुष्णं त्यजन्ती
प्राहाऽऽलीं सा प्रणयमधुरं सञ्चितः पुष्पराशिः ।
माल्यञ्चापि ग्रथितमधुना लप्स्यते वा कुतस्त-
च्छ्रीपादाब्जं कुसुमवलिभिर्यक्ष्यते यन्मयाऽलम् ॥१५॥
केनाऽवद्धः स हि मृगनृपो नेनि शक्नोमि बोद्धुं
सर्वास्तूर्णं प्रियसखि वयं याम लङ्कां प्रमीला ।
एवं प्रोचे निजसहचरीं सा च तां प्राह पृष्टा
सैन्यै रुद्धां रघुवरहितैः केन गच्छानि लङ्काम् ।। १६ ।।
वैरिव्यूहा निशिचरगणान् हन्तुकामाः समन्ता-
द्धाधाव्यन्ते प्रहरणकरा दण्डबाहूपमानाः ।
श्रुत्वा क्रुद्धाऽवददयि सखि प्रात्थ किं त्वं भयार्त्ता
रोद्धुं कोऽलं वद जलनिधिं प्रस्थितां शैलकन्यां ॥१७॥ [युग्मम्]

जाताऽहं तद्दनुजजनने मेघनादस्य भार्या
क्रव्यादानां प्रथित-नृपती रावणो भर्तृ तातः ।
राज्यभ्रष्टो दशरथसुतो भैक्ष्यमात्रोपजीवी
तस्माद् भीतिं कथमहमयि प्राप्नुयां ब्रूहि भीरु ॥ १८ ॥
बाह्वोर्वीर्यादरिबलवृतां संप्रवेक्ष्यामि लङ्कां
प्रेक्षिष्येऽद्यार्यमकुलसुतः केन संरोत्स्यते माम् ।
उक्त्वैतावद् गजपतिगतिर्भाविनी दानवी सा
साध्वी रोषात् कनकभवनं प्राविशद् वीर्यदीप्ता ॥१९॥
पूर्वं पार्थो रथिकुलमणिर्यज्ञियाश्वेन सार्द्धं
यातो यद्वत् कुपितहृदयो वादयन् देवदत्तम् ।
नारी-देशं भुवनरमणं तद्वदेषा बलाढ्या
वीर्योदग्रा रणकुतुकिनी सज्जितासीद्रणार्थम् ॥२०॥
मन्द्रा ध्वाना दिशि दिशि गता दुन्दुभीनां पृथूनां
वीरा बाला मुदितहृदया नग्नखड्गं दधत्यः ।
सङ्कुर्वत्यस्तुमुलनिनदं शिञ्जिनीनां प्रमत्ता
निर्जग्मुस्ताः कृतकलकलाश्चर्मचक्रं धुवत्यः ॥२१॥
दीप्रा शोभा कनकघटितस्याकरोत् कञ्चुकस्य
सर्वां पूर्णां तरलकिरणैः स्वर्णलङ्कां समृद्धाम् ।
मञ्जीरोत्थं श्रवणसुभगं शिञ्जितं शृण्वदुत्कं
ह्रेषानादं परमकुरुतोत्क्षिप्तकर्णाश्ववृन्दम् ॥२२॥
वार्यां नागाः श्रवणबिलभिद् बृंहितं चक्रुरुग्रं
दूरे मेघस्तनितसदृशं तुङ्गशृङ्गे गिरीणाम् ।
दर्यां सानौ गहनविपिने जाग्रतीव प्रतिश्रुत्
देशः कृत्स्नोऽभवदसमये ध्वंसलीलाविलासः ॥२३॥
मुण्डस्रग्विण्यतिभयकृतिर्भीषणा काचिदन्या
नारी कृत्वा शतमितहरीन सञ्चितान् मन्दुरायाः ।

निन्येऽलिन्दं मुदितहृदया चेटिकानां शतं ता-
नारूढं झनझनितमुदितं कोपगर्भस्थखड्गात् ॥२४॥
चूडानृत्यच्छिरसि मधुरं तासामानन्दवेगा-
दुत्क्षिप्तासीत् कुतुकभरतो वेणिरप्याप्ततूणा ।
पाणौ शूलं मृदुलकमले कण्टकं वा मृणाले
पृष्ठे धृत्वा चरणकमलं हेषितं चक्रुरश्वाः ॥२५॥
यौद्धं तूर्यं ध्वनितमभवद्देवसङ्घः स्वधाम्नि
सर्पाः सर्वे बलिनृपगृहे मर्त्तलोके च मर्त्ताः ।
भीताः श्रुत्वाऽद्भुतकलकलं शङ्किता मौनमाप्ता-
स्त्यक्तक्रीडाभयरणरसा सज्जितासीत् प्रमीला ॥२६॥
केशग्रन्थेरुपरि मुकुटप्राज्यशोभा विजिग्ये
लक्ष्मीर्जिष्णो रुचिरधनुषो मेघलेखोदितस्य ।
दिव्ये भालेऽञ्जनकणकला भैरवी भालपट्टे
नेत्रस्निग्धा शशधरकला पेशलेव व्यराजत् ॥२७॥
सारङ्गाक्ष्या पृथुकुचयुगं वर्मणालं पिनह्य
काञ्ची नानामणिसुघटिता सन्निबद्धा च कट्याम् ।
पृष्ठे दीप्रं फलकमतुलं तूणमित्रं विरेजे
भानोश्चित्राः परिधय इवाऽऽहृत्य नेत्रस्य वृत्तिम् ॥१८॥
ऊरौ रम्भावणसमविभे हैमकोषे सितासि-
र्दीर्घः शूलो विलसति भुजे मण्डनै रत्नजातैः ।
राजन्ती सा दनुजतनया पार्वतीव प्रमत्ता
हन्तुं भीमं महिषदलनी सानुजं शुम्भदैत्यम् ॥२९॥
अश्वारूढा द्रुतमभिययुश्चेटिकास्तां यथा वा
योगिन्यादिप्रवृतगिरिजा सा च वामीं स्वकीयाम् ।
उर्वज्ज्वालासदृशवडवामारुरोह प्रमीला
व्याहार्षीच्च स्वहितनिरता मेघमन्द्रं वयस्याः ॥३०॥

लङ्कापुर्यां शृणुन रिपुहा शक्रजिद् बन्दितुल्यो
धत्ते वासं बहुदिनमहं नैव जानामि हेतुम् ।
कालक्षेपं प्रति लघुपदं तस्य पार्श्वं व्रजामि
हित्वा शीघ्रं विकटकटकं संप्रवेक्ष्यामि लङ्काम् ॥३१॥
जित्वा दोर्भ्यां रघुकुलपतिं पालयिष्यामि चाऽऽर्गूं
वीराऽहं वा तुमुलसमरे तेन हास्यामि प्राणान् ।
जाता वंशे भुवि बहुमते दानवानां वयं भो
हन्तुं शत्रुं विधिनियमिता बद्धकक्ष्या भवामः ॥३२॥
माध्वीकं नोऽधरवरपुटे नेत्रयोः कालकूटं
दध्मः सर्वा विषसमभुजे नास्ति किं शक्तिसारः ।
याताऽऽल्यस्तदू रघुकुलवरं प्रेक्षितुं युद्धभूमौ
भर्त्तुः स्वस्रा पितुरभिगतो मुग्धया सः सुरूपः ॥३३॥
प्रेक्षिष्ये तं रघुकुलमणिं लक्ष्मणं वीरवन्द्यं
भन्त्स्यामि द्राग् विषधरगुणं राक्षसानां कलङ्कम् ।
मातङ्गी वा नलवनमहं सन्दलिष्यामि शत्रून्
धावध्वं भोश्चपलगतयश्चञ्चलेव द्विपनसु ॥३४॥
मत्तो यूथः सुरभिसमये हस्तिनीनामिवोग्रो
हुङ्कृत्वा ता दनुकुलसुताः पूरयामासुराशाः ।
साध्वी याता दयितसविधं दाववह्निप्रभीमा
कम्प्रा लङ्काऽभवदतिभयं सागरो गर्जति स्म ॥३५॥
घननिभरज ऊर्ध्वं ह्युत्थितं सर्वदिक्षु
पवनसखशिखा किं नैशधूमावृता स्यात् ।
अनलतरलदीप्तिः सङ्गता सङ्गिनीभि-
स्तरिलगतिरगच्छद् वल्लभार्थं सुकेशी ॥३६॥

इति श्रीमेघनादवधे महाकाव्ये प्रमीलारणसज्जा नाम नवमः सर्गः ।

# सरल-चित्सुखीसारम्

[ निबन्धकः—स्वर्गत-रमेशचन्द्र-वेदान्ततीर्थः ]

( पूर्वतोऽनुवृत्तम् )

तार्किकः ॥—अस्ति हि नो दुरुद्धराणि अप्रसहानि च वादिभिः विरुद्धत्वादीनि असंख्येयानि साध्यनिबर्हणानि अस्त्राणि, तेभ्यस्तावत् त्रायस्व आत्मपक्षम् ।

वेदान्ती ॥—आसाद्य मे समस्तं ब्रह्मास्त्रप्रकाशं प्रशान्तशक्तीन्यभिभूतानि भवितारस्ते समस्तास्त्रतेजांसि, भवन्ति हि ब्रह्मतेजोमालया अखिलानि वस्तुजातानि तेजोवन्ति, लीयन्ते च तानि सर्वाणि तत्रैव । पश्य तावत् पूर्वमेवोपशान्तानि विशेषणासिद्धाप्रसिद्धविशेष्यत्व-स्वरूपासिद्धि-व्याप्यत्वासिद्धिप्रमुख-दूषणास्त्राणि । इदानीं शाम्यन्ति विरुद्धत्वादीनि । मन्ये, सम्यगुपलक्षितं तावत् अधुना "नासिद्धो हेतुर्भवती"ति, इदानीमवगच्छतु भवान् नापि **विरुद्धः** हेतुः प्रभवतितरामिति । तथाहि,—साध्याभावव्याप्यहेतुर्हि विरुद्ध इत्युच्यते, यथा ह्रदो वह्निमान् जलादिति, अत्र हि साध्यं वह्निः, तदभावव्याप्यं जलम्, अतः ह्रदो वह्निमान् जलादित्यत्र जलत्वहेतुः विरुद्धः ; नैवम् अनुभूतित्वहेतौ सम्भवति ; स्वप्रकाशरूपसाध्यस्य अभावाधिकरणेषु वेद्येषु विपक्षेषु घटादिषु अनुभूतित्वहेतोरवृत्तेः । यदि विपक्षे हेतोरस्य वृत्तिः स्यात् तदैवेदं दूषणमापतेत्, नैवमस्तीति न प्रभवति ते दूषणास्त्रमेतत् । **नापि अनैकान्तिकः** हेतुः ; साध्याभाववद्वृत्तित्वं हि हेतोरनैकान्तिकत्वम्, यथा पर्वतो धूमवान् वह्नेरिति, विद्यते हि अत्र साध्यधूमाभाववति अयोगोलके वह्निरूपस्य हेतोर्विद्यमानता, अत्र तु साध्यस्य स्वप्रकाशस्य योऽभावः, तदधिकरणात् विपक्षात् वेद्यात् घटादेः अनुभूतित्वहेतोः **व्यावृत्तेरेव**, न हि वेद्येषु घटादिषु अनुभूतित्वं हेतुर्विद्यते, येन अनैकान्तिकत्वदूषणम् आत्मानं लभेत । **नापि असाधारणः**, तद्धि पक्षमात्रवृत्तित्वं हेतोः,

सपक्षविपक्षोभयव्यावृत्तत्वमित्यर्थः, यथा शब्दो नित्यः शब्दत्वादित्यादिः, अत्र हि सपक्षे आकाशादौ विपक्षे च घटादौ नैव शब्दत्वं हेतुर्विद्यते, अतः असाधारणोऽयं हेतुः, प्रकृतानुमाने तु केवलव्यतिरेकितया सपक्षाभावात् कथम् उभयव्यावृत्तत्वं हेतोः ? नातः असाधारणत्वं नाम प्रभवति दोषः ।

तार्किकः ॥—भो ब्रह्मास्त्रधारिन् वादिवर्य, नैवमपि सन्दिग्धानैकान्तिकतादिदिव्यास्त्रदूषणप्रतिघाताय पराक्रमते ते ब्रह्मास्त्रम् । न भवतु तावत् विपक्षवृत्तित्वनिश्चयाभावात् सपक्षासम्भवेन तत्र प्रवेशाभावेन च विरुद्धानैकान्तिकतासाधारणादीनां दूषणमहास्त्राणामत्र प्रभावस्ते स्वप्रकाशब्रह्मास्त्रे, किन्तु

"यावच्चाव्यतिरेकित्वं शतांशेनापि शंक्यते ।
विपक्षस्य हेतोस्तावत् कुतो गमनिकाबलम् ॥"

इत्यादिना प्रशस्तपादऋषिदृष्टेन मन्त्रेण समेधितस्य सन्दिग्धानैकान्तिकत्वस्य कुतो भवेद् वारणम् ? अनुभूतित्वहेतोरधिकरणे अनुभूतौ, स्वयंप्रकाशत्वरूपावेद्यत्वस्य साध्यस्य योऽभावः वेद्यत्वं, तस्य वृत्तौ कोऽस्ति प्रबलो बाधकस्तर्कः, येन न भवेदस्य दोषस्य प्रसरः ? अतो हेत्वधिकरणे अनुभूतौ साध्याभावसन्देहसत्त्वात्, यदा अनुभूतौ भवति पाक्षिकं साध्याभावविज्ञानं तदा तस्याः साध्याभावाधिकरणतया विपक्षत्वात् तस्मिन् हेतोः अनुभूतित्वस्य विद्यमानत्वेन विपक्षे बाधकतर्काभावात् सन्दिग्धानैकान्तिकतेति दोषः सुदुर्निवार एव भवता ।

वेदान्ती ॥—मैवं वादीः, अपि सर्वप्रपञ्चाधारे स्वप्रकाशानुभूतौ वेद्यत्वबाधकतर्कमन्त्रसम्पदभावः समुत्प्रेक्षितुमपि शक्यते तत्त्वानभिज्ञेन भवता ? प्रयुज्यन्ते च मयाऽधुना बाधकतर्कराजयः, शक्यं चेत् सावधानं यतस्व सर्वात्मना प्रतिसंहरणाय तासाम् । नैवात्र सन्दिग्धानैकान्तिकता कथमपि प्रसारमासादयितुमर्हति,—अनुभूतेरनुभाव्यत्वेऽनवस्थापातात् । यदि अनुभूतिरपि अनुभाव्या (वेद्या) भवेत्, तदा यया अनुभूतिर्वेद्येत अनुभूत्या, सापि अनुभूत्यन्तरेण वेद्या भवितुमर्हति, स्वयम् अवेदितया अन्यत्र वेदनोपादनानर्हत्वात्, नहि वह्निज्ञानहेतुरपि धूमः स्वयमज्ञातः वह्निमावेदयितुमुत्सहते ; एवं तस्या अपि अनुभूतेरनुभूत्यन्तरेण वेद्यता उपेया, एवञ्च अनवस्थादूषणसम्प्रहारो दुष्परिहरः, अतो

विपक्षे बाधकतर्कदलस्य प्रबलत्वात् न सन्दिग्धानैकान्तिकताऽत्र स्वप्रकाशसेना-नासीरसीमानमासादयितुमर्हति ।

तार्किकः ॥—भो विद्वन् , भवदुदीरितबाधकतर्कप्रहारस्य नास्तीह प्रसरः, यदि अनुभूतिविषयिण्या द्वितीयाया अनुभूतेः पुनरनुभूत्यन्तरविषयत्वं, तस्य पुनरपरानुभूतिविषयत्वम् एवं परं परं स्वीक्रियेत, आसाद्येतापि तदा पदमनवस्थया, न च नियतमेवं वर्त्तते अपेक्षा अनुभूतिपरम्पराणामतोऽवश्यवेद्यताभावात् अनुभूतेः न अनवस्था ।

वेदान्ती ॥—न च एवं वाच्यम् यतः यदि न अनुभाव्यतानियमस्तर्हि, कथं तया अर्थे व्यवहारः पदमासादयेत् ?

तार्किकः ॥—मैवं वादीः, व्यवहारस्य तत्स्वरूपसत्तामात्रेण अज्ञातेन अपि उपपत्तेः । अनुभूतिजन्यव्यवहारो हि अनुभूतेः सत्तामपेक्षते न तु तत्रापि अन्यामनुभूतिम् , अतो नास्ति काचिदनुपपत्तिः तद्व्यवहारस्येति सन्तोष्टव्यम् भवता ।

वेदान्ती ॥—यदि प्रमाणजन्यज्ञानविषयतारूपवेद्यता द्वितीयानुभूतौ न वर्त्तते तदा कथं तस्याः सत्तानिश्चयः, अनिश्चितसत्तया वा तया कथम् अर्थे व्यवहारः ? यदि प्रमाणजन्यज्ञानविषयत्वाभावेऽपि तस्याः सत्ता अङ्गीक्रियते, तदा प्रमाणाभावेन सत्ताया अवधारणासम्भवात् असत्त्वमेव तस्याः कथं नाध्यवसीयते ? एवं सति को ब्रूते सती सा अनुभूतिवराकीति ? ततः तद्विषयप्रमाणानुदये तत्सत्ताया अपि अनिश्चयात, तत एव व्यवहार इत्यप्यसिद्धेः स्वरूपसत्तामात्रेण व्यवहार इति न शक्यते वक्तुम् ।

तार्किकः ॥—अस्मद्राद्धान्ततत्त्वमविदुषो भवतः शोभतेतरामेषा वचनभङ्गीपरम्परा । श्रूयतां श्रद्धया यदुक्तं ममाभिमतमतमस्मत्परमगुरुपादैरुदयनाचार्यवर्यैः भवतामपि गुरुपदवीमधिरोहत आचार्यमिश्रकृतस्य न्यायवार्त्तिकतात्पर्यटीकाग्रन्थस्य व्याख्यायां तात्पर्यपरिशुद्धौ—"अथ यदा कदाचित् तत्सत्ताजिज्ञासोदये व्यवहारादिना केनचिल्लिङ्गेन साऽपि प्रमीयत" इति । न्यायविद्याबोधजडस्य भवतः बोधाय समुच्यतेऽस्य वाक्यस्य परिस्फुटोऽर्थः ॥

नास्माभिः अनुभूतिविषयिण्याः अनुभूतेः सत्तायां प्रमाणमेव नास्तीति उच्यते, अपितु यदा कदाचित् "अनुभूतिमिमां ज्ञातुमिच्छामि" इत्यादिरूपा तदनुभूतिविषये ज्ञानेच्छा जायते, तदा भवति तत्र प्रमाणानुसरणम्, ततश्च अतीताया अपि अनुभूतेः व्यवहारलिङ्गेन स्मृत्या वा सत्ता ज्ञायते, न तु स्वोदयसमसमयमेव प्रमाणमपेक्ष्यते, अतः तदा सत्तामात्रेणैव सा प्रथमामनुभूतिं विषयीकरोति, ततश्च न अनवस्था।

वेदान्ती॥—तन्न युक्तम्, भवेदेवं यदि अनुभूतिविषयिणी एवंविधा काचिद् वृत्तिरुदियात् सैव तु अनुपलब्धिपराहता, नहि भवति,—"घट इति" "घटमनुभवामीति" च अनुभूतिद्वयादतिरिक्ता तत्तदनुभूतिपरम्परावगाहिका काचिदनुभूतिरनुभवगोचरा संसारमण्डले कस्यचिदर्वाग्दृशः। अनुभूतिर्हि उपलब्धियोग्या इति भवतां मतम्, अतः तस्या अनुपलम्भात् अभाव एव निश्चीयते।

तार्किकः॥—मा भूत् अनुभूतिगोचरायाः अनुभूतेरनुभवः, तथाऽपि तथा कल्पयामः, का हानिः?

वेदान्ती॥—नैवम्, अन्तरेण तदनुभवं तत्सत्ताभ्युपगमे प्रमेयसत्ताया अपि तथाभ्युपगमोपपत्तौ प्रमाणगवेषणावैयर्थ्यापातात्। यथा हि अनुभवं विनाऽपि अनुभूतिगोचरा अन्या अनुभूतिः कल्प्यते भवता, एवं घटादीनां प्रमेयाणामपि अनुभवं विना सत्ताकल्पनोपपत्तेः वृथा ते प्रमाणचतुरस्य तन्निश्चयाय प्रमाणगवेषणा।

तार्किकः॥—भोः प्रमाणनयावबोधजड, न वयं प्रमाणहीनं कल्पयामः किञ्चित्, त्वदीयबोधसुकरत्वमपेक्षमाणेनैव मयैवमभ्युपेतम्, वस्तुतः प्रमाणबलादेव मे इयं कल्पना।

वेदान्ती॥—तत्रापि च तृतीयायाम् अनुभूतौ प्रमाणगवेषणायां तथा तुरीयायामन्यत् प्रमाणम्, तत्राप्यन्यत् इत्येवं रूपेण पूर्वोक्तानवस्था तदवस्थैव स्याद् भवतः प्रमाणनयनयनस्य जडिमा।

क्रमशः

# जानकीहरणम्

## पञ्चदशः सर्गः ।

अङ्गदाख्यमथ वानरवीरं रक्षसः पुरमजीगमदीशः ।
वेदितुं चतुरुपायविधीनां कस्य गम्य इति कौशिकशत्रुः[1] ॥१॥
संसदं च विदितः सुरशत्रोः प्राविशत् स रहितादरवृत्तिः[2] ।
राक्षसानधिपथोपनिविष्टान् संस्पृशन्[3] सपदि पुच्छगुणेन[4] ॥२॥
सन्निषद्य निभृतश्च मुहूर्त्तं स्वागतादिविधिलम्भितमानः ।
साधुरूढनयपद्धति पश्चादाददे वच इदं विनयस्थः[5] ॥३॥
निर्गुणोऽपि यदि शौर्यविशिष्टस्तत्र भक्तिमधिगच्छति लोकः ।
तद् येन परिदीपितवृत्तेर्दासवद्भवति सर्वजनौघः ॥४॥
त्वय्यनन्यजनखण्डितशक्तौ सर्वपुन्यजगणीत[6]गुणौघे ।
स्नेहबन्धनियतेन गुणाश्चेतसा ह्रियत एव कपीन्द्रः[7] ॥५॥
तद्वचांस्यवितथानि विपाके कर्तुमिष्टफलवन्ति यतेथाः ।
वल्लभस्य नयविद्विषतो[8] वा सूक्तमेव हृदये हि[9] निधत्ते ॥६॥
निस्पृहोऽथ पर एव हितानि व्याहरत्यगणितप्रभुकोपः ।
निष्फलप्रियसुखो ननु[10] भृत्यः पथ्यमाह पतिमानतवृत्तिः ॥७॥
[11]अभिमानपरिबोधनहेतोर्भावशून्यमभिधाय वचांसि ।
स्वामिनं युधि नियुज्य विमर्दं द्रष्टुमप्युपसरन्ति न केचित् ॥८॥
वारितेऽपि कलहाय यतन्ते दूरदृष्टरिपुकेतुशिखाग्राः ।
ताड्यमानशिरसोऽपि पुरस्तान्न प्रयान्ति शरवृष्टिनिपाते[12] ॥९॥

---

1 ०शत्रुम्  2 प्रथमद्वितीयचरणयोर्विपर्यासः पा:  3 ०शत्
4 पुच्छ०  5 ३,४ चरणयोर्विपर्यासः पा:  6 गुणगणश्रोत
7 कपीशः  8 तनयद्विषतो  9 हृदयेऽभि
10 सुखी ननु  11 स्वाभि०  12 १-२, ३-४ चरणयोश्च विपर्यासः पा:

मुञ्च घातमभितो भव वीरैरित्यन्यथैर्यधर्ममभिधाय जिघांसुम्[13] ।
लीलया युधि पुरोऽभिसरन्तः पञ्चषा अपि न सन्ति पुमांसः[14] ॥१०॥
यत् स्वयं युवतिभिस्तवतीषु व्याहृतं मधुमदेन सभासु ।
तत् स्मरन्ति शरजालकरालं केचिदेव रणमध्यमुपेताः[15] ॥११॥
के नसन्ति[16] पुरुषस्य सभायां[17] भोक्तुमिद्धविभवस्य समृद्धिम् ।
युद्धमध्यवधमिच्छति तस्मिन् दुर्लभाः सहकृतव्यवसायाः[18] ॥१२॥
निर्व्यपेक्षमवधूय वचस्तत् सेवकैरभिहितं श्रुतिहारि ।
यन्नयेन न समेति विरोधं तद्विचारनिपुणेन विधेयम् ॥१३॥
गायते द्विविधमागमविद्भिः कर्म यत् सुकृतदुष्कृतभेदात्[19] ।
सिद्धिदेयगुणदोषवशात्तद्भेदमेति पुनरेव चतुर्धा ॥१४॥
पक्षयुग्मगतसिद्धिविधेयं तं[20] विचिन्त्य गुणयोगविशेषम् ।
यः करोति करणीयमनिन्द्यं विद्धि नीतिफलमस्य करस्थम् ॥१५॥
दोषदुष्टफलनिर्व्यविरामं योऽर्थमर्थविपरीतमुदस्य ।
सेवते सदनुबन्धविशुद्धं धाम तत्र न तनोति विपत्तिम् ॥१६॥
दुर्जनेन सह वैरमनर्थस्तोपरस्य न हिताय परत्र ।
तत् कलत्रमपहाय सुहृत्त्वं[21] राघवस्य मृगयस्व सुखार्थम्[22] ॥१७॥
इन्द्रियाणि मतिमन्तमजय्यं योजयन्ति विषयेषु विजित्य ।
तद्वशि[23]त्वमवधूय यशोभिर्यस्तनोति भुवनानि स वीरः ॥१८॥
यौवनं चलमपायि शरीरं गत्वरं वसु विमृश्य विशिष्टम्[24] ।
[25]नान्यजन्मगततिक्तविपाकं दृष्टसौख्यमपि कर्म वि[26]धत्ते ॥१९॥
हेतुरन्यभवभोगविवृद्धेर्यद् यतश्च भवतीह विभुत्वम् ।
स्थास्नु यच्च वितनोति यशस्तत् साधनीयमितरत्तु न धीरैः ॥२०॥

---

13 जिघांसुम् 14 नापि सन्ति भुवि पञ्च पुमांसः
15 रणमध्यमुपेताः केचिदेव शरजालकरालम् 16 नयन्ति 17 सभाया
18 सहकृत व्यवसायाः 19 कर्म यद्द्विविधमागमविद्भिर्गीयते सुकृतदुष्कृतभेदात्
20 तद 21, 22 सुखार्थम्...सुहृत्त्वं 23 वशित्व
24 विशिष्टम् 25 नान्य० 26 न धत्ते

रूपवन्तमपि हन्ति जरार्तिः सङ्गते महति चास्ति वियोगः ।
याति दीर्घमपि विच्युतिमायुः पुण्यमेव निरपायि भजध्वम् ॥२१॥
तद्विहाय मुनितुल्यमहिम्नो दुर्जयस्य मनसाऽपि युवत्या ।
लोकयुग्यशतशर्मविनाशं स्पर्शमस्य सुखमेहि यशोभिः[27] ॥२२॥
स्वप्रियावितरणेन कृतज्ञस्तोषितः सफलहार्दविरोधम् ।
स्वर्गिवर्गमवजित्य समस्तं भृत्यवत्तव पुरीह विधत्ते ॥२३॥
ये भवन्तमतिवंश्यममात्या नूतनं पतिमिहाभिलषन्ति ।
कारयन्ति यदि नीतिविरुद्धं मा तदीयमनुरोधि वचस्ते ॥२४॥
हेतुरस्ति नरवानरभावे नव दर्पविरहस्य चिरज्ञा ।
यत् सुरेन्द्रकृतवीर्यसुताभ्यामस्तशक्तिमिह किञ्चिदुशन्ति ॥२५ ॥
शासनं यदि शिरोभिरुदग्रं मौलिवन्नृपसुतस्य न धत्से ।
शैलशृङ्गगुरुमस्तकभारत्यागसौख्यमवगच्छ व्रतन्ते (?) ॥२६॥
शत्रुलोकजयदत्तमजय्यं दिक्षु फुल्लमिव काशवनं तत् ।
रामधामभवपावकदीप्तया दग्धमेव समवैहि यशः स्वम् ॥२७ ॥
गर्वमस्य वचनानि वहन्ति श्रोतुमन्तविरसानि मृदूनि ।
न प्रपद्य वितताप विकारं क्रोधबद्धमिति राक्षसलोकः ॥२८॥
अट्टहासनिनदोऽतिगभीरक्रोधगर्भमतिकायविमुक्तः ।
निस्फुलिङ्गनिकरेण सदस्तद्दीपयन्दश दिशोऽथ ससर्प ॥२९॥
कम्पनोऽपि परिकम्पितमूर्धा दन्तकान्तिनिचिताधररागः ।
उन्नतैकचपलभ्रु कटाक्षं पातयन् द्विषति तत्र विरेजे ॥३०॥
आहतान्यथ परस्परमेव क्रुध्यतस्त्रिशिरसोऽपि शिरांसि ।
घातविस्फुटितमौलिमणित्विड्द्योतिताम्बरतलानि विरेजुः ॥३१॥
इन्द्रजित्वथ मदानदशायां दिग्द्विपेन्द्र इव गण्डतटाभ्याम् ।
निर्मुमोच मदसेकमनोज्ञं घर्मवारि मदमन्थरनेत्रः ॥३२॥

---

27 लोकयुग्मशतशर्मविनाशं स्पर्शमस्य मनसाऽपि युवत्याः ।
दुर्जयस्य मुनितुल्यममिन्नस्य विहाय सुखमेहि यशोभिः ॥

मानगर्भमवकीर्णितदूतव्याहृतो भुवि नमय्य मुखेन्दुः ।
भूमिभक्तिकुसुमेन निवेशं मण्डलस्य वितताननिकुम्भः ॥३३॥
क्रोधवेगविकृतश्च तथासीच्छोणिताक्षमुखोत्तममरीचिः ।
यत्सदस्थकिरणाधि परत्र स्तम्भवल्लिरपि तेन विवभ्रे ॥३४॥
रक्तपद्मरुचिहारिकराग्रप्रस्थितालिकुलरोचिषि कुम्भः ।
न्यस्यति स्म भुजवर्तिनि मन्दं ज्याभिघातकिणवर्त्मनि चक्षुः ॥३५॥
सेन्द्रनीलमथ वक्षसि हारं चूर्णयत् सपदि पाणितलेन ।
बद्धकृष्णमृगचर्म तदासीत्तद्रजःसु विततेषु करालम् ॥३६॥
न्यस्य वक्त्रमधिपाणि विसृष्टस्वेदबिन्दुविकटोऽपि चिराय ।
विस्मयो न किल दूतमनन्यव्यापृतेन नयनेन ददर्श ॥३७॥
लोचनस्थघनरागशिखाभिर्लक्ष्यरोषवडवानलराशिः ।
न्यस्तहस्तचलवीचिकराल............॥३८॥
क्षुभ्यति स्म दशकण्ठसमुद्रो ... ... ...
... ... ... ... ॥३९॥
राक्षसेषु विकृतेषु न रयो माल्यवानिति विकारमियाय ।
युक्तियुक्तमपि वाक्यमभीष्टं स्वीकरोति न हि दुर्जनलोकः ॥४०॥
ईहितं हितमतीव विकारः वीक्ष्य वीतधृतिभर्तुरधीरः ।
बन्धुमिन्द्रसुतबन्धुमथैकं क्रोधनः समुदियाय सदस्तः ॥४१॥
आत्मपुच्छलतयैव स पश्चाद्बाहुसंयमितमिच्छति कर्तुम् ।
राक्षसे हतनिपातितशत्रुः स्वं जगाम बलमम्बरवर्त्मा ॥४२॥
राक्षसेष्वथ विलक्षतमेषु प्रेक्ष्य नम्रवदनाम्बुजपङ्क्तम् ।
रावणं स्म नयनिर्मलबुद्धिर्मातुरस्य गुरुराह वचांसि ॥४३॥
उक्तमत्र हितमेव विधातुं तत् क्षमस्व यदि वाक्यमहारि ।
औषधानि विरसानि...द्वेष्यभावमुपयाति न वैद्यः ॥४४॥
अप्रियाणि रिपुराह गुरुर्वा नष्टशीलमयमत्र विभागः ।
क्षेप्तुमेव कटु जल्पति पूर्वं प्रेमगर्भमपरस्तु हितैषी ॥४५॥

यत्त्वयाऽहमवकीर्णितपूर्वं व्याहृतोऽपि विरमामि न वक्तुम् ।
तत्र हेतुरितरैरसमानस्नेह एव न तु जीविततृष्णा ॥४६॥
यस्य वृद्धिमधिगम्य विवृद्धिर्जायते विपदि यस्य विपत्तिः ।
तं स एव हितमाह जनस्तु श्रोत्रहारिवचनैकविदग्धः ॥४७॥
स्वार्थरागरतिशुद्धमतीनां सद्विवेकपटुदृष्टफलानि ।
यच्छृणोति वचनानि गुरूणां तन्न जातु विपदेति नयज्ञम् ॥४८॥
ऋष्यमूकमितवत्यरिवीरे त्वं तदैव घटनामकरिष्यः ।
यद्युपेत्य कुलिशायुधसूनुर्नाभविष्यदियमत्र विपत्तिः ॥४९॥
सम्पतन्ति कवयोऽस्य न यावत्तावदेनमभिगम्य सवेगम् ।
विग्रहीतुमपि युक्तमभूद्वस्तत् कृतन्न हृदयेषु मदेन ॥५०॥
आसनं तव रसातलमेत्य स्तोककालमधुराधिपबन्धो ।
युक्तमत्र परिणश्यति यावज्जीवनेन बलमप्रतिबन्धम् ॥५१॥
प्रेरणाय न दिवस्य नयज्ञैर्व्याहृतस्य भवताऽत्र विधातुम् ।
द्वैधमुग्ररिपुसैन्यसमुद्रग्रस्तसर्वविषयेण न शक्यम् ॥५२॥
सद्धनेन पणबन्धमारतौ कल्पयन्ति बलभाजि नयज्ञाः ।
तं प्रियावितरणेन यदि स्यात् सिद्धिरत्र परमोऽयमुपायः ॥५३॥
त्वय्यलङ्घनलकूबरशापक्रूरवक्त्रपतनं न च वेत्सि ।
केवलन्तु कुलहिंसनहेतोः पासि विष्णुतुलितस्य कलत्रम् ॥५४॥
अस्ति काचिदिति नूनमनूना राघवेऽपि तव दुर्जयशङ्का ।
येन वर्णिवपुरेत्य कलत्रं तस्य हर्तुमभवत्तव यत्नः ॥५५॥
तस्य दूतमपि वेत्सि च येन पातितस्तव सुतोऽक्षकुमारः ।
इत्युदारमभिभाष्य स तूष्णीमास्त मौनमुचितं खलु मूर्त्तेः ॥५६॥
इतीरितं मातृगुरोर्वचस्तत् प्रशंसतः संसदि यातुधानान् ।
अङ्गारवर्षैरिव लोचनानां व्रातैः किरन्निन्द्ररिपुर्बभाषे ॥५७॥
पथ्यं पथोऽपत्यमयं व्यपेतं वशी विशङ्कं वदतु प्रसह्य ।
निन्दन्ति ये तद्व्यपदेशलाभात्तद्दन्तमय्यैव पिनष्टि मुष्टम् ॥५८॥

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| January 1935. | १८५६ शकीये पौषे<br>१७श-वर्षस्य ६म-संख्या | Vol. XV No. 9 |


## अगुरुदाही

मुग्धबुद्धिरभूत् कश्चिदाढ्यस्य वणिजः सुतः ।
जगाम स वणिज्यायै कटाहद्वीपमेकदा ।
भाण्डमध्ये च तस्याभून्महानगुरुसञ्चयः ॥
विक्रीतापरभाण्डस्य न तस्यागुरु तत्र तत् ।
कश्चिज्जग्राह तद्वासी जनो वेत्ति न तत्र तत् ॥
आग्निकेभ्यस्ततोऽङ्गारान् दृष्ट्वाऽपि क्रीणतो जनान् ।
स कालागुरु दग्ध्वा तदङ्गारानकरोज्जडः ॥
विक्रीयाङ्गारमूल्येन तच्चाऽऽगत्य ततो गृहम् ।
तदेव कौशलं शंसन् स ययौ लोकहास्यताम् ॥

## तिलकार्षिकः

कथितोऽगुरुदाह्येष श्रूयतां तिलकार्षिकः ।
बभूव कश्चिद्ग्रामीणो भूतप्रायः कृषीवलः ॥

स कदाचित् तिलान् भृष्टान् भुक्त्वा स्वादूनमंस्त तान् ।
भृष्टानेवावपद् भूरींस्तादृशोत्पत्तिवाञ्छया ॥
भृष्टेषु तेष्वजातेषु नष्टार्थं तं जनोऽहसत् ॥

### अग्निकुम्भः

तिलकार्षिक उक्तोऽसौ जलेऽग्निक्षेपकं शृणु ।
मन्दबुद्धिरभूत् कश्चित् पुमान्निशि स चैकदा ॥
प्रभाते देवतापूजां करिष्यन्नित्यचिन्तयत् ।
उपयुक्तौ मम स्नानधूपाद्यर्थं जलानलौ ॥
स्थापयामि तदेकस्थौ तौ शीघ्रं प्राप्नुयां यथा ॥
इत्यालोच्याम्बुकुम्भान्तः क्षिप्त्वाऽग्निं संविवेश सः ।
प्रातश्च वीक्षते यावद्गतोऽग्निर्नष्टमम्बु च ॥
अङ्गारमलिने तोये दृष्टे तस्याभवन्मुखम् ।
तादृगेव सहासस्य लोकस्याऽऽसीत् पुनः स्मितम् ॥

### नासिकारोपणः

श्रुतस्त्वयाऽग्निकुम्भाख्यो नासिकारोपणं शृणु ।
बभूव कश्चित् पुरुषो मूर्खो मूढमतिः क्वचित् ॥
स भार्यां चिपिटघ्राणां गुरुं चोन्नतनासिकम् ।
दृष्ट्वा तस्य प्रसुप्तस्य नासां छित्त्वाऽग्रहीद् गुरोः ॥
गत्वा च नासिकां छित्त्वा भार्यायास्तामरोपयत् ।
गुरुनासां मुखे तस्या न च तत्रारुरोह सा ।
एवं भार्यागुरू तेन छिन्ननासौ कृतावुभौ ।

### धनिकपशुपालः

अधुना वनवासी च पशुपालो निशम्यताम् ।
पशुपालो महामुग्धः कोऽप्यासीद्धनवान् वने ।
तस्य धूर्ताः समाश्रित्य मित्रत्वे बहवोऽमिलन् ॥
ते तं जगदुराढ्यस्य सुता नगरवासिनः ।

त्वत्कृते याचिताऽस्माभिः सा च पित्रा प्रतिश्रुता ॥
तच्छ्रुत्वा स ददौ तुष्टस्तेभ्योऽर्थं तं च ते पुनः ।
विवाहस्तव सम्पन्न इत्यूचुर्दिवसैर्गतैः ॥
ततः स सुतरां तुष्टस्तेभ्यो भूरि धनं ददौ ।
दिनैश्च तं वदन्ति स्म पुत्रो जातस्तवेति ते ॥
ननन्द तेन सर्वञ्च मूढस्तेभ्यः समर्प्य सः ।
पुत्रं प्रत्युत्सुकोऽस्मीति प्रारोदीच्चापरेऽहनि ॥
रुदंश्चाऽऽदत्त लोकस्य हासं धूर्त्तैः स वञ्चितः ।
पशुभ्य इव संक्रान्तजडिमा पशुपालकः ॥

### अलङ्कारलम्बकः

पशुपालः श्रुतो देव श्रृणवलङ्कारलम्बकम् ।
ग्राम्यः कश्चित् खनन् भूमिं प्रापालङ्करणं महत् ॥
रात्रौ राजकुलाच्चोरैर्नीत्वा तत्र निवेशितम् ।
यद् गृहीत्वा स तत्रैव भार्यां तेन व्यभूषयत् ॥
बबन्ध मेखलां मूर्ध्नि हारञ्च जघनस्थले ।
नूपुरौ करयोस्तस्याः कर्णयोरपि कङ्कणौ ॥
हसद्भिः ख्यापितं लोकैर्बुद्ध्वा राजा जहार तत् ।
तस्मात् स्वाभरणं तं तु पशुप्रायं मुमोच सः ॥

### तूलिकः

उक्तोऽलङ्करणो देव श्रृणु वच्म्यथ तूलिकम् ।
मूर्खः कश्चित् पुमांस्तूलविक्रयायाऽऽपणं ययौ ।
अशुद्धमिति तत्तस्य न जग्राहात्र कश्चन ।
तावद्ददर्श तत्राग्नौ हेम निष्टप्तशोधितम् ॥
स्वर्णकारेण विक्रीतं गृहीतं ग्राहकेण च ।
तद्दृष्ट्वाऽपि स तत्तूलमिच्छञ्छोधयितुं जडः ॥
अग्नौ चिक्षेप दग्धे च तस्मिँल्लोको जहास तम् ।

खर्जूरीच्छेदकः

श्रुतोऽयं तूलिको देव खर्जूरीछेदकं शृणु ॥
केचिन्मूर्खाः समाहूय न्ययोजयन्ताधिकारिभिः ।
ग्राम्या राजकुलादिष्टं खर्जूरानयनं प्रति ॥
ते दृष्ट्वैकां सुखग्राह्यां खर्जूरपतितां स्वतः ।
खर्जूरीं तत्र खर्जूरीः सर्वा ग्रामे स्वकेऽच्छिनत् ॥
पतितास्ताश्च कलिताशेषखर्जूरसञ्चयाः ।
उत्थाप्य रोपयामासुर्न चैषां सिद्ध्यति स्म तत् ॥
ततश्चाऽऽनीतखर्जूरा आदृता नो परोन ते ।
खर्जूरीछेदनं बुद्ध्वा राज्ञा प्रत्युत दण्डिताः ॥

निधानदर्शी

उक्तः खर्जूरहासोऽयं निध्यालोकनमुच्यते ।
निधानदर्शी केनापि कोऽप्याजह्रे महाभुजा ॥
मा गात् क्वापि पलाय्यायमिति राजकुमन्त्रिणा ।
नेत्रे तस्योदपाट्येतां निधानस्थानदर्शिनः ॥
भूलक्षणान्यपश्यन्तं गतावप्यगतौ समम् ।
अन्धं दृष्ट्वा च तं मन्त्री स जडो जहसे जनैः ॥

लवणाशी

निधानालोकनं श्रुत्वा श्रूयतां लवणाशनम् ।
बभूव गह्वरो ग्रामवासी कोऽपि जडः पुमान् ॥
स मित्रेण गृहं जातु नीतो नगरवासिना ।
भोजितो लवणस्वादून्यन्नानि व्यञ्जनानि च ॥
केनेयं स्वादुताऽमीदेरित्यपृच्छत् स गह्वरः ॥
प्राधान्याल्लवणेनेति तेनोचे सुहृदा तदा ॥
तदेव तर्हि भोक्तव्यमित्युक्त्वा लवणस्य सः ।
पिष्टस्य मुष्टिमादाय प्रक्षिप्याभक्षयन्मुखे ॥

तच्चूर्णं तस्य दुर्बुद्धेरोष्ठौ श्मश्रूणि चालिपत् ।
हसतस्तु जनस्याल मुखं धवलतां ययौ ॥

## गोदोहकः

लवणाशी श्रुतो देव त्वया गोदोहकं शृणु ।
ग्राम्यः कश्चिदभून्मुग्धो गौरेका तस्य चाभवत् ॥
सा च तस्यान्वहं धेनुः पयः पलशतं ददौ ।
कदाचिच्चाभवत्तस्य प्रत्यासन्नः किलोत्सवः ॥
एकवारं ग्रहीष्यामि पयोऽस्याः प्राज्यमुत्सवे ।
इति मूर्खः स नैवैतां मासमात्रं दुदोह गाम् ॥
प्राप्तोत्सवश्च यावत्तां दोग्धि तावत् पयोऽखिलम् ।
तत्तस्याश्छिन्नमच्छिन्नं लोकस्य हसितं त्वभूत् ॥
श्रुतो गोदोहको मूर्खः श्रूयतामपराविमौ ।
खलतिस्ताम्रकुम्भाभशिराः कश्चित् पुमानभूत् ॥
वृक्षमूलोपविष्टं तं तरुणः कश्चिदैक्षत ।
आगतोऽत्र कपित्थानि गृहीत्वा क्षुधितः पथा ॥
स कपित्थेन तत्तस्य क्रीडयाऽताडयच्छिरः ।
खलतिः सोऽपि तत् सेहे न तस्योवाच किञ्चन ॥
ततोऽन्यैः क्रमशः सर्वैः स कपित्थैरताडयत् ।
शिरस्तस्य स चातिष्ठत्तूष्णीं रक्ते स्रवत्यपि ॥
स च निष्फलतारुण्यकृतक्रीडाविचूर्णितैः ।
विना कपित्थैः क्षुत्क्लान्तो ययौ मूर्खयुवा ततः ॥
कपित्थैः स्वादुभिः किं न सहे घातानिति ब्रुवन् ।
स खल्वाटो गलद्रक्तशिरा मूर्खो ययौ गृहम् ॥
मूर्खसाम्राज्यबद्धेन पट्टेनेव वृतं शिरः ।
रक्तेन तस्य तद्दृष्ट्वा हसति स्म न तत्र कः ॥
एवं देवोपहास्यत्वं लोके गच्छन्त्यबुद्धयः ।

लभन्ते नार्थसिद्धिञ्च पूज्यन्ते तु सुबुद्धयः ॥
निष्प्रज्ञास्त्ववसीदन्ति लोकोपहसिताः सदा ।

### मूर्खभृत्यः

तथा च जडधीर्भृत्यो बभूवाऽऽढ्यस्य कस्यचित् ॥
सोऽजानन्नपि तस्याङ्गे जानामीत्यभिमानतः ।
स्फारं ददौ मौर्ख्यबलात् प्रभोस्त्वचमपाटयत् ॥
ततस्तेन परित्यक्तः स्वामिनाऽवससाद सः ।
अजानानो हठात् कुर्वन् प्राज्ञमानी विनश्यति ॥

### रिक्थविभागिनौ भ्रातरौ

इदञ्च श्रूयतामन्यन्मालवे भ्रातरावुभौ ।
विप्रावभूतामद्वैधं तयोः पित्र्यमभूद्धनम् ॥
विभज्यमाने चार्थेऽस्मिन्न्यूनाधिकविवादिनौ ।
स्थेयीकृत उपाध्यायश्छान्दसस्तावभाषत ॥
वस्तु वस्तु समे द्वे द्वे अर्धे कृत्वा विभज्यताम् ।
युवाभ्यां येन नैव स्यान्न्यूनाधिककृतः कलिः ॥
तच्छ्रुत्वा वेश्मशय्यादि भाण्डं सर्वं पशूनपि ।
एकमेकं द्विधा कृत्वा मूढौ विभजतः स्म तौ ॥
एका दासी तयोरासीत् साऽपि ताभ्यां द्विधा कृता ।
तद् बुद्ध्वा दण्डितौ राज्ञा सर्वस्वं तावुभावपि ॥
द्वौ लोकौ नाशयन्त्येवं मूर्खा मूर्खोपदेशतः ।
तस्मान्मूर्खान्न सेवेत प्राज्ञः सेवेत पण्डितान् ॥

### असन्तुष्टा द्विजा नष्टाः

असन्तोषोऽपि दोषाय तथा चेदं निशम्यताम् ।
आसन् प्रव्राजकाः केचिद् भिक्षासन्तोषपीवराः ॥
तान् दृष्ट्वा पुरुषाः केचिदन्योन्यं सुहृदोऽब्रुवन् ।
अहो भिक्षाशिनोऽप्येते पीनाः प्रव्राजका इति ॥

एकस्तेषु ततोऽवादीत् कौतुकं दर्शयामि वः ।
अहं कृशीकरोम्येतान् भुञ्जानानपि पूर्ववत् ॥
इत्युक्त्वा स निमन्त्र्यैतान् क्रमात् प्रव्राजकान् गृहे ।
एकाहं भोजयामास षड्रसाहारमुत्तमम् ॥
तेऽथ मूर्खास्तदास्वादं स्मरन्तो भैक्षभोजनम् ।
न तथाऽभिलषन्ति स्म तेन दुर्बलतां ययुः ॥
ततः प्रदर्श्य सुहृदां दृष्ट्वा तत्सन्निधौ च तान् ।
प्रव्राजकांस्तदाहारदायी स पुरुषोऽब्रवीत् ॥
तदा भैक्षेण सन्तुष्टा हृष्टपुष्टा इमेऽभवन् ।
अधुना तदसन्तोषाद् दुःखाद् दुर्बलतां गताः ॥
तस्मात् प्राज्ञः सुखं वाञ्छन् सन्तोषे स्थापयेन्मनः ।
लोकद्वयेऽप्यसन्तोषो दुःसहाश्रान्तदुःखदः ॥
इति तेनानुशिष्टास्ते सुहृदो दुष्कृतास्पदम् ।
असन्तोषं जहुः कस्य सत्सङ्गो न भवेच्छुभः ॥

## सुवर्णमुग्धः

अयं सुवर्णमुग्धश्च देवेदानीं निशम्यताम् ।
पुमान् कश्चिज्जलं पातुं तडागमगमद् युवा ॥
स जडोऽनोकहस्थस्य स्वर्णचूडस्य पक्षिणः ।
सुवर्णवर्णं तत्राम्भस्यपश्यत् प्रतिबिम्बकम् ॥
सुवर्णमिति मत्वा तद् ग्रहीतुं प्रविवेश तम् ।
तडागं न च तत् प्राप दृष्टनष्टं चले जले ॥
आरुह्याऽऽरुह्य च जले स तत् पश्यन् प्रविश्य तत् ।
पुनः पुनस्तडागाम्भो जिघृक्षुर्नाप किञ्चन ॥
पित्राऽथ स्वेन दृष्टोऽथ पृष्टो निन्ये गृहं जडः ।
तां दृष्ट्वा प्रतिमां तोये खगं विद्राव्य बोधितः ॥

निर्विमर्शा मृषाज्ञानैर्मुह्यन्त्येवमबुद्धयः ।
उपहास्याः परेषाञ्च शोच्याः स्वेषां भवन्ति न ॥
अयं चान्यो महामूर्खवृत्तान्तोऽत्र निशम्यताम् ।
कस्याप्युष्ट्रोऽवसन्नोऽभूद् भारेण वणिजोऽध्वनि ॥
स भृत्यानब्रवीत् कञ्चिदुष्ट्रं गत्वाऽन्यमानये ।
क्रीत्वाऽहं योऽस्य करभस्यार्धं भारादितो हरेत् ॥
मेघागमे यथा वस्त्रपेटास्वेतासु न स्पृशेत् ।
अम्भश्चर्माणि युष्माभिस्तथा कार्यमिह स्थितैः ॥
इत्युष्ट्रपार्श्वेऽवस्थाप्य भृत्यांस्तस्मिंस्ततो गते ।
वणिज्यकस्मादुत्तम्य प्रारेभे वर्षितुं घनः ॥
इति नः स्वामिना प्रोक्तमित्यालोच्याथ ते जडाः ।
कृष्ट्वा वस्त्राणि पेटाभ्यस्तैस्ते तान्यभ्यवेष्टयन् ।
चर्माणि तेन वस्त्राणि विनेशुस्तेन वारिणा ॥
पापाः किमत्र सकलो वस्त्रौघो नाशितोऽम्भसा ।
इत्यागतोऽथ स वणिक् क्रुद्धो भृत्यानभाषत ॥
त्वयैवाऽऽदिष्टमुदकात् पेटाचर्माभिरक्षणम् ।
दोषस्तत्र च कोऽस्माकमिति तेऽपि तमभ्यधुः ॥
चर्मस्वार्द्रेषु नश्यन्ति वस्त्राणीति मयोदितम् ।
वस्त्राणामेव रक्षार्थमुक्तं वो न तु चर्मणाम् ॥
इत्युक्त्वा चान्यकरभन्यस्तभारो वणिक् ततः ।
स गत्वा स्वगृहं भृत्यान् सर्वस्वं तानदण्डयत् ॥
एवमज्ञातहृदया मूर्खाः कृत्वा विपर्ययम् ।
घ्नन्ति स्वार्थं परार्थञ्च तादृग् ददति चोत्तरम् ॥

## अपूपभोजी

अयं चापूपिकामुग्धः संक्षेपेण निशम्यताम् ।
क्रीणाति स्माध्वगः कश्चित् पणेनाष्टावपूपकान् ।

तेषां च यावत् षड् भुङ्क्ते तावन्मेने न तृप्तताम् ।
सप्तमेनाथ भुक्तेन तृप्तिस्तस्योदपद्यत ॥
ततश्चक्रन्द स जडो मुषितोऽस्मि न किं मया ।
एष एवाऽऽदितो भुक्तोऽपूपो येनास्मि तर्पितः ॥
नाशिताः किं वृथैवान्ये मया हस्ते न किं कृताः ।
इति शोचन् क्रमात्तृप्तिमजानञ्जहसे जनैः ॥

### द्वाररक्षकः

कश्चिद्दासो हि वणिजा मूर्खः केनाप्यभण्यत ।
रक्षेस्त्वं विपणीद्वारं क्षणं गेहं विशाम्यहम् ॥
इत्युक्तवति याते‌ऽस्मिन् वणिजि द्वारपट्टकम् ।
विपणीतो गृहीत्वांऽसे दासो द्रष्टुमगान्नटम् ॥
आगच्छंश्च ततो दृष्ट्वा वणिजा तेन भर्त्सितः ।
त्वदुक्तं रक्षितं द्वारं मयेदमिति सोऽब्रवीत् ॥
इत्यनर्थाय शब्दैकपरोऽतात्पर्यविज्जडः ।
एवञ्च महिषीमुग्धमपूर्वं श्रृणुताधुना ॥

### वाचोयुक्तिपटुमहिषभक्षकः

कस्यचिन्महिषः कैश्चिद् ग्राम्यैर्ग्रामस्य बाह्यतः ।
नीत्वा वटतलं भिल्लवाटे व्यापाद्य भक्षितः ॥
तेन गत्वाऽथ विज्ञप्तो महिषस्वामिना नृपः ।
ग्राम्यानानाययामास स तान् महिषभक्षकान् ॥
तत्समक्षं स राजाग्रे महिषस्वाम्यभाषत ।
तडागनिकटे देव नीत्वा वटतरोरधः ॥
एभिर्मे महिषो हत्वा भक्षितः पश्यतो जडैः ।
तच्छ्रुत्वाऽन्येषु तेष्वेको वृद्धमूर्खोऽब्रवीदिदम् ॥
तडाग एव नास्त्यस्मिन् ग्रामे न च वटः क्वचित् ।
मिथ्या वक्त्येष महिषः क्व हतो भक्षितोऽस्य वा ॥

श्रुत्वैतन्महिषस्वामी सोऽब्रवीन्नास्ति किं वटः ।
तडागश्च स पूर्वस्यां दिशि ग्रामस्य तस्य वः ॥
अष्टम्याञ्च स युष्माभिर्भक्षितो महिषोऽत्र मे ।
इत्युक्तस्तेन स पुनर्वृद्धमूर्खोऽब्रवीदिदम् ॥
पूर्वा दिगेव नास्त्यस्मद्ग्रामे नाप्यष्टमी तिथिः ।
एतच्छ्रुत्वा हसन् राजा तमाहोत्साहयञ्जडम् ॥
त्वं सत्यवादी नासत्यं किञ्चिद् वदसि तन्मम ।
सत्यं ब्रूहि स युष्माभिः किं भुक्तो महिषो न वा ॥
एतच्छ्रुत्वा जडोऽवादीन्मृते पितरि वत्सरैः ।
त्रिभिर्जातोऽस्मि तेनैव शिक्षितोऽस्म्युक्तिपाटवम् ॥
तदसत्यं महाराज न कदाचिद् वदाम्यहम् ।
भुक्तोऽस्य महिषोऽस्माभिरन्यद् वक्ति मृषा त्वसौ ॥
श्रुत्वैतत् सानुगो राजा हासं रोद्धुं स नाशकत् ।
निर्याप्य महिषं तस्य तांश्च ग्राम्यानदण्डयत् ॥
इत्यगुह्यं निगूहन्ते गुह्यं प्रकटयन्ति च ।
मौर्ख्याभिमानेनादातुं मूर्खाः प्रत्ययमात्मनि ॥

### चक्रवाकः

कश्चिद्दरिद्रं गृहिणी चण्डी मूर्खमभाषत ।
प्रातः पितृगृहे यास्याम्युत्सवेऽस्मि निमन्त्रिता ॥
तत्त्वयोत्पलमालैका नानीता चेत् कुतोऽपि मे ।
तत्र भार्याऽस्मि ते नापि भर्त्ता मम भवानिति ॥
ततस्तदर्थं रात्रौ स राजकीयसरो ययौ ।
तत् प्रविष्टश्च कोऽसीति दृष्ट्वाऽपृच्छयत रक्षकैः ॥
चक्राह्वोऽस्मीति च वदन् बद्ध्वा नीतः प्रगे स तैः ।
राजाग्रे पृच्छ्यमानश्च चक्रवाकरुतं व्यधात् ॥

ततः स राज्ञा कथितः स्वयं पृष्टोऽनुबन्धतः ।
मूर्खः कथितवृत्तान्तो मुक्तो दीनो दयालुना ॥

## मूर्खभिषक्

कश्चिच्च मूढधीर्वैद्यः केनाप्यूचे द्विजन्मना ।
ककुदं मम पुत्रस्य कुब्जस्याभ्यन्तरं नय ॥
एतच्छ्रुत्वाऽब्रवीद् वैद्यो दश देहि पणान् मम ।
ददामि ते दशगुणान् साधयामि न चेदिदम् ॥
एवं कृत्वा पणं तस्माद् गृहीत्वा तान् पणान् द्विजात् ।
स तं स्वेदादिभिः कुब्जमरुजत् केवलं भिषक् ॥
न चाशकत् स्पष्टयितुं ददौ दशगुणान् पणान् ।
को हि कुब्जमृजूकर्तुं शक्नुयादिह मानुषम् ॥
हासायैवमशक्यार्थप्रतिज्ञानविकत्थनम् ।
तदीदृशैर्मूढमार्गैः सञ्चरेत न बुद्धिमान् ॥

## आढ्यगान्धर्विकौ

कश्चिद्गान्धर्विकेणाऽऽढ्यो गीतवाद्येन तोषितः ।
भाण्डागारिकमाहूय ततमभ्यमभाषत ॥
देहि गान्धर्विकायास्मै द्वे सहस्रे पणानिति ।
एवं करोमीत्युक्त्वा च स भाण्डागारिको ययौ ।
गान्धर्विकोऽथ गत्वा तान् पणांस्तस्मादयाचत ।
न चास्मै स्थितसंविज्ञान् पणान् भाण्डारिको ददौ ॥
अथाऽऽढ्यस्तेन विज्ञप्तस्तत्कृते वैणिकेन सः ।
उवाच किं त्वया दत्तं येन प्रतिददानि ते ॥
वीणावाद्येन मे क्षिप्रं त्वया श्रुतिसुखं कृतम् ।
तथैव दानवाक्येन कृतं क्षिप्रं मयाऽपि ते ॥
तच्छ्रुत्वा विहताशोऽपि हसित्वा वैणिको ययौ ।
कीनाशोक्तयाऽनया किं न हासो ग्रावृणोऽपि जायते ॥

## शिष्यद्वयम्

भीतशिष्यद्वयं चेदं देवैदानीं निशम्यताम् ।
गुरोः कस्याप्यभूतां द्वौ शिष्यावन्योन्यमत्सरौ ।
तयोरेको गुरोस्तस्य दक्षिणं पादमन्वहम् ।
अभ्यञ्जन् क्षालयामास वामं पादं तथेतरः ।
दक्षिणाभ्यञ्जके जातु ग्रामं संप्रेषिते गुरुः ।
अभ्यक्तवामपादं तं द्वितीयं शिष्यमभ्यधात् ॥
त्वमेव दक्षिणं पादमभ्यज्य क्षालयाद्य मे ।
श्रुत्वैतन्मूर्खशिष्योऽसौ गुरुं स्वैरमभाषत ॥
प्रतिपक्षस्य सम्बन्धी न पादोऽभ्यज्ञ्य एष मे ।
एवमुक्तवतश्चास्य निर्बन्धं सोऽकरोद्गुरुः ॥
ततो विपक्ष-तच्छिष्यरोषादादाय तस्य तम् ।
गुरोः शिष्यः स चरणं बलाद् ग्राव्णा च भग्नवान् ॥
मुक्ताक्रन्दे गुरौ तस्मिन् कुशिष्योऽन्यैः प्रविश्य सः ।
ताड्यमानः सशोकेन गुरुणा तेन मोचितः ॥
अन्येद्युः सोऽपरः शिष्यः प्राप्तो ग्रामाद् विलोक्य ताम् ।
अङ्घ्रिपीडां गुरोः पृष्टवृत्तान्तः प्रज्वलन् क्रुधा ॥
नाहं भनज्मि किं पादं तस्य सम्बन्धिनं द्विषः ।
इत्याकृष्य द्वितीयाङ्घ्रिं गुरोस्तस्य बभञ्ज सः ॥
ततोऽत्र ताड्यमानोऽन्यैरपि भग्नोभयाङ्घ्रिणा ।
गुरुणा तेन कृपया दुःशिष्यः सोऽप्यमोच्यत ॥
सर्वद्वेष्योपहास्यौ तौ शिष्यौ द्वौ ययतुस्ततः ।
गुरुश्च खञ्जमाश्लाघ्यः स्वस्थः सोऽप्यभवत् क्रमात् ॥
एवमन्योन्यविद्विष्टौ मूर्खः परिजनः प्रभो ।
स्वामिनोऽर्थं निहन्त्येव न चाऽऽत्मह्तिमश्नुते ॥

## द्विशिराः सर्पः

अयं च द्विशिरःसर्पवृत्तान्तोऽप्यवधार्यताम् ।
कस्याप्यहेर्द्वे शिरसी अभूतामग्रपुच्छयोः ॥
पौच्छं शिरस्त्वभूदन्धं चक्षुष्मत् प्रकृतं पुनः ।
अहं मुख्यमहं मुख्यमित्यासीदाग्रहस्तयोः ।
सर्पस्तु प्रकृतेनेव मुखेन विचचार सः ।
एकदाऽस्य शिरः पौच्छं मार्गे कष्टमवाप तत् ॥
वेष्टयित्वा दृढं तच्च सर्पस्यास्यारुणद् गतिम् ।
ततस्तद्वलवन्मेने स सर्पोऽग्रशिरोजयि ॥
तेनैव चान्धेन ततः स मुखेन भ्रमन्नहिः ।
अवटेऽग्नौ परिभ्रष्टो मार्गाद्दष्टे रदह्यत ॥
एवं गुणस्य येऽल्पस्य बहवो नान्तरं विदुः ।
ते हीनगुणसङ्गेन मूढा यान्ति पराभवम् ॥

## तण्डुलभक्षकः

इमं च शृणुतेदानीं भीतं तण्डुलभक्षकम् ।
अगात् कश्चित् पुमान् मूर्खः प्रथमं श्वाशुरं गृहम् ॥
स तत्र तण्डुलाञ् श्वश्र्वा पाकार्थं स्थापितान् सितान् ।
दृष्ट्वा भक्षयितुं तेषां मुष्टिं प्राक्षिपदानने ॥
तत्क्षणादागतायां च श्वश्र्वां मूर्खः स तण्डुलान् ।
नाशकत्तान् निगिरितुं न चाप्युद्गिरितुं ह्रिया ॥
तत्पीनोच्छूनगल्लं च निरालापमवेत्य तम् ।
तद्रोगशङ्कयाहूय तच्छ्वश्रूः पतिमानयत् ॥
सोऽप्यालोक्य निनायाऽऽशु वैद्यं वैद्योऽप्यपाटयत्
शोफशङ्की हनुं तस्य मूढस्याऽऽक्रम्य मस्तकम् ॥
निर्ययुर्लोकहासेन समं तस्य च तण्डुलाः ।
इत्यकार्यं करोत्यज्ञो न च जानाति गूहितुम् ॥

## गर्दभदोहनम्

कंचिन्न दारका मूर्खा दृष्टदोहा गवादिषु ।
गर्दभं प्राप्य संरुध्य दोग्धुमारेभिरे रसात् ॥
कश्चिद् दोह कश्चिच्च क्षीरकुण्डमधारयत् ।
अहंप्रथमिकाऽन्येषां पयः पातुमवर्तत ॥
न च ते लेभिरे क्षीरं कुर्वन्तोऽपि परिश्रमम् ।
अवस्तुनि कृतक्लेशो मूर्खो यात्यवहास्यताम् ॥

## मूर्खः पुत्रः

कश्चिच्च देव मूर्खोऽभूद्विप्रपुत्रः पिता च तम् ।
सायं जगाद गन्तव्यो ग्रामः पुत्र त्वया प्रगे ॥
श्रुत्वैतत्पृष्ट्वा कार्यं तं पितरं प्रातरेव सः ।
गत्वा वृथैव तं ग्रामं सायमागात् कृतश्रमः ॥
ग्रामं गत्वाऽहमायात इत्याह पितरं च सः ।
गते त्वयि न किं सिद्धमिति चाह स तत्पिता ॥
तदेति निरभिप्रायचेष्टितो लोकहास्यताम् ।
मूर्खोऽनुभवति क्लेशं न कार्यं कुरुते पुनः ॥
अप्रेक्षापूर्वकारी च निन्द्यतेऽवद्यकृत् क्षणात् ।

## लोमशः फलभक्षकः

तथा च कुत्रचित् कश्चिज्जडबुद्धिरभूत् पुमान् ॥
तस्य देशान्तरं जातु गच्छतोऽन्वागतः सुतः ।
अटव्यां वासिते सार्थे विवेश विहरन् वनम् ॥
पाटितो मर्कटैः सोऽत्र कृच्छ्राज्जीवन्नुपेत्य तम् ।
अज्ञानभिज्ञः पितरं पृच्छन्तमवदज्जडः ॥
वनेऽस्मि पाटितः कैश्चिल्लोमशैः फलभक्षिभिः ।
तच्छ्रुत्वा क्रोधकृष्टासिस्तत्पिता तद्वनं ययौ ॥

दृष्ट्वा फलान्याददानाञ्जटिनस्तत्र तापसान् ।
सोऽभ्यधावत् क्षतोऽमीभिः सुतो मे लोमशैरिति ॥
ऋक्षैस्ते पातितः पुत्रो मद्दृष्टैर्मा वधीर्मुनीन् ।
इत्यवार्यत पान्थेन तद्वधात् सोऽथ केनचित् ॥
ततः स दैवादुत्तीर्णः पातकात् सार्थमागतः ।
तन्न जातुचिदप्रेक्षापूर्वकारी भवेद्बुधः ॥
किमन्यत् सर्वदा भाव्यं जन्तुना कृतबुद्धिना ।
लोकोपहसिताः शश्वत् सीदन्त्येव ह्यबुद्धयः ॥
तथाच निर्धनः कश्चित् प्राप्तवानध्वनि व्रजन् ।
सार्थवाहस्य कस्यापि च्युतां हेमभृतां दृतिम् ।
स मूढस्तां गृहीत्वैव न जगामान्यतोऽपि च ।
स्थित्वा तत्रैव संख्यातुमारेभे हेम तच्च तत् ॥
तावत् स्मृत्वा हयारूढः प्रत्यागत्य स सत्वरम् ।
सार्थवाहोऽस्य दृष्टस्य हेमभस्त्रां जहार ताम् ॥
ततः स दृष्टनष्टार्थः शोचन् प्रायादधोमुखः ।
प्राप्तोऽप्यर्थः क्षणादेव हार्यते मन्दबुद्धिना ॥

## चन्द्रदर्शी

कश्चिच्च पार्वणं चन्द्रं दिदृक्षुः केनचिज्जडः ।
अङ्गुल्यभिमुखं पश्येत्यूचे दृष्टनवेन्दुना ॥
स हित्वा गगनं तस्यैवाङ्गुलिं तां विलोकयन् ।
तस्थौ न चेन्दुमद्राक्षीदद्राक्षीद्धसतो जनान् ॥

## श्वदष्टः श्रमणः

बभूव श्रमणः कश्चिद्विहारे क्वापि मूढधीः ।
स रथ्यायां भ्रमञ्जातु शुना जानुन्यदश्यत ॥
श्वदष्टः स विहारं स्वमुपागत्य व्यचिन्तयत् ।
किं वृत्तं जानुनि तवेत्येकैकः प्रक्ष्यतीह माम् ॥

प्रत्याययिष्याम्येवं च कियतोऽहं कियच्चिरम् ।
तदुपायं करोम्यत्र सर्वान् बोधयितुं शकृत् ॥
इत्यालोच्य समारुह्य स विहारोपरि द्रुतम् ।
गृहीत्वा ग्रन्थिमुसलं मूढो भिक्षुरवादयत् ॥
अकारणमकाले किं ग्रन्थिं वादयसीति तम् ।
श्रुत्वाश्चर्येण मिलिताः पप्रच्छुरथ भिक्षवः ॥
शुना मे भक्षितं जानु तदेकैकस्य पृच्छतः ।
ब्रुवेऽहं कियदित्येवं यूयं संघटिता मया ॥
तद् बुध्यध्वं समं सर्वे जानु मे पश्यतेति सः ।
भिक्षून् प्रत्यब्रवीदेतान् श्वदष्टं जानु दर्शयन् ।
ततः पार्श्वोपपीडं ते समग्रा भिक्षवोऽहसन् ।
कियन्मात्रे कृतोऽनेन संरम्भोऽयं कियानिति ।

## प्राणेभ्योऽप्यन्नमुष्टिर्हि कृपणानां गरीयसी

आख्यातः श्रमणो मूर्खष्टक्कमूर्खो निशम्यताम् ।
कदर्यः कोऽप्यभूत् क्वापि मूर्खष्टक्को महाधनः ॥
सभार्यः स सदा भुङ्क्ते सक्तूल्लँवणवर्जितान् ।
अन्यस्यान्नस्य बुबुधे नैव स्वादं स जातुचित् ॥
एकदा प्रेरितो धात्रा स भार्यामब्रवीन्निजाम् ।
क्षारिणीं प्रति जाता मे श्रद्धा तामद्य मे पच ॥
तथेति तस्य सा भार्या पपाच क्षीरिणीं तदा ।
तस्थौ चाभ्यन्तरे गुप्तं स टक्कः शयनं श्रितः ॥
दृष्ट्वा प्राघुणिकः कश्चिदत्र मे मा स्म भूदिति ।
तावत्तस्य सुहृद्धूर्तष्टक्कस्तत्रैक आययौ ॥
क्व ते भर्तेति पप्रच्छ स च तां तस्य गेहिनीम् ।
साऽप्यदत्तोत्तरा तस्य प्राविशद्भर्तुरन्तिकम् ॥

आख्यातमित्रागमनां सोऽपि भार्यां जगाद ताम् ।
उपविश्येह रुदती पादावादाय तिष्ठ मे ॥
भर्ता मे मृत इत्येवं वदेश्च सुहृदं मम ।
ततो गतेऽस्मिन्नावाभ्यां भोक्तव्या क्षीरिणी सुखम् ॥
इत्युक्ता तेन यावत् सा प्रवृत्ता रोदितुं तदा ।
तावत् प्रविश्य सोऽपृच्छत् किमेतदिति तां सुहृत् ॥
भर्ता मृतो मे पश्येति तयोक्तः स व्यचिन्तयत् ।
क्व पचन्ती मया दृष्टा सुखिता क्षीरिणीमियम् ॥
क्वाधुनैव विपन्नोऽयमेतद्भर्ता विना रुजम् ॥
नूनं मां प्राघुणं दृष्ट्वा कृतमाभ्यामिदं मृषा ।
तन्मया नैव गन्तव्यमित्यालोच्योपविश्य सः ॥
धूर्तो हा मित्र हा मित्रेत्याक्रन्दंस्तत्र तस्थिवान् ॥
श्रुताक्रन्दाः प्रविश्यात्र बान्धवा मृतवत् स्थितम् ।
श्मशानं भौतटक्कं तं नेतुमासन् समुद्यताः ॥
उत्तिष्ठ बान्धवैर्यावदेतैर्नीत्वा न दह्यसे ।
इत्युपांश्ववदत् कर्णमूले भार्या तदा च तम् ॥
नैवं शठोऽयं टक्को मे क्षीरिणीं भोक्तुमिच्छति ।
नोत्तिष्ठामि तदेतस्मिन्नगतेऽहं मृतो यदि ॥
प्राणेभ्योऽप्यन्नमुष्टिर्हि मादृशानां गरीयसी ।
इति प्रत्यब्रवीद् भार्यामुपांश्वेव स तां जडः ॥
ततस्तेन कुमित्रेण नीत्वा तैः स्वजनैश्च सः ।
दह्यमानोऽपि निश्चेष्टो ददौ ना मरणाद्वचः ॥
एवं स मूढो विजहौ प्राणान्न क्षीरिणीं पुनः ।
क्लेशार्जितं च बुभुजे तस्यान्यैर्हेलया धनम् ।

## काचरलोचनः कपिलधूसरः

श्रुतः कदर्यः श्रूयन्ताममी मार्जारभौतकाः ।

उज्जयिन्यामुपाध्यायो मुग्धः कोऽप्यभवन्मठे ।
तत्र निद्रा न तस्याभून्मूषकोपद्रवान्निशि ।
तत्खिन्नस्तन्न सुहृदे स कस्मैचिदवर्णयत् ।
मार्जारं स्थापयानीय सोऽत्र खादति मूषकान् ।
इति सोऽपि सुहृद्विप्रस्तमुपाध्यायमब्रवीत् ॥
मार्जारः कीदृशः क्वास्तु न स दृष्टचरो मया ।
इत्युक्तवत्युपाध्याये तं सुहृत् सोऽब्रवीत् पुनः ।
काचरे लोचने तस्य वर्णः कपिलधूसरः ।
पृष्ठे च लोमशं चर्म रथ्यास्वटति चेह सः ।
तदेभिस्त्वमभिज्ञानैरन्विष्यानाययाशु तम् ।
मित्र मार्जारमित्युक्त्वा तत्सुहृत् स ययौ गृहम् ।
ततः शिष्यानुपाध्यायः स जगाद जडो निजान् ।
अभिज्ञानानि युष्माभिः श्रुतान्येव स्थितैरिह ॥
तदन्विष्यत मार्जारं रथ्यासु तमिह क्वचित् ।
तथेति ते गताः शिष्यास्तत्र भ्रेमुरितस्ततः ॥
तथापि न तु तैर्दृष्टो मार्जारः स कदाचन ।
अथैकं ते वटुं रथ्यामुखादैक्षन्त निर्गतम् ॥
काचरं नेत्रयुगले वर्णे धूसरपिङ्गलम् ।
पृष्ठोपरि दधानं च लोमशं हरिणाजिनम् ॥
दृष्ट्वा तं सैष मार्जारः प्राप्तोऽस्माभिर्यथाश्रुतः ।
इत्यवष्टभ्य तं निन्युरुपाध्यायान्तिकञ्च ते ॥
उपाध्यायोऽपि मित्रोक्तैर्युक्तं मार्जारलक्षणैः ।
दृष्ट्वा तं स्थापयामास रात्रौ तत्र मठान्तरे ॥
मार्जारो नूनमस्मीति मेने सोऽपि वटुर्जडः ।
मार्जाराख्यां कृतां श्रुत्वात्मनस्तैरबुद्धिभिः ॥
स च भौतो वटुः शिष्यस्तस्य विप्रस्य येन तत् ।

उपाध्यायस्य तस्योक्तं मैतथा मार्जारलक्षणम् ॥
प्रातः सोऽथागतो विप्रो बटुमन्तर्विलोक्य तम् ।
इह केनायमानीत इति भौतानुवाच तान् ॥

श्रुतोपलक्षणास्त्वत्तो मार्जारोऽस्माभिरेष सः ।
आनीत इत्युपाध्यायो भौतः शिष्याश्च तेऽवदन् ॥

ततो विहस्य सोऽवादीद्विप्रो मूढाः क्व मानुषः ।
क्व च तिर्यक् स मार्जारश्चतुष्पात् पुच्छवानपि ॥

तच्छ्रुत्वा तं वटुं मुक्त्वा तेऽब्रुवन्मन्दबुद्धयः ।
तर्ह्यन्विष्यानयामस्तं मार्जारं तादृशं पुनः ।
एवमुक्तवतो मूढाञ्जनस्तत्र जहास तान् ।
अज्ञता नाम कस्यात्र नोपहासाय जायते ॥

## दोषाय निर्विमर्शैव भौतप्रश्नोत्तरक्रिया

मार्जारभौतः कथितः श्रूयन्तामपरेऽप्यमी ।
आसीद्बहूनां मुग्धानां मुख्यो मुग्धो मठे क्वचित् ।
स केनचिद्वाच्यमानाद्धर्मशास्त्रात् कदाचन ।
तडागकर्तुरश्रौषीदमुत्र सुमहत् फलम् ॥

ततः स धनसम्पूर्णो विपुलं वारिपूरितम् ।
तडागं कारयामास नातिदूरे निजान्मठात् ॥

एकदा स तडागं तं द्रष्टुं मुग्धाग्रणीर्गतः ।
केनाप्युत्पाटितान्यस्य पुलिनानि व्यलोकयत् ॥

तथैवागत्य सोऽन्येद्युरुत्खातं तटमन्यतः ।
दृष्ट्वा तस्य तडागस्य सोद्वेगः समचिन्तयत् ॥

प्रातः प्रभातादारभ्य स्थास्यामीहैव वासरम् ।
द्रक्ष्यामि कः करोत्येतदित्यालोच्य ययौ प्रगे ॥

अन्येद्युर्यावदेत्यास्ते तावत्तत्र ददर्श सः ।
दिवोऽवतीर्य शृङ्गाभ्यां खनन्तं वृषभं तटम् ॥
दिव्यो वृषोऽयं तत् किं न दिवं यामि सहामुना ।
इत्युपेत्य वृषस्यास्य हस्ताभ्यां पुच्छमग्रहीत् ॥
ततः पुच्छाग्रलग्नं तं भौतमुत्क्षिप्य वेगतः ।
क्षणान्निनाय कैलासं स्वं धाम भगवान् वृषः ॥
तत्र दिव्यानि भक्ष्याणि मोदकादीन्यवाप्य सः ।
भुञ्जानो न्यवसद् भौतो दिनानि कतिचित् सुखम् ॥
गतागतानि कुर्वाणं स दृष्ट्वा तं महावृषम् ।
अचिन्तयत भौतानां मुख्यो दैवेन मोहितः ॥
गच्छामि वृषपुच्छाग्रलग्नः पश्यामि बान्धवान् ।
कथयित्वाद्भुतमिदं तथैवैष्याम्यहं पुनः ॥
इति सञ्चिन्त्य वृषभस्यैकदोपेत्य तस्य सः ।
आलम्ब्य गच्छतः पुच्छमागाद् भौतो भुवस्तलम् ॥
ततः प्राप्तो मठे भौतैरन्यैराश्लिष्य तत् स्थितैः ।
क्व गतोऽस्मीति पृष्टस्तं स्ववृत्तान्तं शशंस सः ॥
ततः सर्वे श्रुताश्चर्या भौतास्ते प्रार्थयन्त तम् ।
प्रसीद नय तत्रास्मानपि भोजय मोदकान् ॥
तच्छ्रुत्वा स तथेत्येतान् युक्तिमुक्त्वापरे दिने ।
तडागोपान्तमनयत् स च तत्राययौ वृषः ॥
जग्राह तस्य लाङ्गूलं मुख्यः पाणिद्वयेन सः ।
तस्याप्यगृह्णाच्चरणावन्यस्तस्यापि चेतरः ॥
इत्यन्योन्याङ्घ्रिलग्नैस्तैर्भौतैर्यावच्च शृङ्खला ।
रचिता स वृषस्तावदुत्पपात जवाम्बरम् ॥
याति तस्मिंश्च वृषभे लाङ्गूलालम्बिभौतके ।
मुख्यभौतं तमप्राक्षीदेको भौतोऽथ दैवतः ॥

श्रद्धामाख्याहि नस्तावद् यथेष्टसुलभा दिवि ।
कियत्प्रमाणा भवता मोदका भक्षिता इति ॥
ततो भ्रष्टानुसन्धानो वृषपुच्छं विमुच्य तम् ।
पद्माकारौ करौ कृत्वा संश्लिष्टौ भौतनायकः ॥
इयत्प्रमाणा इत्याशु यावत्तान् प्रतिवक्ति सः ।
तावत् सोऽन्ये च ते सर्वे खान्निपत्य विपेदिरे ॥
वृषः प्रायाच्च कैलासं जनो दृष्ट्वा जहास च ।
दोषाय निर्विमर्शैवं भौतप्रश्नोत्तरक्रिया ॥

## अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे

श्रुता द्युगामिनो भौता श्रूयतामपरोऽप्ययम् ।
कश्चिद् भौतो विसस्मार मार्गं मार्गान्तरं व्रजन् ॥
तरोर्नदीतटस्थस्य गच्छास्योपरिवर्त्मना ।
इत्युच्यते स्म पन्थानं परिपृच्छञ्जनैश्च सः ॥
ततस्तस्य तरोः पृष्ठं गत्वारूढः स मूढधीः ।
एतत्पृष्ठेन मे पन्था उपदिष्टो जनैरिति ॥
तत्पृष्ठे सर्पतश्चास्य भरात् पर्यन्तवर्तिनी ।
शाखा ननाम यत्नेन पपातालम्ब्य नैष ताम् ॥
तामालम्ब्य स्थितो यावत्तावत्तेनाययौ पथा ।
आरोहणोपरिस्थेन नद्यां पीतजलः करी ॥
तं दृष्ट्वा तरुशाखाग्रलम्बी भौतः स दीनवाक् ।
महात्मन् मां गृहाणेति हस्त्यारोहमुवाच तम् ॥
हस्त्यारोहश्च भौतं तमवतारयितुं तरोः ।
पादयोरग्रहीद् द्वाभ्यां पाणिभ्यामुज्झिताङ्कुशः ॥
तावच्च निर्गत्य गते गजे भौतस्य तस्य सः ।
ललम्बे पादयोर्हस्तिपको वृक्षाग्रलम्बिनः ॥

ततः स त्वरयन् भीतो हस्त्यारोहं तमभ्यधात् ।
यदि जानासि तच्छीघ्रं यत् किंचिद् गीयतां त्वया ॥
इतोऽवतारयेज्जातु यच्छ्रुत्वागत्य नौ जनः ।
पतितावन्यथाधस्ताद्धरेदावामियं नदी ॥
इत्युक्तः स गजारोहस्तेन मञ्जु तथा जगौ ।
यथा स एव भीतोऽत्र परितोषमगात् परम् ॥
साधुवादं च स ददद् विस्मृत्योज्झितपादपः ।
दातुं प्रावर्तत द्वाभ्यां हस्ताभ्यां छोटिकां जडः ॥
ततस्तूर्णं विनिपत्यैव सहस्त्यारोह एव सः ।
नद्यां विपेदे मूर्खे हि गद्यः कस्यास्ति शर्मणे ॥

## स्वयमसिद्धः कथमन्यान् साधयेत्

ताम्रकुम्भोपमशिराः कोऽप्यासीत् खलतिः पुमान् ।
स च मूर्खोऽर्थवाल्लोके लज्जते स्म कचैर्विना ॥
अथ धूर्तस्तमागत्य कोऽप्युवाचोपजीवकः ।
एकोऽस्ति वैद्यो यो वेत्ति केशोत्पादनमौषधम् ॥
एतच्छ्रुत्वा तमाह स्म तमानयसि चेन्मम ।
ततोऽहं तव दास्यामि धनं वैद्यस्य तस्य च ॥
एवमुक्तवतस्तस्य धनं भुक्त्वाचिरेण सः ।
मुग्धस्यानीतवानेकं धूर्तो धूर्तचिकित्सकम् ॥
उपजीव्य चिरं सोऽपि खल्वाटं तं भिषक्छिरः ।
अपास्य वेष्टनं युक्त्या मुग्धायास्मायदर्शयत् ॥
तद् दृष्ट्वाप्यविमर्शः सन् वैद्यं केशार्थमौषधम् ।
तं ययाचे स जडधीस्ततो वैद्योऽब्रवीत् स तम् ॥
खल्वाटः स्वयमन्यस्य जनयेयं कथं कचान् ।
इति ते मूर्ख निर्लोम दर्शितं स्वशिरो मया ॥

तथापि त्वं न वेत्स्येव धिगित्युक्त्वा ययौ भिषक्।
एवं देव सदा धूर्ताः क्रीडन्ति जडबुद्धिभिः ॥

### स्वबुद्धिरेव मुग्धस्य वरं न त्वनुशासनम्

एवं श्रुतः केशमुग्धस्तैलमुग्धो निशम्यताम्।
मुग्धोऽभूत् पुरुषः कश्चिद् भृत्यः शिष्टस्य कस्यचित् ॥
स तेन स्वामिना तैलमानेतुं वणिजोऽन्तिकम्।
प्रेषितो जातु तत्तस्मात् पात्रे तैलमुपाददे ॥
तैलपात्रं गृहीत्वा तदागच्छंस्तत्र केनचित्।
ऊचे मित्रेण रक्षेदं तैलपात्रं स्रवत्यधः ॥
तच्छ्रुत्वा वीक्षितुमधः पात्रं तत् पर्यवर्तयत्।
स मूढस्तेन तत् सर्वं तैलं तस्यापतद् भुवि ॥
तद् बुद्ध्वा लोकहास्योऽसौ निरस्तः स्वामिना गृहात्।
तस्मात् स्वबुद्धिर्मुग्धस्य वरं न त्वनुशासनम् ॥

### अहो कृतपदा दूरे पतन्ति स्वपदे जडाः

अभूद्रूपवती कापि मुग्धा चण्डालकन्यका।
सार्वभौमवरप्राप्तौ संकल्पं हृदि साकरोत् ॥
सा जातु दृष्ट्वा राजानं नगरभ्रमनिर्गतम्।
सर्वोत्तमं भर्तृबुद्धेरनुयातुं प्रचक्रमे ॥
तावदागात् पथा तेन मुनिस्तप्य प्रणम्य सः।
पादौ गजावरूढः सन् राजा स्वभवनं ययौ ॥
तद्दृष्ट्वा राजतोऽप्येनं विचिन्त्य मुनिमुत्तमम्।
चण्डालकन्या राजानं त्यक्त्वा सा मुनिमन्वगात् ॥
मुनिः सोऽपि व्रजन् दृष्ट्वा शून्यमग्रे शिवालयम्।
न्यस्तजानुः क्षितौ तत्र शिवं नत्वा ययौ ततः ॥
तद्वीक्ष्य सान्त्यजा मत्वा मुनेरप्युत्तमं शिवम्।
भर्तृबुद्ध्या मुनिं त्यक्त्वा देवं तत्रैव शिश्रिये ॥

क्षणाच्चात्र प्रविश्य श्वा देवस्यारुह्य पीठिकाम् ।
जङ्घामुत्क्षिप्य जातेर्यत् सदृशं तस्य तद् व्यधात् ॥
तद्विलोक्यान्त्यजा मत्वा देवाच्छ्वानं तमुत्तमम् ।
यान्तं तमेवान्वगात् सा त्यक्त्वा देवं पतीच्छया ॥
श्वा चागत्यैव चण्डालगृहं परिचितस्य सः ।
चण्डालयूनः प्रणयाल्लुलोठैकस्य पादयोः ॥
तदालोक्योत्तमं मत्वा शुनश्चण्डालपुत्रकम् ।
स्वजातितुष्टा वव्रे सा तमेव पतिमन्त्यजा ॥
एवं कृतपदा दूरे पतन्ति स्वपदे जडाः ।
एवञ्च मूर्ख राजानं संक्षेपादपरं शृणु ॥

**नैवप्रोज्झति मूढोऽर्थान् यावदर्थैः स नोज्झितः**

मूर्खः कश्चिदभूद् राजा कृपणः कोपनानपि ।
एकदा जगतुश्चैवं मन्त्रिणस्तं हितैषिणः ॥
दानं हरति देवेह दुर्गतिं पारलौकिकीम् ।
तद्देहि दानमायूंषि भङ्गुराणि धनानि च ॥
तच्छ्रुत्वा स नृपोऽवादीद्दानं दास्याम्यहं तदा ।
दुर्गतिं प्राप्तमात्मानं मृतो द्रक्ष्यामि चेदिति ॥
ततश्चान्तर्हसन्तस्ते तूष्णीमासत मन्त्रिणः ।
एवं नोज्झति मूढोऽर्थान् यावदर्थैः स नोज्झितः ॥

**तुल्येऽपि स्निग्धतायोगे तैलं तैलं घृतं घृतम्**

राजभीतः श्रुतो देव मध्ये मिलद्वयं शृणु ।
बभूव चन्द्रापीडाख्यः कान्यकुब्जे महीपतिः ॥
तस्याभवच्च धवलमुखाख्यः कोऽपि सेवकः ।
बहिर्भुक्त्वा च पीत्वा च सदैव प्राविशद् गृहम् ॥
भुक्तपीतः कुतो नित्यमायासीति च भार्यया ।
पृष्टः स जातु धवलमुखस्तामेवमभ्यधात् ॥

सुहृत्पार्श्वादहं शश्वद् भुक्त्वा पीत्वा च सुन्दरि ।
सदैवायामि येनास्ति लोके मित्रद्वयं मम ॥
कल्याणवर्मनामैको भोजनाद्युपकारकृत् ।
द्वितीयो वीरबाहुश्च प्राणैरप्युपकारकः
एवं श्रुत्वैव धवलमुखोऽसौ भार्यया तया ।
ऊचे मित्रद्वयं तन्मे भवता दर्श्यतामिति ॥
ततो ययौ स तद्युक्तस्तस्य कल्याणवर्मणः ।
गृहं सोऽपि महार्हैस्तमुपचारैरुपाचरत् ॥
अन्येद्युः स ययौ वीरबाहोर्भार्यायुतोऽन्तिकम् ।
स च द्यूतस्थितः कृत्वा स्वागतं तं विसृष्टवान् ॥
ततोऽब्रवीत् सा धवलमुखं भार्या सकौतुका ।
कल्याणवर्मा महतीं सत्क्रियामकरोत्तव ॥
कृतं स्वागतमात्रन्तु भवतो वीरबाहुना ।
तदार्यपुत्र तं मित्रं मन्यसेऽभ्यधिकं कथम् ॥
तच्छ्रुत्वा सोऽब्रवीद् गच्छ मिथ्या तौ ब्रूह्युभौ क्रमात् ।
राजा नः कुपितोऽकस्मात्ततो ज्ञास्यस्यथ स्वयम् ॥
इत्युक्त्वा तेन गत्वैव सा तथेति तदैव तत् ।
कल्याणवर्मणेऽवोचत् स श्रुत्वैव जगाद ताम् ॥
भवत्यहं वणिक्पुत्रो ब्रूहि राज्ञः करोमि किम् ।
इत्युक्ता तेन सा प्रायाद् वीरबाहोरथान्तिकम् ॥
तस्यै तथैव साशंसद् राजकोपं स्वभर्त्तरि ।
स श्रुत्वैवाययौ धावन् गृहीत्वा खड्गचर्मणी ॥
मन्त्रिभिर्वारितः कोपाद् राजासौ तद् व्रजेति तम् ।
वीरबाहुं स धवलमुखोऽथ प्राहिणोद् गृहम् ॥
एवं तदन्तरं तन्वि मित्रयोरेतयोर्मम ।
इति भार्याथ धवलमुखेनोक्ता तुतोष सा ॥

इत्यन्यदुपचारेण मित्रमन्यत्तु सत्यतः ।
तुल्येऽपि स्निग्धतायोगे तैलं तैलं घृतं घृतम् ॥
इत्याख्यया कथामेतां मन्त्री मुग्धकथाः क्रमात् ।
नरवाहनदत्ताय गोमुखोऽकथयत् पुनः ॥

## मूढपथिकः

कश्चिन्मुग्धोऽध्वगस्तीर्त्वा कृच्छ्रात्तृष्णातुरोऽटवीम् ।
नदीं प्राप्यापि न पपौ वीक्ष्यास्के परं जलम् ॥
तृषितोऽपि पिबस्यम्भः किं नेत्युक्तोऽत्र केनचित्
इयत् कथं पिबामीति मन्दबुद्धिरुवाच तम् ॥
किं दण्डयति राजा त्वां सर्वं पीतं न चेत्त्वया ।
इति तेनोपहसितोऽप्यम्बु मुग्धः स नापिबत् ॥
एवं न शक्नुवन्तीह यद् यत् कर्तुमशेषतः ।
यथाशक्ति न तस्यांशमपि कुर्वन्त्यबुद्धयः ॥

## पुत्रघाती

जलभीतः श्रुतो देव श्रूयतां पुत्रघात्ययम् ।
बहुपुत्रो दरिद्रश्च मूर्खः कश्चिदभूत् पुमान् ॥
स एकस्मिन् मृते पुत्रे द्वितीयमवधीत् स्वयम् ।
कथं बालोऽयमेकाकी पथि दूरे व्रजेदिति ॥
ततः स निन्द्यो हास्यश्च देशान्निर्वासितो जनैः ।
एवं पशुश्च मूर्खश्च निर्विवेकमती समौ ॥

## भ्रातृभौतः

श्रुतस्त्वया पुत्रघाती भ्रातृभौतमिमं शृणु ।
जनमध्ये कथाः कुर्वन् कोऽप्यासीत् क्वापि मुग्धधीः ॥
स भव्यं पुरुषं दूराद् दृष्ट्वा मूर्खोऽब्रवीदिदम् ।
एष मे भवति भ्राता रिक्थमस्य हराम्यतः ॥

अहन्तु कश्चिन्नैतस्य तेन नैतद्दणं मम ।
इत्युक्तवान् स मूढोऽत्र पाषाणानप्यहासयत् ॥
एवं मूढस्य मूढत्वं स्वार्थान्धस्यातिचित्रता ।

### ब्रह्मचारिसूतः

भ्रातृभीतः श्रुतो देव ब्रह्मचारिसुतं शृणु ॥
कश्चित् पितृगुणाख्यानप्रवृत्तसखिमध्यगः ।
मुग्धः स्वपितुरुत्कर्षं वर्णयन्नेवमभ्यधात् ॥
आ बाल्याद् ब्रह्मचारी मे पिता नान्योऽस्ति तत्समः ।
तच्छ्रुत्वा त्वं कुतो जात इति तं सुहृदोऽब्रुवन् ॥
मानसोऽहं सुतस्तस्येत्येवं पुनरपि ब्रुवन् ।
विशेषतो विहसितः स तैर्जडशिरोमणिः ॥
अत्यारूढं वदन्त्येवमसंबद्धं जडाशयाः ।
ब्रह्मचारिसुतं श्रुत्वा श्रूयतां गणकोऽप्ययम् ॥

### गणकशिरमणिः

बभूव नामगणकः कश्चिद्विज्ञानवर्जितः ।
स भार्यापुत्रसहितः स्वदेशाद् वृत्त्यभावतः ॥
गत्वा देशान्तरं चैवं मिथ्याविज्ञानमात्मनः ।
कृतकप्रत्ययेनार्थपूजां प्राप्तुमदर्शयत् ॥
परिष्वज्य सुतं बालं स तं सर्वजनाग्रतः ।
रुरोद पृष्टश्च जनैरेवं पापो जगाद सः ॥
भूतं भव्यं भविष्यच्च जानेऽहं तदयं शिशुः ।
विपत्स्यते मे दिवसे सप्तमे तेन रोदिमि ॥
इत्युक्त्वा तत्र विस्माप्य लोकं प्राप्तेऽह्नि सप्तमे ।
प्रत्यूष एव सुप्तञ्च स व्यापादितवान् सुतम् ॥
दृष्ट्वाथ तं मृतं बालं सञ्जातप्रत्ययैर्जनैः ।
पूजितो धनमासाद्य स्वदेशं स्वैरमाययौ ॥

इत्यर्थलोभान्मिथ्यैव विज्ञानख्यापनेच्छवः ।
मूर्खाः पुत्रमपि घ्नन्ति न रज्येत्तेषु बुद्धिमान् ॥

**प्रकटमपि दोषं स्वं नैव बुध्यन्ते बालिशाः**

अयञ्च श्रूयतां मूर्खः क्रोधनः पुरुषः प्रभो ।
बहिः स्थितस्य कस्यापि पुंसः कुत्रापि शृण्वतः ॥
अभ्यन्तरे गुणान् कश्चिच्छशंस स्वजनाग्रतः ।
तदा चैकोऽब्रवीत्तत्र सत्यं स गुणवान् सखे ॥
किन्तु द्वौ तस्य दोषौ स्तः साहसी क्रोधनश्च यत् ।
इतिवादिनमेवैतं बहिर्वर्त्ती निशम्य सः ॥
पुमान् प्रविश्य सहसा वाससावेष्टयद् गले ।
रे जाल्म साहसं किं मे क्रोधः कश्च मया कृतः ॥
इत्युवाच च साक्षेपं पुमान् क्रोधाग्निना ज्वलन् ।
ततो हसन्तस्तत्रान्ये तमूचुः किं ब्रवीत्यदः ॥
प्रत्यक्षदर्शितक्रोधसाहसोऽपि भवानिति ।
एवं स्वदोषः प्रकटोऽप्यज्ञैर्दैव न बुध्यते ॥

**कन्यावर्धयिता नृपः**

इदानीं श्रूयतां मुग्धः कन्यावर्द्धयिता नृपः ।
राजाभूत् कोऽपि कन्यैका सुरूपाजनि तस्य च ॥
स वर्द्धयितुकामस्तामतिस्नेहेन सत्वरम् ।
वैद्यानानीय नृपतिः प्रीतिपूर्वमभाषत ॥
सदौषधप्रयोगं तं कञ्चित् कुरुत येन मे ।
सुतैषा वर्द्धते शीघ्रं सद्भर्त्रे च प्रदीयते ॥
तच्छ्रुत्वा तेऽब्रुवन् वैद्या उपजीवयितुं जडम् ।
अस्त्यौषधमितो दूरात्तत्तु देशादवाप्यते ॥
आनयामश्च यावत्तत्तावद्दैव सुता तव ।
अदृश्या स्थापनीयैषा विधानं तत्र हीदृशम् ॥

इत्युक्त्वा स्थापयामासुश्छन्नां ते तां नृपात्मजाम् ।
संवत्सरानत्र बहूनौषधप्राप्तिशंसिनः ॥
यौवनस्थां च तां प्राप्तामौषधेन प्रवर्द्धिताम् ।
ब्रुवाणा दर्शयामासुः सुतां तस्मै महीभृते ॥
सोऽपि तान् पूरयामास वैद्यांस्तुष्टो धनोच्चयैः ।
इति व्याजाज्जडधियो धूर्तैर्भुज्यन्त ईश्वराः ॥

## पणव्ययेन काकिणीलाभः

अयं चाकर्ण्यतामर्द्धपणोपार्जितपण्डितः ।
अभून्नगरवास्येकः पुमान् प्रज्ञाभिमानवान् ॥
ग्रामवासी च तस्यैकः पुमान् संवत्सरावधि ।
भृतको भृत्यसन्तोषादापृच्छ्य स्वगृहं ययौ ॥
गते तस्मिंश्च पप्रच्छ भार्यां तन्वि गतः स मा ।
त्वत्तः किञ्चिद् गृहीत्वेति साप्यर्द्धपणमभ्यधात् ॥
ततो दशपणान् कृत्वा पाथेयं स नदीतटे ।
गत्वा स्वभृतकात्तस्मात्तमर्द्धपणमानयत् ॥
तच्चार्थकौशलं शंसन् स ययौ लोकहास्यताम् ।
एवं बहु क्षपयति स्वल्पस्यार्थे धनान्धधीः ॥

## समीचीनमभिज्ञानम्

अथेदानीमभिज्ञानकर्त्ता स श्रूयतां प्रभो ।
कस्यचिद् यानपात्रेण मूर्खस्य व्रजतोऽम्बुधौ ॥
राजतं भाजनं हस्तादपतत्तज्जलान्तरे ।
स तत्र मूर्खोऽभिज्ञानमावर्त्तादिकमग्रहीत् ॥
आगच्छन्नुद्धरिष्यामि तदितोऽब्धिजलादिति ।
पारं प्राप्याम्बुधेस्तीर्णो दृष्ट्वावर्त्तादि वारिणि ॥
ममज्ज भाजनं प्राप्तुमभिज्ञानधिया मुहुः ।
पृष्टश्चोक्ताशयः सोऽन्यैरुपाहस्यत धिक्कृतः ॥

अहो मूढप्रभुर्वेत्ति निग्रहं नाप्यनुग्रहम्

एवञ्च शृणुतेदानीं प्रतिमांसप्रदं नृपम् ।
मुग्धः कोऽपि नृपोऽपश्यत् प्रासादाद् द्वावथो नरौ ॥
तयोरेकेन च हृतं मांसं दृष्ट्वा महानसे ।
पञ्च मांसपलान्यङ्गात्तस्य हर्त्तुर्व्यकर्त्तयत् ॥
उत्कृत्तमांसं क्रन्दन्तं दृष्ट्वा तं पतितं भुवि ।
जातानुकम्पो राजासौ प्रतीहारं समादिशत् ॥
छिन्ने पञ्चपलीमांसे नास्य शाम्यति सा व्यथा ।
तदतोऽप्यधिकं मांसममुष्मै दीयतामिति ॥
किं जीवति शिरश्छिन्नो दत्तैरथ शिरःशतैः ।
दास्यामि देवेत्युक्त्वा स चत्ता गत्वाहसद् बहिः ॥
तं समाश्वास्य वैद्येभ्यः कृत्तमांसं समर्पयत् ।
एवं मुढप्रभुर्वेत्ति निग्रहं नाप्यनुग्रहम् ॥

ध्रुवपरित्यागेनाध्रुवनिषेवणम्

इयं चाकर्ण्यतां मन्दा स्त्री पुत्रान्तरकाङ्क्षिणी ।
एकपुत्रां स्त्रियं काञ्चिदन्यपुत्राभिकाङ्क्षया ॥
पृच्छन्तीमब्रवीत् काचित् पाखण्डा क्षुद्रतापसी ।
योऽयं पुत्रोऽस्ति ते बालस्तं हत्वा देवताबलिः ॥
क्रियते चेत्ततोऽन्यस्ते निश्चितं जायते सुतः ।
एवं तयोक्ता यावत् सा तत्तथा कर्त्तुमिच्छति ॥
तावद् बुद्ध्वा हितान्या स्त्री वृद्धा तामवदद् रहः ।
हंसि पापे सुतं जातमजातं प्राप्तुमिच्छसि ॥
यदि सोऽपि न जातस्ते ततस्त्वं किं करिष्यसि ।
इत्यवार्यत सा पापादार्यया वृद्धया तया ॥
एवं पतन्त्यकार्येषु शाकिनीसंगताः स्त्रियः ।
वृद्धोपदेशेन तु ता रक्ष्यन्ते कृतयन्त्रणाः ॥

## सत्त्वानुरूपं सर्वस्य धाता सर्वं प्रयच्छति

अन्तरा चात्र शृणुत भ्रातृद्वयकथामिमाम् ॥
ब्राह्मणौ भ्रातरावास्तां पुरे पाटलिपुत्रके ।
यज्ञसोम इति ज्येष्ठः कीर्त्तिसोमोऽस्य चानुजः ॥
पित्र्यं चाभूद् धनं भूरि तयोर्ब्राह्मणपुत्रयोः ।
कीर्त्तिसोमो निजं भागं व्यवहारादवर्द्धयत् ॥
यज्ञसोमस्तु भुञ्जानो ददच्चाप्यनयत् क्षयम् ।
ततः स निर्धनीभूतो निजां भार्यामभाषत ॥
प्रिये धनाढ्यो भूत्वाहमिदानीं निर्धनः कथम् ।
वसामि मध्ये बन्धूनां तद् विदेशं श्रयावहै ॥
पाथेयेन विना कुत्र याव इत्युदिते तया ।
निर्बन्धं स यदा चक्रे तदा भार्या तमाह सा ॥
अवश्यं यदि गन्तव्यं तद् गत्वा कीर्त्तिसोमतः ।
मृगयस्व धनं किञ्चित् पाथेयमनुजादिति ॥
ततो गत्वानुजं यावत् पाथेयं तं स मार्गति ।
तावत्तदनुजः सोऽत्र जगदे भार्यया स्वया ॥
क्षपितस्वधनायास्मै वयं दद्मः कुतः कियत् ।
य एव हि दरिद्रः स्यात् स एवास्मान् भजिष्यति ॥
श्रुत्वैतत् कीर्त्तिसोमोऽसौ भ्रातृस्नेहान्वितोऽपि सन् ।
नैच्छद्दातुं किमप्यस्मै कष्टा कुस्त्रीषु वश्यता ॥
यज्ञसोमस्ततस्तूष्णीं गत्वा पत्न्यै निवेद्य तत् ।
तया सह प्रस्थितवान् दैवैकशरणस्ततः ॥
गच्छन् प्राप्तोऽटवीं दैवान्निगीर्णोऽजगरेण सः ।
तद्भार्या च तदालोक्य चक्रन्द पतिता भुवि ॥
किमाक्रन्दसि भद्रे त्वमिति मानुषभाषया ।
सा तेनाजगरेणोक्ता ब्राह्मणी निजगाद तम् ॥

न क्रन्दामि कथं यस्मान्महासत्त्व मम त्वया ।
दुःखिताया विदेशेऽद्य हा भिक्षाभाजनं हृतम् ॥
तच्छ्रुत्वाजगरो वक्त्रादुद्गीर्यास्यै ददौ महत् ।
स्वर्णपात्रं गृहाणेदं भिक्षाभाण्डमिति ब्रुवन् ॥
को महाभाग भिक्षां मे दास्यत्यस्मिन् स्त्रिया इति ।
उक्तस्तया सद्ब्राह्मण्या जगादाजगरश्च सः ॥
न दास्यत्यर्थितो योऽत्र भिक्षां ते तस्य तत्क्षणम् ।
शतधा यास्यति शिरः सत्यमेतद् वचो मम ॥
तच्छ्रुत्वा ब्राह्मणी सा तमुवाचाजगरं सती ।
यदेवं तत्त्वमेवात्र भर्तृभिक्षां प्रयच्छ मे ॥
इत्युक्तमात्रे ब्राह्मण्या तया सोऽजगरो मुखात् ।
उज्जगाराक्षतं यज्ञसोमं जीवन्तमेव तम् ॥
तमुद्गीर्यैव सपदि दिव्यः सोऽजगरः पुमान् ।
परितुष्टश्च तौ हृष्टौ दम्पती निजगाद सः ॥
अहं काञ्चनवेगाख्यो विद्याधरमहीपतिः ।
सोऽहं गौतमशापेन प्राप्तोऽस्म्याजगरीं गतिम् ॥
साध्वीसंवादपर्यन्तः स च शापो ममाभवत् ।
इत्युक्त्वा हेमपात्रञ्च रत्नैरापूर्य तत्क्षणात् ॥
विद्याधरेश्वरो हृष्टः खमुत्पत्य जगाम सः ।
तौ चाययतुरादाय रत्नौघं दम्पती गृहम ॥
तत्रास्त यज्ञसोमोऽथावक्षयाप्तधनः सुखम् ।
सत्त्वानुरूपं सर्वस्य धाता सर्वं प्रयच्छति ॥

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| February 1934. | १८५६ शकीये माघे<br>१७श-वर्षस्य १०म-संख्या | Vol. XVII No. 10 |


## राजसूयम्

गोविन्दमानन्दरसैकसान्द्रमावन्द्य नारायणभूसुरेन्द्रः।
निर्माति धर्मात्मजराजसूयसंपन्मयं सम्प्रति चम्पुकाव्यम् ॥१॥

कामं भीमार्जुनाद्यै रजितपृथुमहोवर्द्धितैरुद्धतानां
पृथ्वीशानां जयेन प्रसभमुपहृते निस्तुले वित्तराशौ।
तद्वृत्तं धर्मसूनुस्सपदि परममित्राय भर्त्रे यदूना-
मावेद्य व्यासमुख्यैस्सममभृत परद्रव्यवद्द्रव्यभारम् ॥२॥

भगवानपि भुवनानुग्रहैकदीक्षितस्सततवीक्षितनिखिलवृत्तान्तोऽपि तदुदन्त-निशमनानन्तरमेव निखिलात्मकस्य स्वस्यैव वरिवस्याहेतोरधिकदुस्साधस्य समस्तामरमुनिमनुजस्तोमसंप्रीतिसंभावनीयस्य सप्ततन्तुप्रवरस्य संसाधन-मिषेण तत इतस्समामिलितबहुतरसुकृतोत्तरजननयनहृदयेषु चिदानन्दा-मृतरसलहरीं विकरीतुमनाः सकलहरिदन्तसन्ततां विभूतिमुपसंहृत्य पाण्डवपुरमेव मण्डयन्तीं महालक्ष्मीं वासकसज्जिकामिवाभिसर्तुकामस्तथा-विधमहोत्सवसमुचितवेषभूषादेदीप्यमानयदुनृपसुतप्रनाशतावृतसपरिकरसक-

लमहिषीगणपरिवीयमाणस्सुरपुरदुर्लभनिजलक्ष्मीहल्लोहलतुल्यविभवं पृथुतरपृथासुतप्रणयभारसमुचितमतुलमणिगणबहुलमतिविविधमुपदापदार्थसार्थमुद्वाहयन् कुशस्थलीपुरस्थलादभिप्रस्थाय हरिप्रस्थनगरीमभूतपूर्वपरमाडम्बरोचितवादित्रघोषसंपदाकंपितभुवनावकाशस्समाससाद ॥

कुतूहलसमाकुलैस्तदनु शुश्रुवे पाण्डवै-
श्चिराय परिवाञ्छितस्स खलु पाञ्चजन्यध्वनिः।
मुरारिसुषमाकरीममृतपायमापास्यतां
विरोधि दुरितं नृणां पुरत एव धून्वन्निव ॥३॥

तदा च दरोदरोदीर्णपुरोदरापूर्णगभीरमधुरनिनादविचालितकूलंकषकुतूहलाकुलितहृदन्तरैर्निरन्तरसमधिरूढसौधाङ्गणतुङ्गगोपुरमालैः पुरीगतनरपुरन्ध्रीजालैरापादचूडमापीयमानतापिञ्छमञ्जरीमञ्जुलकान्तिपीयूषभूमा चामीकरश्यामीकरणनिपुणसुषमाभरसुषमाङ्कभङ्गितरङ्गिताभिराममञ्जुलमणिशिबिकासमारूढाभिः षोडशसहस्राधिकवल्लभाभिरुल्लसितोपशल्यश्चटुलतडिल्लतापरीत इव तरुणाम्बुवाहः कनकलतिका-निकरपरिगत इव सुरलोकशाखी विपुलबलकदम्बडम्बरविजृम्भितरेणुनिकुरुम्बसम्बाधनिपीताम्बरः पीताम्बरः पाण्डवहृदयमिव विशालसुभगतरं नगरप्रवरं प्रविवेश ॥ तत्र च वर्तमाने मर्त्योत्तमवेषस्य नित्येश्वरस्य तत्तादृशमत्तकाशिनीरत्नैस्समं प्रत्यासीदतः प्रत्यग्रदर्शनमहोत्सवे

चित्रं भो रूपमासां बत पुनरमुना संगमे भाग्यसीमा
सर्वागारेष्वजस्रं किल रतिजनके हन्त सौभाग्यभूमा।
पश्येमाः पश्य शौरिं शिवमिव भुवनानन्दनं कान्तिसीम्ना
दिष्ट्या दृष्ट्योरवाप्तं फलमिति सुदृशां प्रोद्गता वाग्विलासाः ॥४॥

आसामेकाऽपि नाकारिषि बत किमहं भाग्यपात्रं विधात्रा
हा हन्तैतत्पदाब्जद्वयमपि कुचयोरेकदा योजयेयम्।

स्वप्नेऽप्येनं कदा वा दृढतरमुपगूहामि हा मे दुराशा
कृष्णस्याऽऽपीय रूपामृतमिति महिला मोहं हा हन्त याताः ॥५॥

ततश्च संभ्रमप्रमोदताण्डवितहृदयैः पाण्डवेयैः व्यासधौम्यपुरोगैः सम्यगभिगम्य सम्मानपूर्वकं पुराभ्यन्तरमुपनीते समस्तहरित्तटाहृतप्राभृतप्रकरपरिहासिनमिव मुक्तामणिप्रचुरं वित्तराशिं दत्तवति विलसदष्टापदविष्टरनिविष्टे विष्टरश्रवसि परिहृष्टपार्वतीमाधवीसाधुतरमाननसमानन्दितासु विशालमणिशालाशतनिवेशितासु स्वपुरीनिवासादपि प्रसेदुषीषु परमपुरुषमहिषीषु यथासुखं निवेशितासु च यदुपृतनासु—

अस्पूर्यमिव सूर्येण निवातमिव वायुना ।
अतोयमिव वर्षेण हरिणा तत्पुरं बभौ ॥६॥

सुखोपविष्टं भुवनप्रकृष्टं पुमांसमेत्य स्वजनाभिजुष्टः ।
नृपो निविष्टोऽस्य पदाब्जमूले स्वयं गरिष्ठां गिरमावभाषे ॥७॥

वित्तं देव भवत्कृपार्जितमिदं कृत्स्नं त्वयि प्रार्पितं
युक्तं तद्विनियुज्यतां तव कलारूपेषु देवादिषु ।
कर्तव्ये च नियुङ्क्ष्व भृत्यमपि मां द्रष्टासि सर्वं प्रभो
कर्ता कारयिता प्रसीदसि फलं दत्से च निस्संशयम् ॥८॥

उक्तवन्तमिति भक्तवत्सलं श्रावयन्नथ सभासदो जनान् ।
व्याजहार दशनांशुमण्डलव्याजहारशबलीकृताकृतिः ॥९॥

धर्मात्मन् भवता जिता त्वयि परं जागर्ति लक्ष्मीरियं
त्वां कर्तारमुपेत्य सोऽद्य लसतु श्रीराजसूयाध्वरः ।
मामाज्ञाकरमेव ते विजयवद् विज्ञाय यज्ञोद्यमं
कुर्वीथास्त्वमदृष्टपूर्वविधया तं साधयिष्याम्यहम् ॥१०॥

इत्थंवादिनि विश्वनेतरि भृशं पार्थः कृतार्थीकृत-
स्तद्वाचा प्रजिघाय भूसुरनृपव्रातेषु दूतोत्करान् ।
प्राप्तानामिह सार्धवत्सरसुखावासक्षमानालयान्
क्षिप्रं कल्पयितुं च शिल्पिनिवहानल्पेतरानभ्यधात् ॥११॥

तद्वचःश्रवणसत्वरोद्यतक्षिप्रकारिबहुशिल्पिवैभवात् ।
निष्ठितैव ददृशे गृहावली विष्टपालिरिव विष्णुवैभवात् ॥१२॥
संप्राप्तो नकुलोऽथ हास्तिनपुरीं प्रज्ञादृशं तं नृपं
भीष्मद्रोणकृपादिकान् प्रमुदितान् कर्णान्वितान् कौरवान् ।
सर्वानादरपूर्वमानयदसौ राजाऽपि सम्मानय-
न्नेनानेधितसाधुभोगविभवेष्वावासयद्धामसु ॥१३॥
वृष्णीन्द्राश्च बलोग्रसेनवसुदेवाग्र्यास्समग्रादराः
संप्राप्ताश्शिशुपालपौण्ड्रकमुखाश्चान्येऽपि मान्या नृपाः ।
पूर्वप्राप्तविराटपार्षतमुखैर्भूपेन चात्यादृता-
स्तेऽपि स्वोचितवैभवानि भवनान्यापुश्चमूभिर्वृताः ॥१४॥
ये भूपा बन्धमुक्ता मगधनृपगृहात्तेऽपि कृष्णांघ्रिभक्ति-
स्फायानूत्थायिपार्थप्रणयपरवशाः स्वस्वराज्यात्सिहृष्टाः ।
भूपावेषैरपूर्वां तनुमिव दधतो वाहयन्तो धनौघा-
नापुः पादाग्रजाग्रन्निगलकिणकणैस्तत्क्षणे लक्ष्यभेदाः ॥१५॥
सर्वे निर्वैरगर्वा विविधपरिकरा स्ववैमुर्वीशमुख्याः
सस्त्रीपुत्रास्सुशस्त्रोज्ज्वलविपुलबला दूतहूतास्समेताः ।
धर्मात्मा धर्मजन्मा मदुपहृतधनेनैव तं यज्ञवर्गं
निर्वोढुमीष्टामिति च विचकृपुः स्पर्धया वित्तभारान् ॥१६॥
पाण्ड्यः पाटीरकूटान् मरिचपुरुचयान् केरलोऽवन्तिराजो
लक्षं योपाश्च भूपाशुभितमणिमहःकुन्तलाः कुन्तलेशः ।
काशीशोऽशीतिसाहस्रकमदित गवां कीकटेशश्च कोटिं
चीनेशः पट्टभेदान् गजरथतुरगान् भूरि सौवीरवीरः ॥१७॥
काम्बोजः कम्बलौघान् मृगमदघनसारादिभाण्डानि पौण्ड्रो
वङ्गः पर्यङ्कवर्यान् नियुतमथ कलिंगोऽपि भृङ्गारसंघान् ।
सौराष्ट्रो भारलक्षं धवलगुलसिताश्शैलजास्तैलकुम्भान्
कोटिं मारन्दकुंभानयुतमपि घृतं कुंभकोट्या च नन्दः ॥१८॥

हृतिव्राताच्छकोघैस्सह स हि भगदत्तोऽहरन्मालवेन्द्रो
गोधूमद्रोणकोटिं सममगरुघटाजातितक्कोलभारैः ।
सर्वेऽपि स्वर्णरत्नान्युरुतरमहरन् द्वारतो वारिताश्च
प्रापुः कृच्छ्रात् प्रवेशं कथितनिजनिजप्राभृता भूभृतोऽपि ॥१६॥

केऽपि स्फायद्धनायाः कतिचिदतिरसप्राज्यसाज्यादिभोज्य-
स्वाराज्याशाः परे तु स्फुटयितुमनसो यज्ञविज्ञानदाक्ष्यम् ।
केचिद्गोविन्दसन्दर्शनविवशधियः केऽपि विद्वद्वितण्डा-
रक्ता विप्रास्समीयुर्विविधगुणकदंबावलंबाः कुटुम्बैः ॥२०॥

ततश्च दिदृक्षाबुभुक्षाधनजिघृक्षादिरसान्तद्धदन्तचतुरन्तपर्यन्तधरान्तराल-मुहुर्मुहुरापतयालुसबालवृद्धसर्वचातुर्वर्ण्यजनपरिपूर्णे नगरदेशे हविर्जि-घृक्षाद्भुतदिदृक्षासमाक्षिप्तहृदयसर्वगीर्वाणगन्धर्वसिद्धचारणनागयक्षरक्षोगणनिर-वकाशे चोपरि देशे तद्विमर्दपरिहरणायेव गगनांगणात् नगरभुव-मवतीर्णेषु भूरिधामसु नारदादिमुनिषु ततोऽपरमहर्षिषु च परमहर्षिषु सशिष्यनिवहेष्वप्यशिष्यमहिमसु सदारकेष्वप्यंहसां विदारकेषु चतुर्दशभुवन-गतजनधननिखिलपदार्थसार्थनिर्भरगर्भतया पद्मनाभकुक्षिरिव लक्ष्यते स्म यक्ष्यमाणस्य नृपतेर्नगरी ।

नेमुर्भूमिभृतो नृपं भृतधना भूपोऽनमद् भूसुरान्
द्रष्टुं सम्मिलिता जनास्समनमन् भूपं द्विजा भूपतीन् ।
प्राप्तान् प्राक्तननारदादिकमुनिस्तोमान् प्रणेमुस्समं
भूपो भूमिभुजो द्विजाश्च जनतास्ते नेमुरेकं हरिम् ॥२१॥

हन्तानन्तादिगन्तान्मिलितमुरुविधं वीक्ष्य भूपालचक्रं
स्मृत्वाऽन्तः पार्थवश्यं क्षितितलमखिलं कौरवः प्राप तापम् ।
एतावान् भूमिभारस्थित इति मतवान् माधवो नारदोऽपि
त्वेतावत्सारशेषैः कुरुरणमनुसञ्चिन्त्य रोमाञ्चितोऽभूत् ॥२२॥

तत्र च निखिलमहीपतिमहीसुरमहाजनमुनिसभाजननियुक्तसमस्त-कार्यभरसहसहदेवसमनुचोदितामात्यभृत्यादिसर्वधूर्वहजनपूर्वतरसंभृतसंभावना-

आस्तां व्यञ्जनपुञ्जसाधनसमादित्सुर्युयुत्सुस्सदा
द्रौणिर्दानकृतौ रतोऽस्तु विदुरः प्रेक्षेत सूक्ष्मव्ययान् ।
भूपान् रञ्जय सञ्जयाऽऽचर मम प्रीत्यै सदा सात्यके
सर्वान् किं पृथगालपामि सकलैर्निर्वाह्यतामध्वरः ॥२६॥

इत्यभिधाय तत्समयोचितमनोऽनुकूलभूषणादिपदार्थैर्विशेषतः कर्मोन्मुखानां सम्मानकर्म निर्मायमेव निर्माय धर्मात्मजन्मनि निवृत्ते प्रवृत्ते च तदुत्तरवासरे समस्तैरपि प्रधाननियुक्तैरितरैश्च निजनिजोचिततत्तदधिकारग्रहणे जातत्वरैः प्रातस्तरामातस्तरे पाकादिशाला ॥ वितेने च वृकोदरप्रचोदितैः पाकचातुरीभरादरातिशयमेदुरैः सूदराशिभिर्धनञ्जयसंगरप्रसंगशंकरोपदीकृतकैलासशैलतुंगशृंगसंघशंकाकरा नयनप्रमोदना महौदनराशयः ॥

गुणैर्गुणाढ्यैस्स गुणात्मकः कृतोऽ-
प्यतीव मुख्योऽजनि भोज्यसञ्चयः ।
कृतोऽपि सव्यञ्जनसन्धिकोविदै-
र्बभार साधुस्वरसंहितोदयम् ॥२७॥

सुपापचैः पावकरूढपत्रिका-
चलाचलस्वाग्रकरैश्चराचरैः ।
मिथोऽतिसम्यग्रचनावदावदै-
र्जना रसांभोधिपतापताः कृताः ॥२८॥

तत्र च पाकशासनप्रणिहितहृदयफल्गुनाग्रजप्रीत्या गोत्रारिणा प्रेरितैरिवामृतसारपारिजातमकरन्दादिभिर्निर्व्यूढेषु सर्वपात्रीणेषु विविधभर्ज्जननिर्जिह्मानपरिमलासज्जितनिखिलनासिकारञ्जनेषु व्यञ्जनेषु व्यञ्जितोत्साहमहमहमिकया महीपतिष्वेव तत्तत्कार्यसमुद्धरेष्वञ्जसा कृताभ्यञ्जनमहानन्दिनि मिहिरनन्दिनीविहतमहितस्नाने मानुषजाले नीलच्छायदृश्यमानगगनवितानावरोपणेनेव विरचितायां विस्तीर्णतरभुक्तिशालायामत्यादरमुपहूते यथोचितपादावनेजनादिपूर्वतरवितीर्णहिमांबुकीर्णदिव्यांगरागमाल्यतल्लजवर्ण-

मानगन्धपूर्णे दिगन्तराले तरुणतरणिमण्डललक्ष्मलक्षकाञ्चनभाजनाञ्चितानाम् पंक्तिषु मणिपीठिकागणमुनिविष्टे परिहृष्टे परिघृष्टवेषधृष्टत्र्यक्षानुकूल-द्रुपदराजसपरितोषपरिगृहीतपरिवेषणकृत्यं प्रमुदितभीष्मद्रोणादिसमवेक्ष्य-माणं यादवकुलमिव मधुराज्यासङ्गविवर्धितं वर्षावनमिव सज्जातिकादल-जनितामोदं शिशिरजृम्भितमिव परिबृंहितच्छुहतिकाग्रहणरसं रसिक-सभान्तरमिव सरसवार्त्ताकविकृतिविलोभनीयं समुद्रोदरमिव बहुरस रुचिमद्दूलसिताभोगं समुज्ज्वलान्नमयतारकापुञ्जरागातिरेकापतितराकेन्दुबिम्ब-कदम्बबिम्बोकधरसितोज्ज्वलपर्पटप्रकरतर्पितनयनरसनं विविधस्वाद्यपेयलेह्यादि-तेमनगणामृतरसातिगामिस्वादिमसीमाकामाधिकास्वादनकर्णेघ्राणसमयसमालि-ह्यमानकटुकाम्लरसनिष्पानपुष्टानन्दव्यतिकरविवशतया विजिन्त्यमानमधुररस-मात्रघृताशसुधाशनकुलचरितं निखिलजनघृतस्यामधुस्वादधिस्यादिपरिपूरण-भूरिपरिश्राम्यदारालिकपालिकाजनाकुलमशोनपिबतं स्वादतमोदत तृप्यत तृप्यतमङ्गुतनरमभ्यवहारचरित्रमवर्तिष्ट ॥

आगच्छन्त्ववधिभुक्तिशालमशनायन्तो दिगन्तागताः
किं दध्यस्त्यथ किं घृतस्त्यथ किमु क्षीरस्त्यथ क्ष्मामराः ।
इत्थं स्वादततृप्यतामु चतुरे सूदोत्करे पृच्छति
स्त्रायत्तेमनचारुजेमनभरं ते बोभुजाञ्चक्रिरे ॥२९॥

भूपास्त्विन्धनबन्धनाहृतिजनस्कन्धानयस्नापना
गन्धोन्मर्दनमार्जनोक्षणसुगन्धासेकवासोऽर्पणैः ।
पंक्त्यारोपणनालवृन्तजलदानोच्छिष्टहानोल्लल-
च्छय्यासंस्तरणादिकैरपि मुदामभ्येयुरल्पेतराम् ॥३०॥

तत्तादृशासनरसावसितौ विराज-
च्छय्यासनादिजुपि दिव्यसभाप्रदेशे ।
ताम्बूलमाल्यमुखभोगविनोदयोगैः
र्मिश्रे विशश्रमुरपश्रममेव सर्वे ॥३१॥

हैमी सर्वा गृहाली कनकविरचितास्तोरणास्तालकल्पाः
स्वल्पं वा भूरि खारीमितमपि कलधौतोत्थमेवात्र पात्रम् ।
शय्याः कौशेयमय्यः कनकविरचिताः खट्विका नादुकूलं
नारत्नं नाप्यहैमं कुहचन ददृशे तत्पुरे वस्तुजालम् ॥३२॥

एवं प्रत्यहमेव तत्र सुमहारम्भे महे प्रस्तुते
सर्वैरेव धुरन्धरैः प्रववृते वीतप्रमादश्रमैः ।
भीष्मद्रोणमुखाः कृताकृतसमीक्षादीनकार्षुस्स्वयं
ये त्वन्ये धृतराष्ट्रबाह्लिकमुखास्ते स्वामिवद्रेमिरे ॥३३॥

एवं प्रवर्तमाने प्रवृद्धतरसमस्तनरप्रमोदे सुरप्रमोदकरणे विधृतत्वर इव द्रुततरमवततार फाल्गुनमासः ।

दुःसाधदिग्जयात्पूर्वं यज्ञोपक्रमसाधकः ।
फाल्गुनोऽभूद्रजोल्लासो मासस्त्वजनि साम्प्रतम् ॥३४॥

षड्भिस्तु सोमयजनैरभिषेचनीय-
घुष्टैस्तथा द्विपशुनेष्टशतैः प्रधानैः ।
सर्वैः सहैक इह राजति राजसूयो
यः सार्धसप्तदशमाससमापनीयः ॥३५॥

शाला तावन्महीभृत्पदविमितमहाप्रक्रमोत्थप्रमाणा
प्राग्वंशोद्यत्सदोमण्डपमहितहविर्धानशाला विशाला ।
मार्जारीयान्विताग्नीध्रकपरिलसिता शङ्कुसङ्कीलितोर्व्यां
कल्पं शिल्पञ्च बुध्वा व्यरचि बहुमणिस्तम्भहेमच्छदाङ्का ॥३६॥

कार्याणि बन्धुषु निवेश्य स फाल्गुनाख्य-
मासादिमप्रतिपदि क्षितिपालमौलिः ।
दर्शेष्टिमाशु विनिवर्त्य कृतातितुङ्ग-
मङ्गल्यदानविभवो विततान दीक्षाम् ॥३७॥

तत्राग्निचित्यासंयोगादुखासम्भृतिमाचरन् ।
वायव्यपशुना चेष्ट्वा नान्द्यादीनुपचक्रमे ॥३८॥

स भीष्ममुख्यानभिवाद्य पूर्वं रक्षादिकृत्ये हरिमेव वव्रे ।
धौम्यप्रधानानपि याजकत्वे तथार्त्विजीनान्परिकर्मकामान् ॥३९॥

स्नानाद्यैः शुद्धवर्ष्मा सह नृपसुतया राजसूयेन यक्ष्ये
सोऽहं स्वाराज्यकामस्त्विति फलमुपसङ्कल्प्य कृष्णार्पितात्मा ।
अध्वर्युब्रह्ममुख्येष्वकुरुत वरणं श्लाघ्यमर्घ्यादिपूर्वं
सर्वे सर्वङ्कषा अप्युचितगुणवशादृत्विगाद्या विभक्ताः ॥४०॥

अध्वर्युर्याज्ञवल्क्यः शतपथविदृचां पालकः पैलनामा
होतोद्गाता सुषामा निखिलविदभवद् ब्रह्मभूतश्च रैभ्यः ।
येषां पुत्राश्च शिष्या निजनिजसयुजामृत्विजां कृत्यमापुः
सादस्यं प्राप पाराशरमुनिवृषभो नारदाद्यैरूपेतः ॥४१॥

आरोप्याग्नीनरण्योर्नृपतिरथ वधूबन्धुभृत्त्विक्परीत-
स्तत्तत्सम्भारशुम्भत्करमणिगणभृद्भूसुरालीपुरोगः ।
सर्वोर्वीपालपालोऽनिविडितसरणिर्भूरिवादित्रघोष-
श्श्वेतच्छत्रादिशोभी मणिकनकमयीं प्राविशद्यज्ञशालाम् ॥४२॥

तत्र च सकलमुनिनृपविद्वज्जनयथोचिताधिरूढमणिपीठे यज्ञवाटे मुनिजनानुगतधौम्यानुस्मारितक्रमादग्नीन् निधाय यथाक्रमविहितत्रिहविष्क दीक्षणीयेष्ट्यवधौ विधृतमृगाजिनमेखलोष्णीषदण्डादिदीक्षितचिह्नपरिचिह्नितो विहितोखाधारणो राजसूयप्रारम्भरूपं त्रिदिनदीक्षं त्रिदिनविहितप्रवर्ग्योपसदं साग्निचयनसप्तमदिनक्लृप्तसुत्याविधानं पवित्राख्यमग्निष्टोमं प्राक्रमिष्ट ।

व्याख्यन्मन्त्रान् क्रियालिङ्गनिपुणमतनिपुः सोममक्रैषुरिष्टी-
श्चादिष्टाश्चानुतष्ठुस्त्रिभिरपि दिवसैरिष्टकास्सुष्टुचैषुः ।
अग्नीषोमाद्यमालिप्सत पशुमुदितं पर्यपौपुर्न्यहौषु-
स्सोमं व्यातानिषुस्त्रीननुषवणविधीनृत्विजः कृत्यधीराः ॥४३॥

प्रागेव व्योमपूर्णास्तदनु सुरवरा यज्ञशालान्तिकान्तं
व्याकर्षन्तो विमानान्प्रतिहविरवतीर्याऽऽगलं बोभुजानाः ।

पश्यन्तो विश्वनाथं तदुपचितमहासम्पदाडम्बरांश्च
श्लाघं श्लाघं सक्रान्तास्त्रिदिवधुतरसा रेमिरे व्योमरङ्गे ॥४४॥

सम्यग्भोजनतोऽपि सम्मदमधात्कर्मावलीदक्षता-
संप्रेक्षैव ततोऽपि सूरिपरिषत् साराङ्गचारूक्तयः ।
सर्वारम्भधुरन्धरस्य तु हरेरानन्दिरूपामृत
स्यन्दास्वादरसस्ततोऽपि च सतां सर्वोत्तरां निर्वृतिम् ॥४५॥

सादरयं कलयन् क्रियासु विमतौ पादावनेजीत्कचि-
न्मञ्जुव्यञ्जनमाहरन्नपरतः शिञ्जानभूषागणम् ।
उच्छिष्टानि हरन् क्वचित्सुतपसां हेमासनाध्यासितो
जुष्टः शिष्टजनैः कुतोऽपि ददृशे कृष्णो जगन्नायकः ॥४६॥

शुभोत्तरैस्सर्वत एव सर्वदा
कयाऽपि वृत्त्या ददृशे जनार्दनः ।
क्वचित्कदाचित्त्विह मध्यमैर्जनैः
कदापि नीचैस्समदर्शि वा न वा ॥४७॥

तत्र च सप्तभिर्दिवसैः पवित्राग्निष्टोमे निवृत्ते पुनरष्टसु दिनेष्वनुमत्यादि-तत्तद्देवत्याः पृथक् पृथगिष्टीर्विधाय पञ्चदशेऽह्नि चातुर्मास्यप्रथमविहितां वैश्वदेवेष्टिमिष्ट्वा प्रतिपदपौर्णमासेष्टिनिर्वर्तनञ्च निर्वर्त्य तदुत्तरे-ऽहन्यारभ्य सुत्रामेन्द्रदेवत्यामंहोमुगिन्द्रदेवत्याञ्च सन्तनीसंज्ञिते इष्टी दिन-पर्यायेण पर्यावर्तयन् तत्तत्कालप्राप्तानिष्टिपशुबन्धाग्रयणादीनपि यथाप्राप्तं ससन्तनीकमेव विदधानश्चतुरो मासानतीत्याऽऽषाढपौर्णमास्यां सन्तनीपूर्वकं वरुणप्रघासेष्टिं ततः पौर्णमासेष्टिमपि प्रविधाय प्राग्वदेव सन्तन्यौ सन्तन्वानः कार्तिकमासपौर्णमासीप्राप्तौ साकमेधेष्टिविधायी पुनरपि सन्तनीभ्यामेवाति-वृत्ते संवत्सरे फाल्गुनपौर्णमास्यामेव प्राप्तायां तस्यां शुनासीरीयेष्टिमिष्ट्वा पुनरपि सप्तदिन्यां सन्तन्यावेव सन्ततान ।

ततस्समाप्तेषु सन्तनीदिनेषु पुनरष्टदिवस्यां पृथक्पृथगिष्टिषु कृतासु

पूर्णास्त्रयोदश मासाः सम्प्राप्तश्च विकस्वरपिकस्वरोन्मेषसूचितभाविमहोद्धोपातिरेको द्वितीयो वसन्तारम्भः ॥

तत्र च प्रतिपद्यमावास्येष्ट्यनन्तरमारोपिताग्निर्गार्हिप्राडम्बरं प्रतिष्ठाय वरिष्ठतमब्रह्मगेहमेत्य कृतबार्हस्पत्येष्टिः स्वगृहमेत्य च सन्ततीमिष्ट्वा पुनरप्येवमेव राजन्यमहिषीसेनान्यादिप्रवरप्रकृतिगृहानेत्य तत्तदिष्टीः कुर्वन् द्वादश दिनानि निनाय ।

ततश्च त्रयोदशदिने मैत्राबार्हस्पत्यामतिमहतीमिष्टिमतिवाह्य तस्मिन्नेव वलक्षपक्षे महितोद्धोपमभिषेचनीयाख्यमुक्थ्यसंस्थात्मकं सोमयागं समधिकाडम्बरमणिकाञ्चनादिनिखिलोपकरणजाललेलायन्त्यां शालायामग्निचयनानुगुणक्रियासहितं प्रागवदेव प्राक्रमत ॥

अमावास्यादिने सुत्यासिद्ध्येऽनुगुणा कृता ।
तस्यापरिमिता दीक्षा पडेवोपसदोऽभवन् ॥४८॥

कुशैः पवं कुम्बकुरीरबन्धनं कुलोऽपि साशङ्कधृतिश्च कुर्वती ।
अकुत्सिताशेषगुणाऽपि पार्षती कुशब्दयोगं बहुधा गता बत ॥४९॥

प्रतिप्रस्थातुरनुगा सदैवासावसूचयत् ।
सहानुयानं विपिनं प्रतिप्रस्थायिभिः प्रियैः ॥५०॥

भाविद्विषत्क्षोभमिवाभिशङ्क्य राजा नवाज्याहृतमूर्तिरासीत् ।
स्वाङ्के पुनर्मानितमे खलेऽसौ दण्डं तथास्यानुगुणं बभार ॥५१॥

सुमहितकृत्यासक्तो बहुगुणमुख्यं धनञ्जयं राजा ।
कण्ठे जग्राह तदा दिग्विजयादागतं यथैव पुरा ॥५२॥

सदैव भूरिदानेषु मुक्तहस्तोऽपि भूपतिः ।
बद्धमुष्टिश्च मौनी च दीक्षाकाले किलाभवत् ॥५३॥

विष्णुक्रमोक्ता चरणैश्च भूयो धनञ्जयोपस्थितिकर्मणा च ।
धृतव्रतः सोऽथ निनाय दीक्षां तथैव नेष्यन्नखिलं निजायुः ॥५४॥

न दीक्षणीयादिकसंस्क्रियागुणैर्नृपः परं सोमलतामवाप्तवान् ।
नरात्स्वयं मूजवतः समागतात्समग्रहीत्सोमलतां प्रथीयसीम् ॥५५॥

राजस्वनेकेषु गुणैर्नृपेन्दोः क्रीतेषु वश्येष्वपि चर्त्विजोऽमी ।
शतेन गोभिर्धृतयत्नमेकं राजानमक्रीणत किं किलैतत् ॥५६॥

विप्रवर्ग्यैः प्रवर्ग्यैश्च प्रदीप्ता यज्ञवाटिका ।
सद्भिरप्युपसद्भिश्च सङ्गता नितरां बभौ ॥५७॥

मुख्यस्स महावीरस्नेहमभिप्रास्य दीपतो बहुभिः ।
अविसोढमहाहवतो हेतिगणानुत्सृजन्नुदज्वालीत् ॥५८॥

प्रकटमहल्याजारेत्याहूते प्रमुदिते मघोनि तदा ।
आश्रितपत्नीशाला गोतमगृहिणी तु सत्रपा नितराम् ॥५६॥

तेषु चोपसद्दिनेषु गाङ्गेयलाङ्गलाञ्चितसङ्कर्षणविदलितसन्निवेशायां हस्तिनपुर्यामिव सत्यामुत्तरवेद्यां प्रथमं खलु प्रथनपृथिवीतलमिव समरनिहताश्वपुरुषशीर्षसमाचितं मुहूर्तदूषणमिवाहिमस्तकसमवेतं क्षितिमण्डलमिवाधोगतमहाकूर्माधिष्ठितं रविमण्डलमिवान्तर्गतहिरण्मयपुरुषं पाण्डवपुरमिव निखिलप्राणभृद्भिरापूरितं वैय्याकरणवाक्यमिव यथोचितयोजितविभक्तिकार्यं गगनतलमिवाश्विनीकृत्तिकादिक्लृप्तोदयं जगदादिवृत्तमिव सृष्टिसम्पन्नविराडन्तस्थनाकसन्मण्डलं श्रीकृष्णबाल्यमिव यशोदानुगम्यमानं शूर्पणखाङ्गमिव विकर्णीकृतसंस्थानं परमान्नमिव घृताक्तबहुशर्करोपचितं निर्गुणात्मकतत्त्वमिव नवपुरीषच्छुरितं मध्यस्थवचनमिव दर्शितोभयपक्षमुखं वर्णजालमिव पञ्चवर्गोदञ्चितं स्वाहादेवीहृदयमिवाग्निप्रणयास्पदीभूतं भिषग्विचेष्टितमिव दर्शितक्षोरघृतधाराविधानमग्निचित्यापदमदीप्यत ॥

ऋत्विक्प्रयोयुजितनिस्तुषमन्त्रतन्त्र-
निर्घुष्टमिष्टकचितं तदिदं व्यलासीत् ।
इष्टस्वरूपशिपिविष्टसमुद्दिधीर्षा-
संविष्टपक्षिवरघृष्टगरिष्ठरूपम् ॥६०॥

तत्र चाग्नीषोमप्रणयनानन्तरमारब्धे क्रमादग्नीषोमीयपशुविधाने,

एक एव हरिरेष सुत्वनां नाथ इत्यभिनयं विवृण्वती ।
यूपमङ्गुलिमिवोदनीनमद्रूश्वषालकलिताङ्गुलीयकम् ॥६१॥

आश्चर्योऽयं यजनमहिमा यो वधादौ निषेध-
प्रत्याख्यायिप्रबलविधिशक्त्यैव निर्धूतदोषः।
अग्नीषोमाख्यमरपरितोषोत्थविश्वेशमोदा-
न्निःशेषावक्षपणनिपुणश्चैष्मां भाति मौलौ ॥६२॥

ततश्च क्रमादेव देवसूहविर्यजनसहितेऽग्नीषोमीयपशुविधाने पर्यवसिते प्रतिदिशं दुन्दुभिलम्बनादिषु च कृतेषु सुत्यादिने प्रस्तुते सत्युक्थ्यसंस्थानुगुणं प्रातः सवनमाग्नेयपश्वनन्तरविहितैन्द्राग्निपशुयुतं व्याततान ॥

सोमेन पूर्वमुदसूयत राजवंश-
स्तेनास्य निष्कृतिपरा इव यज्ञविज्ञाः।
सोमं तदा सुषुविरे बृषचर्मक्लृप्तं
ग्रावप्रहारनिनदैरभिघोषयन्तः ॥६३॥

पुरा हि परिजग्राह सोम एव बुधं सुतम्।
तदानीन्तु बुधाः सर्वे सुतं सोममगृह्णत ॥६४॥
अर्थानुस्मृतिगुरुभिर्मन्त्रैर्विहितानि साधुकर्माणि।
उरुफलजनकान्यासन् शतपथनयवेदिनस्तदाध्वर्योः ॥६५॥

उद्गातृभिः सुविहितेष्वपि सामभेदे-
ष्वासन्नुपद्रवयुता निधनप्रसङ्गाः।
शस्त्रप्रयोगमसृजन्बहुहोतृमुख्या-
स्संसूचयन्त इव चैवमरणानुबन्धम् ॥६६॥

प्रैषप्रयोगो निखिलोऽपि मान्यो
बभूव मैत्रावरुणस्य सर्वैः।
नृपात्तदण्डस्य हि तिष्ठतोऽस्य
प्रशास्तृनाम्नो ननु युक्तमेतत् ॥६७॥

ऋत्विक्चतुर्व्यूहसमस्तकर्म दृष्ट्वा चतुर्वक्त्र इव स्थितस्सौ।
सम्यग्वितन्वन्मनसैव सर्वं ब्रह्मा बभौ कुण्डिकया समेतः ॥६७॥

अध्वर्युहोत्रादिमनुक्रियैकतस्तद्ब्रह्मणो मानसमेव चैकतः ।
चक्रद्वयेन ह्यमुनाध्वरो रथश्शक्राधिराज्याक्रमणे प्रगल्भते ॥६९॥
विद्वद्भिरास्तिक्ययुतैरुपास्तिविज्ञैश्च तैस्संविहितानि तानि ।
पूर्णाङ्गशोभीन्यतिवीर्यवन्ति कर्माणि गीर्वाणकुलानि चासन् ॥७०॥
राजानं पूर्वमध्वर्युराशीर्भिस्समवर्धयत् ।
तत्पानमुदिताः पश्चात्सर्वेऽपि त्रिदशोत्तमाः ॥७१॥
उपगम्य हूयमानैर्ग्रहैस्सहैवानुदुद्रुवुश्चमसाः ।
नृपतौ सुवृत्तबहुले चतुरश्रीभाविता यथा सचिवाः ॥७२॥
ग्रहेषु सर्वेष्वपि भासमानं सोमं हि पीयूषरसस्नुतं तम्
हुतं चुचर्पुर्विबुधा यथेष्टं हुतावशिष्टं सममृत्विजोऽपि ॥७३॥
सोममिह चर्मपूतं सुतमपिबन्नुदरपूरममरवराः ।
यावद्वेदं मोदात्स्वादुङ्कारश्चरुपुरोडाशैः ॥७४॥
सोमस्य तूर्णमथ पूर्णतमास्सुरौघा-
स्सर्वेऽपि भूरि जहृषुर्जहसुस्समन्तात् ।
नेदुश्च केलिसमरानसृजन्नभोऽन्ते
मर्त्योत्सवाच्छतगुणास्त्रिदशोत्सवोऽभूत् ॥७५॥
अग्नौ च सोमे च सहैव नृत्तं
प्रकुर्वतोस्तत्र हविष्प्रमोदात् ।
स्फुलिङ्गतोयैर्व्यतिकीर्यमाणै-
स्सिमसिमात् सिमादित्युदगान्निनादः ॥७६॥
आयान्तु दानवगणास्सममेव सर्वे-
र्योत्स्ये छिनद्मि च भिनद्म्यखिलं ददामि ।
दोर्भ्यां पिनष्मि पृथिवीञ्च दिवञ्च नाहं
सोढास्मि सोममदमित्यनदन्महेन्द्रः ॥७७॥

ततश्च समारब्धे माध्यन्दिनसवने सवनमुखभक्षणमुखेषु दाक्षिणहोमेषु च कृतेषु हविष्प्रमोदितसुरप्रवरप्रहितकामधेनुस्तोमसमकामनीयकहेममणि-

गणोज्ज्वलदुस्रासहस्राभिजुष्टया निष्कनिष्कलितबहुपट्टवसनभारपुष्टतरतुरङ्ग-मतङ्गजगणपुरुषादिलक्षणया दक्षिणया दक्षिणतरान् ऋत्विग्जनान् नत्यन्त-प्रत्युदयत्प्रमोदभारान्विधाय पुनर्गुणसमग्रसकलाभिमतमपुरुषयोग्यामुदग्रसा-मग्रीमग्र्यपूजां नृपाग्रेसरः कर्तुमारभत ॥

जानन्नप्येष विश्वोत्तरमिह पुरुषं सन्तमेकं सभायां
लब्धुं वृद्धानुमत्या निजमतिदृढतां प्रौढधीराजमीढः ।
पूजार्हज्ञाननिःसंशयमतिसहदेवानुयातस्सभान्ते
भान्तं भान्तं विरिञ्चप्रतिममभिययौ वैरिभीष्मं स भीष्मम् ॥७८॥

बद्धाञ्जलिस्तदनु भूपतिरेनमूचे
सर्वज्ञ शान्तनव शान्तनवोत्थबुद्धे ।
प्राप्तोऽग्र्यपूजनविधिः सदसीह को वा
संपूजनीय इति संप्रति मे वदेथाः ॥७९॥

पृष्टोऽथ पुष्टविनयेन युधिष्ठिरेण
दृष्ट्वाऽथ दृष्टिवलनैस्सुजनानशेषान् ।
उत्कृष्टकृष्णमहिमस्मृतिहृष्टरोमा
स्पष्टं गरिष्ठतरया गिरया बभाषे ॥८०॥

ज्ञानं वा ज्ञानभाजां बलमपि बलिनां तापसानां तपो वा
यस्यामी भूमलेशाः क्रतुनिगमसुपर्वादिसर्वात्ममूर्तेः ।
यस्याऽलाभेन यत्प्रीणनमिति सुधियः कुर्वते सर्वपूजां
तं कृष्णं भाग्यलब्धं महय महय भोः किं त्वया चिन्त्यतेऽस्मिन् ॥८१॥

विश्वात्मनोऽस्य विहिते परिपूजनेऽस्मिन्
विश्वं जगत्ससुरमानवमर्चितं स्यात् ।
ज्वालप्रभां नमति मूर्च्छति कः पतङ्गे
श्रौतानले ज्वलति वा जुहुयात्स्फुलिङ्गे ॥८२॥

तत्र च प्रहर्षबहुमानभारभरिताभ्यां नरदेवसहदेवाभ्यां साञ्जलि-बन्धमत्यादृते शान्तनवशासने,

हृष्टा बभूवुरखिलाः शिशुपालमुख्या-
स्त्वासन् परस्परविलोकगभीरभावाः ।
एकात्मना स्थितमपीह सदस्तदानीं
द्वेधा विभक्तमिव सूक्ष्मदृशाश्चकाशे ॥८३॥

सहदेवस्तु पुरत एव तां परिषदवयवोन्मिषितां दोषविकृतिमुपशमयन्निव वचनौषधेन किमपि भिषजाश्चकार ।

शान्तेऽद्य शान्तनववद्बहुविघ्नलोके
दृष्टा च पर्षदपि हर्षवतीह कार्ये ।
सम्मन्तुमर्हथ समेऽत्र यदुप्रबर्हं
सर्वार्हमर्हयति सम्प्रति भूमिपालः ॥८४॥

तदनन्तरञ्चोपान्त एव सभान्तरे विलसन्तं भगवन्तं जगदन्तरात्मानं क्षितिबन्धुरयमतिबन्धुरविनयमुपगम्य धौम्यगिरा पुरः प्रणनाम ।

कृष्णपादरुचिभिस्तदा नृपश्शोणिमानमनयन्निजं शिरः ।
तावदेव स च चेदिभूपतिर्लोचनाञ्चलममर्षरोचिषा ॥८५॥

तदनु च सहजभक्त्याकुलसहदेवादिसहजजनससंभ्रमसम्भृतेषु सकलसम्भावनासम्भारेषु दिव्यमणिमयभव्यासननिवेशिते कृताभिवादने दत्ताशिषि च नित्यानन्दमये पुरुषे —

भक्त्युद्रेकार्द्रबाष्पद्रुपदनृपसुतापाणिपद्मानुपङ्क्ति
त्वङ्गद्भृङ्गारवारा पदनलिनयुगं पुण्यलभ्यं मुरारेः ।
पाणिभ्यां नेनिजानः सुकृतनिधिरहो शम्भुलाल्यं तदम्भो
मूर्ध्ना मूर्द्धाभिषिक्तः सममनुजवधूनन्दनैः सन्दधार ॥८६॥

पीताम्बरप्रवरभूषणरत्नजालं
दिव्यं यदुत्तरकुरूनभिभूय लब्धम् ।
निश्शेषकोशभरसारतमं ददौ त-
द्विश्वेश्वराय सकलं सजलं स भक्त्या ॥८७॥

तत्तादृशेन बलिना भुवने समस्ते
न्यस्तेऽपि हस्तभुवि तृप्तिमवाप नैवम् ।
भक्त्यादरोन्नतिभिरुत्तरलेन राज्ञा
दत्ते यथा स हरिरुत्तमवित्तसारे ॥८८॥

भूयोऽप्येतावता किं बत भुवनपतेरित्यहो लज्जयेव
स्पष्टं स्वात्मानमेव स्वजनसुतपुरीराष्ट्रकोशादिजुष्टम् ।
सम्प्रार्प्याष्टाङ्गपातं नतवति नृपतौ हन्त भोस्तस्य मौलौ
शौरेश्च स्फारभेरीरवयुतमपतत्पुष्पवृष्टिः सुराणाम् ॥८९॥

झटिति निपतदानन्दाश्रुरानन्दमूर्ति-
र्नृपतिमधिकभक्त्या मग्नमुत्थाप्य दोर्भ्याम् ।
त्रिभुवनविजयोग्रत्पट्टबन्धाभमस्य
न्यधित शिरसि शोणं पाणिपद्मं मुरारिः ॥९०॥

तत्तादृशे च तत्र समर्पणे परमपरितृप्तात्मनि निखिलजगदात्मनि कृष्णाख्ये परमात्मनि सकलजनेष्वपि तन्मुख एव सम्मोदनिर्मग्नदृष्टिषु तन्मयीभूतेष्विव स्थितेषु "जय जय नारायणे"ति सगद्गदविनिर्गतप्रशस्ति-घोषणेषु ततस्ततस्समुत्थाय समुत्तरलगात्रेषु प्रवृत्तनृत्तेषु समस्तनारदादिमुनि-स्तोमेषु नभस्तले च गभस्तिमालिन्यपि शरच्चन्द्रशीतलायमानभानुवितानैः सुरप्रवरेषु च हविष्प्रभोजनलोऽपि भृशप्रमोदमग्नेषु सपाण्डवेषु च भीष्म-विदुरद्रोणादिषु जिह्वातिगब्रह्मानन्दार्णवमेवावतीर्णेषु शिशुपालादिष्वपि झटिति हठात्तटिन्निपातमापतितप्रहर्षप्रकर्षक्षणमुषितामर्षप्रसरेषु इतरमहा-जनेषु च प्रमोदमूर्च्छया मुहूर्त्तमिव स्वात्मानमप्यनवबुध्यमानेषु समकालमेव च रासातल-सौतल-वैतल-साप्तसैन्धवद्वैप्यद्वैपान्तस्सरसिकान्तर्गृहिकं नादेय-पौरेयगैरेयवानेयाकाश्यसौवादिषु विधिहरविष्णुमुखधिष्ण्यगतेष्वपि जीव-काण्डेष्वकाण्ड एव किं किमिदमिति सङ्कुलेषु यं कमपि प्रमोदभारमङ्कुरित-रोमाञ्चमनुभवत्सु सोषुप्यमाणप्राणिष्वपि तोषप्रसरविद्रावितनिद्रेषु निवसत्सु चञ्चूर्यमाणजन्तुषु तृप्तिरसभरात्सुप्तेष्विवावस्थितेषु स्थावरेष्वपि नवामृत-

सिक्तेष्विव सद्यःसमुल्लसितपल्लवदलेषु निर्ल्लक्ष्यमाणेषु आविरिञ्चमातृण-पिपीलिकमखिलभुवनमप्येकानन्दमयमेतन्मुहूर्त्ते पर्यवर्त्तत ॥

शिशुपालस्तु तमिमं यदुवर्यस्य वरिवस्योत्सवं निखिलनृपमुनिसूरि-मुख्येषु पारिमुख्यं प्रसादं समीक्ष्य समीक्ष्य क्रमोत्क्षुभितरूक्षतरामर्षोत्कर्षभृशतर-धर्षितात्मा हरित्राकृतविचित्रमणिप्रकाण्डैः सह प्रकामलोहिनीं प्रभां नयनाभ्या-मुद्वमन् नृपकुञ्जरोन्मुक्तदानतोयैस्समं समुन्मिषितघर्मजलोर्मिवर्मितमूर्ति-रखिलजनहर्षोल्लासहासैस्सह गभीराट्टहासमुद्धटयन् जनसञ्चयरोमाञ्चैस्सह मणिपीठपृष्ठात्समुत्तिष्ठन् अर्घ्यानवाप्तिदुर्भगतरौ करौ निर्भररोषान्निर्भङ्क्तु-काम इव मुहुर्मुहुर्म्मर्द्दयन्निर्भयदुर्वादकरणनिर्वेदधरमिवाधरं दन्तपङ्क्ति-सन्नोदनैस्समुत्साहयन् प्राप्तकालमूर्द्धश्वासमिव निःश्वासधारया प्रसारयन् पार्श्वतीर्यैर्मुखतीर्यैश्च पौण्ड्रकदन्तवक्रादिदुर्भूपैस्तद्भावमेवोद्भाव्य समुद्दीप्यमान-स्समुज्वलदतुच्छरोषच्छिन्नाक्षरां रूक्षतरामाक्षेपवाचमाचचक्षे ॥

माद्रेयामरसैन्धवावनिपतीन्कत्रीनिमान् धिक्तमा-
मत्राग्रीयसमर्हणं धकिदत्तसपात्रे च कात्रेयक्रम् ।
सूरिम्मन्यतमान्गतानुगतिकान्धिङ्नारदादीन्मुनी-
न्येऽमी मोमुदतीह वारिधिनिकाय्येऽस्मिन्प्रणाय्येऽर्चिते ॥६१॥

जात्या वा कर्मणा वापि च सकलगुणैर्वर्जितो मुख्यवृत्ते-
र्भ्रष्टो वाचाऽपि वाच्यो न भवति सुधियां किं पुनर्ल्लक्षणीयः ।
निर्म्मर्यादं सुखं स्वं वहति परमसावप्यनेनैक्यमानी
नश्यत्कर्माधिकारो भवति कथमयं निर्गुणः पूजनीयः ॥६२॥

मायामात्राज्जगत्सुन्दरमयति वपुर्वस्तुतोऽसौ विरूपो
गोपीर्व्यामोह्य साध्वीस्वरतिमुपनयन् लोकबाह्याश्चकार ।
यो नामाप्यस्य शंसेत्स च खलु परधामाश्रयस्स्वान्गृहादीं-
स्त्यक्त्वा भिक्षाचरः स्यात्कथमिव स किलामङ्गलः पूजनीयः ॥६३॥

यद्वा सिन्धुभुवो जराप्रलपितैर्मुह्यन्त्यमी पाण्डवाः
कृष्ण ! त्वं त्वनृपो नृपार्हमहनं हास्यं न किं मन्यसे ।

युक्तो वा सरमापतेरसदृशे भक्तप्रदानेऽप्यहो
सम्मोदो ननु भूतिलाभमुदितो निष्किञ्चनः खल्वयम् ॥९४॥
भुञ्जानाः साकमेकामगणितगुरवो ब्रह्महन्तुस्तनूजा
मुण्डापुत्राश्च रण्डाजठरसमुदिताः पण्डिताः पाण्डुपुत्राः ।
भ्रूणघ्न्याः सूनुमेनं द्विजनकतनयं भ्रातरं पीतशीधो-
रेनं यन्माननायां जगृहुरिदमलं वर्तते युक्तरूपम् ॥९५॥

धिक् पाण्डुपुत्रचरितं स्थविरप्रमाणं
बालप्रमाणमपि कष्टमहो विनष्टम् ।
हे धर्मज ! द्रुपदजामपि पृच्छ कार्यं
नारीप्रमाणमपि तेऽस्त्विह राजतन्त्रम् ॥९६॥

कृष्णश्चेदर्चनीयस्तव किमिति नृपानुत्तमांस्तत्तदर्थं
यत्तानत्राभ्यर्थनंपीर्नहि ददिम वयं भीतिहेतोः करं ते ।
धर्मप्रीत्या च धर्म्यस्त्वमिति च कृपया तत्तु नो मन्यसे त्वं
धर्मभ्रष्टाभिपूजा विगलितगुणवन्धोऽयमासीन्मखस्ते ॥९७॥

कार्ये कृष्णो यज्ञचिन्तासु कृष्णो
दाने कृष्णः पूजनीयश्च कृष्णः ।
दृष्ट्वा श्रुत्वा कृष्ण इत्येव सर्वं
प्रागेवेह त्वत्प्रियार्थेव सोढम् ॥९८॥

वाल्हीकः पार्षतो वा स्थविरक इह चेद् द्रोण एको गुरुश्चेद्
गन्धर्वेशः सखा चेदथ तु बुधवरो व्यास एवार्चनीयः ।
सम्बन्धी चेत्स शल्यः प्रहरणनिपुणः कोऽपि चेदेकलव्यो
भो भोः पर्यस्त एव प्रभवति पशुपालैकवर्णे हितं वः ॥९९॥

एवं तत्पापवर्णैर्मुनिषु पिहितकर्णेषु कम्प्रे जनौघे
पार्थादिष्वात्तरोषार्त्तिषु सविधगतस्वास्वदत्तेक्षणेषु ।
प्रोत्थायास्थानदेशात्कुमतिरभिमतिग्रन्थिलो बन्धुभिः स्वै-
रन्धस्सन्धां बबन्धापि च सुदृढममुं सप्ततन्तुं विहन्तुम् ॥१००॥

क्षितिभृन्महिमावलोकतापं विकलत्वाद्विनिगूह्य वर्तमानैः ।
बहुषु क्षुभितेष्वहर्षि गूढं हृदि दुर्योधनकर्णसौबलाद्यैः ॥१०१॥

निर्यान्तं वीक्ष्य चैनं नृपतिरनुगतश्चैद्य कोऽद्य भ्रमस्ते
वृद्धेष्वध्यासितेष्वित्यनुसृतिनिरतः सिन्धुजेनाबभाषे ।
किं साम्नां भूप ! भूम्ना क्षणमिह शुनकैर्भष्यतां वृष्णिसिंहः
सुप्तोऽद्यैव प्रबोधिष्यति बिभ्युरमी तत्क्षणे भक्ष्यभावम् ॥१०२॥

इति तदुक्त्या निवृत्ते धरित्रीपतौ कथय कथय भोः शिशुपाल गृहपालभक्षी तव पशुपालसिंहः कस्कोयमिति न्यक्काररोषविवशवादिनि चेदिपतौ श्रावय देवव्रत देवस्वरूपं सकलसमितिजनानिति क्षितिनाथेनाप्यनुनाथित-स्समक्षमेव लक्ष्यमाणं जगत्क्षेमहेतुं स्वचक्षुर्भ्यामापीय क्षणमिव निमीलिताक्षः साक्षात्स पितामहो मुनिजनमुखेभ्यो निशमितं किमपि कथयामीति निगदितुं प्राक्रमत ॥

श्रोतुमश्रोतुमप्येतच्चेदिक्ष्मापतिरक्षमः ।
विवृण्वन् कोपसम्भारान् प्रश्रृण्वन्नेव तस्थिवान् ॥१०३॥

पूर्णं ब्रह्मैकमेव स्वयमलसदसौ सच्चिदानन्दमादौ
सर्गप्राप्तौ तु मायां पृथगिव विसृजन् बिंबितोऽभूदमुष्याम् ।
स्वच्छन्दं स्वच्छसत्त्वप्रकृतिलवसमुद्भूतभूतेन्द्रियत्वा-
दच्छन्नैश्वर्यपूर्णं हरिरिति विदधे चाथ लीलाशरीरम् ॥१०४॥

मायामिश्रात्मनाऽसौ गगनपवनतेजोम्बुभूमीर्वितन्वं-
स्तत्संयोगाद्यदन्तःकरणफलनतो धातृजीवात्मकोऽभूत् ।
भूतैः सृष्टेन्द्रियासूंस्तनुभुवनमनूत्पाद्य पञ्चीकृतैस्तै-
र्धात्रात्माऽन्यांश्च सृष्ट्वा जयति जगदवन्मुक्तिमुक्तिप्रदोऽयम् ॥१०५॥

एष एव मधुकैटभौ झटिति पाटयन्नकृत मेदिनीं
पीनमीनवपुरानिनाय खलु दानवेन मुषिताः श्रुतीः ।
सिन्धुमन्थनधुरन्धरेषु च पुरन्दरादिषु चिरन्तनो
बन्धुरेष किल मन्दरं झटिति सन्दधार कमठात्मना ॥१०६॥

योगीन्द्रोदीतशापाज्जयविजयनिजद्वाःस्थयोर्दैत्यजात्यां
भूत्वा धूत्वा मृगादीञ्जगति विचरतोस्तं कनिष्ठं ध्वरिष्ठम् ।
दृष्ट्वा घृष्टोष्मकृष्टक्षितिवलयमसौ पोत्रिगात्रो हि धात्रीं
पोत्रेणोद्धृत्य दैत्यं मृधभुवि कदलीकाण्डखण्डं व्यखण्डीत् ॥१०७॥
एतस्यैव तदग्रजासुरभुजास्तम्भाहतात्स्तम्भतः
सम्भूतं नमृगं नमानुपमहो तद्घोरघोरं वपुः ।
तप्तस्वर्णसवर्णघूर्णदतिरूक्षाक्षं शशाङ्कप्रभं
व्यात्तव्याप्तमुखाग्रवल्गिरसनादंष्ट्रायुगोल्लामरम् ॥१०८॥
भूयः संख्यमुखे महासुरममुं प्रोद्धृत्य दोर्भ्यामयं
द्वारेऽथोरुयुगे निपात्य नखरान्व्युत्खाय वक्षोभुवि ।
निर्भिन्दन्नधिगर्भनिर्भरगलद्रक्ताम्बुवद्धोत्सवं
पायं पायमुदस्तवान्बहुजगत्संहारिसिंहाखान् ॥१०९॥
दत्तं ह्यत्र भवेत्तनिष्टमतिभूयिष्ठं प्रतीपक्रिया-
प्यस्याभीष्टदुघैव दृष्टमुभयं त्रैविक्रमप्रक्रमे ।
बालस्यास्य पदत्रयीवितरणं त्रैलोक्यदानात्मकं
जातन्नाम बलाञ्छलास च बलेर्बन्धोऽपि मोक्षावहः ॥११०॥
एष ह्यर्जुनबन्धुरेव भगवान्प्रागर्जुनोग्रद्रुजा-
साहस्रखदाभ्रविभ्रपरशुप्रक्षेपविक्षारितैः ।
क्षुभ्यत्क्षुद्रतरक्षमापतिघटामांसास्थिरक्तच्छटा-
मेदोभिः खलु मेदिनीं पुनरहो विन्यास्थदन्यामिव ॥१११॥
लीलातोलितनीलकण्ठशिखरिव्यालक्ष्यदोर्विक्रम-
प्रक्षोभः स हि रक्षसां परिवृढस्त्रैलोक्यकालोपमः ।
एतेनैव विहीनवानरचमूजुष्टेन पृष्ठोच्चल-
द्रक्षोलक्षसुरक्षितोऽपि विशिखस्यैकस्य लक्षीकृतः ॥११२॥
श्रुत्वा तावत्प्रसक्तां जयविजयकथां खिद्यते ह्यकस्मा-
द्वीर्योदन्ते हिरण्यासुरदशमुखयोरात्तहर्षोऽयमास्ते ।

प्रोज्जृम्भे नारसिंहे रघुपतिसुमहाविक्रमेऽप्यक्रमोद्य-
द्भीतिक्रोधत्रपान्धो निवसति विकसद्वासनो दामघोषिः ॥११३॥

एष एव निहतप्रलम्बमधिकप्रलम्बभुजभासुरं
मुष्टिपिष्टखलमुष्टिकं कलितनीलचेलमतिपाण्डरम् ।
घोरसीरधरमाजियागकृतमागधाधिकपराक्रम-
स्थेमहोममतिकोमलं वहति कामपालवपुरन्तिके ॥११४॥

अयं पुनः स्ववशीकृतमायस्य श्रेयस्यामीश्वरावस्थायां स्थितस्य निर्मल-ब्रह्मणो नारायणाख्यस्य सततप्रकटसर्वज्ञादिसकलनिजानुभावः पूर्ण एव प्रादुर्भावो वासुदेवाख्यः ॥

सौहार्दवैरभयरागमुखैः समेषां
सद्यो विमुक्तिकरणैकधृतत्वरोऽयम् ।
भूभारहानिरनुषङ्गकृता तदेनं
मानन्त्यतीव मुनयः सुखसेवनीयम् ॥११५॥

अत एव निरवग्रहानुग्रहत्वरया वैरयोगभाजां भोजराजादीनां व्योम-वादनारदवचनादिना वैरदीपनवेगकारी भक्तितुन्दिलनन्दाद्यभिनन्दन-त्वरया पुरत एव गोकुलं यातः पूतनाशकटासुरपवनवत्सकबकाघमुखादीनां निधनेनैव निजपदप्रदायी स्वोपयुक्तस्यानन्तफलदायित्वादुत्तमदत्तमपि गोपीनां गोरसादिकमुपयुञ्जानः सर्वथा मनोविलयनार्थं च क्वचिद् बाललीलादिहास्यानि क्वचिद्विविधदास्यलास्यादिकरुणास्पदानि क्वचिल्लोकोत्तरशैलोद्धरणाद्यनेका-द्भुततराणि क्वचित्कालियवेष्टनादिस्वनिधनभयानि क्वचिदरिष्टकेशिवधादिवीर-कर्माणि क्वचिद्भुवनललितमुरलीगानरासविलासविप्रलम्भसम्भोगादिशृङ्गार-रसतरङ्गितानि च विशृङ्खलीकुर्वन् गोगोपालमृगतृणवीरुदादिमुक्तिप्रदानायैव च नित्यमरण्यसञ्चरणरसं प्रपञ्चयन् विरिञ्चिवञ्चनबहुरूपविहरणे च निखिलगोमातृस्नेहप्रसरानात्मगोचरानेव चिरतरं विरचयन् कदाचिदखिल-गोकुलवासिनां करतलामलकवद् ब्रह्मानन्दमेव साक्षात्कुर्वन् यथाकथञ्चिद् गत्यर्हांश्च हस्तिमल्लमल्लवरकंसपञ्चजनसृगालहंसडिम्भकशतधन्वमुरनरकादी-

नात्मनैव परिहिंसन् अनधिगतस्ववधसुकृतेषु यवनमगधादिषु चान्तकाले कान्ततरशान्तरूपप्रदर्शनेन मुक्तिकरवासनाङ्कुरमावपन् अखिलदेवासुर- सामपि सम्प्रति सम्भृतनिजसेवया देवत्वान्तेऽपि मुक्तिरस्त्विति यदुनृप- स्वदयितारूपेणावतारं प्रागेव प्रचोद्य तत्प्रियानुगुणकल्पितवेषो नित्यमेव तत्तादृशविनोदैर्मनांसि विलापयन् अमूनेव मनुजलोकदुरवलोकां निजलोक- सम्पदमिहैव पृथगनुभावयितुं जलधिदुर्गकारितद्वारकाख्यदिव्यपुरविहारी गान्दिनेयधनायापरिपूरणप्रधानप्रयोजनार्थमेव च स्यमन्तकोदन्तदैन्यमुत्पा- दयन् अवश्यानुभाव्यदुरितानुभावनेनापि निरतिशयशुभकरणार्थमेव पार्था- दीनामपि किमपि पीडामिव प्रदर्शयन् स्वतनुपश्यविश्वजनदुरितनिशोषण- भक्तवश्यतादिप्रकटनाय च राजसूयादिकमपि प्रारम्भयन् क्वचिन्मनःप्रेरणेन क्वचिन्नयनप्रयोगैः क्वचिन्निजप्रभावप्रकाशनैश्च पुरः प्रज्ञातं परप्रयोजनार्थमेव सकलकर्मलवमपि नर्ममात्रेण निर्मिमाणो निश्चलसच्चिदानन्दाम्भोधिमात्रश्रिया त्रिदशोत्तमबुद्ध्या मनुजोत्तमबुद्ध्या च तत्तदधिकारिभिरत्यास्वादितनित्य- शुद्धसत्वमयनिष्कलनिर्विशेषमूर्तिरस्मत्सुकृतवशादिह प्रत्यक्षमेवास्ते ॥

भूयोऽपि चास्य बहु खल्ववतारकार्य-
मास्ते श्रुतं खलु मया मुनिवर्यवाक्यैः ।
नैवाधुना प्रकटयामि तदा तदा तं
पश्यन्तु विश्वजनता भगवद्विलासम् ॥११६॥

एष एव खलु बद्धबुद्धवपुरुद्धरिष्यति पुनस्त्रयी-
मुत्कटोत्कलितकल्किमूर्तिरपि खड्गयिष्यति खलोत्करान् ।
भूयसा किमयमेव सर्गलयपालनैकरसिकः पुमान्
याज्य एव खलु पूज्य एष नृप योज्य एष हृदि योगिनाम् ॥११७॥

तद्दुर्विबोधमपि दुर्वचमात्मतत्त्वं
हर्षाश्रुसंप्लुतसमाजनिशम्यमानम् ।
शृण्वन्मुरारिरपि हर्षविकारवेगा-
नात्मस्तुतिस्त्विति निगुह्य कथञ्चिदस्थात् ॥११८॥

चैद्यस्तु वैरिगुणवर्णनकर्णशूल-
तूर्णप्रदीर्णहृदयोऽधिकपूर्णरोषः ।
मन्थाद्रिघूर्णितमहार्णववद्विघूर्णन्
प्रोद्गीर्णवान्वचनहालहलं तदाऽपि ॥११९॥

प्रागेवासौ विसारः क्वचिदसुरवधे हीनसौकर्यखिन्नः
स्तम्भं प्राप्तः कथञ्चिद्धयदलयदपरं सर्वदं तु न्यबध्नात् ।
मुन्यात्मा वीरहत्यां व्यधित निरवधिं स्वस्य दारानदोषा-
नत्याक्षीद्राघवात्मा हरिचरितमहो सर्वमेवाभिरामम् ॥१२०॥

स्त्रीघ्नो गोघ्नः कृतघ्नः खगफणिभिदधान्नाकुमात्रं किलाद्रिं
पर्यास्थद्दारुमात्रं शकटमरमयद्गोपिका गव्यमोपी ।
ब्रह्मण्यं मागधं तं मुहुरपकृतवांस्तद्भयाद्दाशदेशा-
नातिष्ठन्द्वेष्टि लोकान्मणिममुषदहो स्तौषि दोषानशेषान् ॥१२१॥

षण्डत्वाद् ब्रह्मचर्यच्छलभृदपनयांभोधिरम्बापहारा-
त्कन्नानर्थं गतोऽभूः सभयमसहथा गायकाद् भ्रातृघातम् ।
त्वं भीरुत्वाच्चिरायुर्वससि कपटधर्मोक्तिभिः प्राप्तमानो
रे रे मिथ्योद्य चैद्यस्त्विह न हरिकथाभीषिकाभिर्बिभेति ॥१२२॥

रे रे वर्षिष्ठ तिष्ठत्विह यदुकुहकश्लाघिका मोघिका ते
गच्छ स्वच्छन्दमृत्युर्व्रज समरभुवं खाद्यसे चैद्यबाणैः ।
जूर्णे वा पूर्णलज्जैस्त्वयि किमिषुगणैराह्वयेऽहं त्वसाह्वान्
पार्थाः सार्धं स्वकैर्मां रिपुमथनधनुर्धारयं वारयन्तु ॥१२३॥

इत्थङ्कारमदमघोपप्रसविनि दमघोषप्रसवे सभाङ्गनसङ्गिनि चतुरङ्गरोष-भङ्गुरभ्रुकुटिके भङ्गाकटभङ्गावहनयनपैङ्गलीजुषि लाङ्गलपाणौ जाङ्गलिको-ऽस्म्यहमेव सुनीथभुजङ्गमस्येति लाङ्गलमुद्वहति स्वाङ्गतरङ्गितरोषविकारेषु गाङ्गायनिप्रभृतिषु रथाङ्गपाणौ च शशाङ्कधवलस्मिताङ्कुराङ्कितमुखे निरादर एव स्थितवति भृशाक्षमेषु च प्रतीक्षिततदाह्वानेष्ववस्थितेषु व्याप्तरोषतात्पर्य-माणसात्यकियुतेषु रणशौण्डभुजदण्डप्रकाण्डताण्डवितगाण्डीवादिहेतिषु

पाण्डववीरेषु रोषचण्डिमखण्डितसन्देहेषु समममेवोत्थितेष्वेवोग्रकोपादग्रतस्स-रोनिर्गलद्विस्फुलिङ्गनयनोदरो वृकोदरो गगनाट्टघट्टननिष्ठुराणि त्रिचतुराणि गर्जितानि निर्जनयन्नर्जुनधनुर्ज्यागर्जितैस्सममुद्ववाम वाणीम् ॥

चेदीशानां शतं वा प्रसरतु पुरतो दन्तवक्त्राः सहस्रं
काशीशाः पौण्ड्रका वाप्ययुतमयमयं जृम्भते भीमसेनः ।
ये ये कृष्णार्चनायामसहनमनसस्ते किलैकैकशोऽद्य
प्रोद्यद्दोर्दण्डचण्डभ्रमिलगुरुगदाघोरघातान्सहन्ताम् ॥१२४॥

इति परिराटिनं साटोपमुत्पतिष्णुमधिकासहिष्णुमखिलाभिभूष्णुं गदावि-भ्रान्तिविभ्राजिष्णुं जिष्णुज्यायांसमेनं त्रिचैः पदैरिव चङ्क्रममूर्धानमधिरोक्ष्यन्त-मभिवीक्ष्य पीठिकोत्थायं समुत्थाय हस्ताग्रमभिगृह्णन् जह्नुजासूनुरन्वगादीत् ।

दोर्भिर्नेत्रैश्च पूर्वं हरिहरसदृशं त्यक्तुमैच्छत्पिताऽमुं
कस्याप्यङ्के विजह्यात्तनुविकृतिमसावस्य हन्ता स एव ।
इत्यश्रोत्कथाद्भुतेनागलन्नृपतिजनाङ्केषु मात्राऽर्पितोऽयं
वर्धिष्णुर्मातृवीक्षागलयदुवृषभस्याङ्कतोऽभूद्गलाङ्कः ॥१२५॥

आगः सहस्वेति वृतो जनन्या कृष्णः शतागःसहनं न्यगादीत् ।
तेनान्यनिर्भीतिरसौ खलोऽस्मानाह्वास्त भो क्षाम्य परामिमं त्वम् ॥१२६॥

इत्थमुक्ते हस्तधृते च कथञ्चित्तस्थुषि निःसहज्वलितभामे भीमे
उच्चैरुच्चैः स्वमर्मप्रकटनकटुकक्रोधबाधः सुनीथो
रे रे कृष्ण ! त्वमागः सहसि किल वयं स्वामिपत्वं गतास्ते ।
एह्येहि क्षुद्र ! लज्जाविकल ! चपल ! गोपाल ! भूपालमानिन् !
दक्षश्चेद्रक्ष दक्षक्रतुमिव गिरिशो निर्धुनोम्यध्वरं ते ॥१२७॥

इति वादिन्येव चण्डभुजदण्डकुण्डलितकोदण्डे सन्तेजितशरकाण्डैः खण्डयितुमेव पाण्डवयज्ञशालां प्रत्यापतति पापिष्ठचेतसि चेदिश्रेष्ठे भूसुरजालकेषु च भीलुकेष्वाशयाभिज्ञदारुकपूर्वसज्जितमेव निभृतनिहितं रथप्रवरं लघुप्रपातमारूढस्तटित्प्रकाशमिलितनवप्रलयाम्बुदप्रतिमतेजा दृढप्रकृष्ट-धनुष्प्रकाण्डमण्डलान्तर्गते रिपुप्रतिमुखमेव ददृशे मुरप्रमाथी ।

ततस्तु चेदिभूमिभृत्सुहृत्त्वदत्तचेतस-
स्समस्तदुष्टभूपतीनभिप्रचार्य संहतान्।
जगत्त्रयेश्वरः स्वयं निवर्त्य चापवल्लरीं
घनप्रणादसोदरीं किमप्युवाच भारतीम् ॥१२८॥

भो भोः सज्जनव्यसनसज्जनाच्चिरादेव जयपदविच्युतो मयि नित्यवैरितया मद्भेदयोग्योऽयं चेदिराजः ॥

छिद्रेऽधाक्षीत्पुरीमें यदुगणमहरद्रैवताद् बभ्रुपत्नीं
जह्रेऽमुष्णान्मखाश्वं मयि मगधसुतार्थे च किं किं न चक्रे ।
दुर्वादाः सर्वलोकैरिह च निशमिता यज्ञबाधे शतागः-
पूर्णोऽयं तूर्णमस्मादपसरत नृपा घूर्णितं मे रथाङ्गम् ॥१२९॥

इति निशम्य निशाम्य च शार्ङ्गिणः प्रतिघभारतरङ्गितमिंगितम् ।
स्वगतिकालमनाप्य भियाऽप्यलं क्षितिभृतः सबलाः प्रपलायिताः ॥१३०॥

यान्तु यान्तु किममीभिरद्य मम कातरैर्मृतिभयातुरै-
रेक एव पुनरीश्वरोऽस्मि ननु गोपसूनुघटनाविधौ ।
इत्युदीर्य भृशतिग्मधारमिह रुक्मिणीकुचपदाङ्किते
माधवोरसि शरं किरन्गरकिरं गिरञ्च पुनराददे ॥१३१॥

भो भो गोपवटुं हठान्मम वधूचोरं बलादीनमून्
कृत्स्नान्पाण्डवखेटकानपि मखञ्चामुं सुखं चूर्णयन् ।
वद्धे युद्धमहाध्वरेऽत्र हि जरासन्धस्य बन्धोरहं
स्कन्धावारधुरन्धरोऽद्य वितनोम्यानृण्यमाकर्ण्यताम् ॥१३२॥

अन्योन्यच्छन्नगात्रध्वजरथमिषुभिस्तत्क्षणं निष्प्रयासं
प्रास्तापास्ताखिलास्त्र त्रस भुवनमदृष्टश्रुतं नारदाद्यैः ।
चैद्येनोद्यत्प्रकोपप्रतिभयवदनं शौरिणा स्मेरवक्त्रं
हंहो किं किं न चित्रं निरघटि घटिकामात्रतश्शात्रवाभ्याम् ॥१३३॥

ततस्तु नमोऽस्तु भगवन् बाध्यतां न माध्यन्दिनसवनवेला तव लीलारसै-

रिति दारुकेणाऽपि दारुणशरविदारितेन धीरतां विहाय वारितः शौरिरेन-मारचितचारुस्मितमीरयति स्म ।

पूर्वं घोरनखांकुशैरथ शराङ्कूरैः कृताङ्को मया
दत्तद्वेपवरः स चेदिभृदसौ मद्भृत्यमुख्यो जयः ।
पश्यन्त्वस्य बलं जना इति मया यत्किञ्चिदुत्क्रीडितं
यच्छाम्यद्य मनोरथं पृथुमहश्चक्राय चक्राय मे ॥१३४॥
आरोक्ष्यामि तवाङ्कमात्ममहसा रे कृष्ण कृष्णेत्यलं
क्षिप्ते पोद्विपतः सुदर्शनमसौ दुर्दर्शनं प्रोद्वहन् ।
उच्चैर्धर्मपथो जयत्विति वदन्मार्ताण्डचण्डत्विषा
तेनाकुण्ठजवं चखण्ड कुमतेः कण्ठं विकुण्ठेश्वरः ॥१३५॥
जन्मत्रय्याऽऽत्तविष्णुस्मरणबलसमुद्भूद्धचिद्धामदीप्तं
बुद्ध्याऽद्यं चैद्यदेहादुदितमुरुमहोरूपि सूक्ष्मं शरीरम् ।
कृष्णं प्राविक्षदालक्षितमखिलजनैः सर्वकामाढ्यपूर्ण-
ब्रह्मानन्दं स भेजे परमसगुणसायुज्यमावृत्तिहीनम् ॥१३६॥

हृष्टैः सुरैः कुसुमवृष्टिरमोचि कृष्णे
तुष्टाः समे जय जयेति जना विनेदुः ।
दष्टाधरोष्ठमपि पिष्टकरं क्षणार्धं
दुष्टाः स्थिता अपि भियैव पुनर्ननन्दुः ॥१३७॥

एवं चैद्ये तमाद्यं पुरुषमुपगते तत्सुतन्नयस्य राज्ये
निर्मास्यन्कर्मशेषं नृपतिरयमुपानीय दानीयलोकान् ।
वित्तैः स्वस्यैव हस्त्यैर्मणिगणगुरुभिर्द्रौणिपात्रप्रणीतैः
कर्णोत्कीर्णैश्च पूर्णानकुरुत निखिलान्वित्तपप्रत्यनीकान् ॥१३८॥
रत्नाग्र्यस्वर्णकन्यावसनपशुघटायानभूषादि यद्यद्
यस्येष्टं यच्च धर्तुं क्षममखिलमिदं राज्ञि देदीयमाने ।
कालेनाशेषकामप्रतिहतिरवधि हन्तकारेष्वकार्षीद्
गृह्णीताऽऽयात पूर्णं तनुकुरु भवनादीनि घोषो निरैषीत् ॥१३९॥

ततः क्रमेण निवृत्ते मरुत्वतीयग्रहत्रितयहोमे दिव्यदुकूलजालोल्लसितोल्लोचादिवेल्लिते शालाप्राग्विभागे गृहीतकोदण्डशरकाण्डस्य राजशार्दूलस्य शार्दूलचर्मास्तरणासीनस्य सर्वौषध्यादिभिरमिताघोषमभिषेककर्म निर्माय समभिषिक्तोऽयं युधिष्ठिरः पाण्डुसूनुरिति समुद्घोषयाञ्चक्रुः ।

पुरस्तादभिषेकस्य परस्ताच्च कृतास्तदा ।
पार्थहोमास्तु पार्थस्य यज्ञे सार्थकतां ययुः ॥१४०॥

बाहुः पृथिवीभरणाद्वराहकृत्यादृतस्सदा नृपतेः ।
अवहदिह पादुकामयवराहकृत्यादरं सपादोऽपि ॥१४१॥

महेन्द्रस्तुतशस्त्रप्रयोगपरिशोभितेऽथ समितितले ।
देवासुरसमरसमं समरमकुर्वन् प्रधाव्य वीरवराः ॥१४२॥

सङ्ग्रामडम्बरविधाविह दुन्दुभीन-
प्याजघ्नुरुग्ररवजृम्भितकम्पिताशाः ।
चक्रुश्च वादचतुराः सदसि प्रकामं
तर्कादिपक्षशतसाधनबाधनानि ॥१४३॥

आग्नीध्रपश्चिमोद्यन्मणिभवने संस्थितोऽयमासन्द्याम् ।
सूतादिप्रकृतिवरैर्देवनमतनिष्ट काञ्चनैरक्षैः ॥१४४॥

ततश्च नरकेसरिणेव हिरण्यकशिपुमाक्रम्याऽऽसीनेन होत्रा वेदभागगदितमेव शौनःशेपमाख्यानमाख्यापयन् विहितसरण्या हिरण्यासनगोसहस्रमयीं चास्य दक्षिणां दत्त्वा माहेन्द्रग्रहभक्षणादिरीत्या साध्वेव माध्यन्दिनसवनं समाप्यत ॥

तृतीयसवने तावत्सोमग्रहसमुद्यमे ।
हन्तादित्यग्रहोऽप्यासीत् तूष्णीं ज्योतिर्विदोऽभवन् ॥१४५॥

ततस्तृतीयसवने परिसमाप्ते महिताघोषसम्भृतावभृथोदयनीयमैत्रावरुणीषु कृतासु गृहान्तरमासाद्योदवसानीयेष्ट्यवसाने निखिलाभरणादिपरिकरविभूषितस्य महाराजस्य महाडम्बरविजृम्भितः पुनरभिषेकोऽपि विघोषितोऽभूत् ॥

एवञ्च त्रमाससमाप्तौ समाप्ते ऽभिषेचनीये तत्रैव सद्मनि कृतामावास्येष्टिः पुनराग्नेयीमिष्टिमन्वतिष्ठत् ॥

तदुत्तरदिने च तद्गृहात्पुरस्तात् षट्सु शम्याप्रासप्रदेशेषु प्रतिदिनं पृथक् पृथगिष्टीर्विधाय सप्तमदिने सप्तमशम्याप्रासप्रदेशे प्रागेव प्रतिष्ठितां अतुलमहाभोगशालिनीं शालामष्टमीतिथौ प्रविष्टो यष्टा तस्यां दशपेयाख्यमेकदीक्षादिनारब्धत्रिदिनोपसत्कं चतुर्थदिनसुत्यमग्निष्टोमसंस्थं सोमयागं प्रथमकथितप्रक्रिययैव प्रक्रमते स्म ॥

यद्दीक्षादिवसे बिभर्ति नृपतिः सत्पुण्डरीकस्रजं
प्राजापत्यकतूपरश्च सवने कायश्च यस्मिन् पशुः ।
सोमं यत्र च भक्षयन्ति चमसान् हुत्वा शतं ब्राह्मणा
यस्मिन् वा मणिदर्पणछितयमप्यध्वर्यवे दक्षिणा ॥१४६॥

ईदृशस्य चतुर्दिननिर्वर्त्यत्वादहर्दिननिर्विश्रमस्य महाभोगमहनीयस्य दशपेयक्रतोरन्ते कृतश्मश्रुमात्रवपनो मेदिनीपतिर्द्वादशतिथाववेष्टि नामेष्टिं पञ्चहविष्कामनुष्ठाय तदूर्ध्वेऽहन्यादित्यमारुतच्छागीद्वयवन्तं पशुबन्धमप्युपसन्तेने ॥

ततश्च चतुर्दश्यां पूषादिदेवतां पञ्चदश्याञ्च पूर्वप्रयुगाख्यामिष्टिमिष्ट्वा कृतपौर्णमास्येष्टिरुत्तरेऽहन्युत्तरप्रयुगाख्यामपि कृत्वा पुनर्द्वादशदिन्याञ्च जन्यार्थिनाञ्जन्यप्रदानसन्नद्धो धृतव्रत एव वव्रृते ॥

नाभविष्यदिह वा जनार्दनो नामरिष्यदथवा स चेदिराट् ।
आपतिष्यदधुनाऽत्र सङ्गरो घोर इत्यनुशुशोच नारदः ॥१४७॥

ततो वसन्तान्तिमदर्श आगते तिस्रस्तथा दक्षिणमध्यमोत्तराः ।
शाला व्यदृश्यन्त कृता महाप्रभाः पुरो यथा पावकशक्रशूलिनाम् ॥१४८॥

तासु च दक्षिणशालां प्रविश्यापरिमितत्वविधेर्द्वित्रदिनमात्रदीक्षं द्वादशोपसदमासन्नपौर्णमासीव्यवस्थितसुत्याप्रयोगमतिरात्रसंस्थात्मकं केशवपनीयं नाम सोमयागं कृत्वा तदवसानकृतकेशादिकृत्स्नलोमवपनो बभूव भूमिपालः ॥

दीक्षाक्रमो मिलदुखाभरणः पुरोव-
दीक्षावधौ क्रयविधिश्चयनन्तु सर्वम्।
कार्यं प्रवर्ग्यदिवसेषु पशुस्तदन्ते
सुत्या तदूर्ध्वमिति सर्वमखे समानम् ॥१४९॥

एवं ग्रीष्माद्यवलर्क्षपक्षे गते मध्यमशालामध्याविश्य पक्षत्रयनिर्वर्तनीयं व्युष्टिद्विरात्राख्यमहीनमहीनाभोगं सोमयागमारभत ॥

सोऽप्यपरिमितदीक्षाविधानात्त्रिंशद्दिनप्रायदीक्षावसानोऽहीनत्वान्नियत-द्वादशोपसत्को ग्रीष्मावसानचतुर्दशीपञ्चदशीव्यवस्थिताग्निष्टोमातिरात्र-संस्थात्मकसुत्यात्मकदिनद्वयविद्योतमानः समुद्यदवभृथादिघोषः समाप्तिं ययौ ॥

ततः श्रावणमासाग्रिमपक्षतेः परमक्षताभोगामुत्तरशालां प्रत्युपेत्य क्षत्रस्य धृतिर्नामाग्निष्टोमं त्रिदिनदीक्षं त्रिदिनोपसत्कं सप्तमदिनसुत्यमत्यन्तप्रोद्घोषिता-वभृथं प्राथमिकरीत्या प्रातनुत ॥

ततस्तदुत्तरदिनैः पूर्वदेविकेष्टिमुत्तरदेविकेष्टिं त्रैधातवीयामप्याधाय पक्ष-शेषेण पशुत्रितयसुराग्रहादिव्याप्तामात्तावघोषावभृथयात्रां सौत्रामणीमप्यति-वाह्य श्रावणमासपूर्वपक्षान्ते राजसूयक्रतुमतिक्रमयाञ्चक्रे ।

गङ्गायां तुङ्गरङ्गत्पटहपटुरवं सङ्गतानन्तभूभृ-
द्रूपाशङ्खौघतेजःकपिशदशदिशं विस्मिताशेषलोकम्।
व्योमान्ते पाण्डुनाऽपि प्रमदभरगलद्बाष्पमालोक्यमानं
चक्रे शक्राधिकश्रीरतुलमवभृथाघोषमन्त्यं नरेन्द्रः ॥१५०॥

दिव्याध्वरावभृथपूततमे द्युनद्यास्तोये ममज्ज हरिणा सह सर्वलोकः ।
आपाण्डु पाण्डुसुतकीर्तिपयःपयोधौ तावच्चतुर्दशजगन्त्यपि पर्यमाङ्क्षुः ॥१५१॥

निर्वर्त्यावभृथं महोज्ज्वलमहाः कृष्णासखो राजरा-
डुत्तीर्णस्सुरवृन्दकीर्णसुमनःसम्भारसम्भावितः ।
कृष्णाभ्यां धृतचारुचामरमणिच्छत्रो धरित्रीभृतां
सार्थैः सार्धमगाद्विशेषविहितालङ्कारतुङ्गां पुरीम् ॥१५२॥

निर्वृत्ते सप्ततन्तौ सुमहितविभवे निर्वृते सर्वदेव-
व्राते निर्व्यूढकृत्ये नृपतिरथ समाहूय निःशेषलोकान् ।
बुद्ध्वोर्ध्वं धार्तराष्ट्रच्छलमतिमधुनैवाहमुद्धूलयिष्ये
वित्तौघानित्यभीप्सन्निव मणिकनकं मेघवर्षं ववर्ष ॥१५३॥

दिग्भ्यो बलाहृतमनन्तधनप्रपञ्चं
तत्रैव वर्तयितुकाम इवावनीन्द्रः ।
तत्तद्दिशं गमिषु सर्वजनेषु किं किं
कस्मै ववर्ष न सहर्षमधर्षितोष्मा ॥१५४॥

नो देहेषु ममुर्विभूषणगणा गेहेषु नार्थावली
नैवाऽऽश्चर्यरसानुभूतिलहरी चित्तेषु वा देहिनाम् ।
आविप्रं पुनरान्त्यजातिनिखिलं मानुष्यकं तत्क्षणा-
द्भूपप्रत्तदुकूलकाञ्चनमणिव्याप्त्या सुदीप्तं बभौ ॥१५५॥

दद्मो दद्मो धनालीर्नरवरतिलकायेति सर्वे नरेन्द्राः
सर्वं सम्पूरयामो द्विजमुखजनताखिल्यमी पाण्डवेयाः ।
एवं स्पर्धानुबन्धे महति सति जयं केवलं जानते ते
पूर्णोद्वीर्णोरुरत्नज्ज्वलदररमुखाः कोशगेहप्रदेशाः ॥१५६॥

एवं निःसीमहृष्यन्मुनिसुरमनुजाशीर्भिरुद्बोधिताशं
प्रस्थानप्रत्तपुष्यद्धनगृहनगरक्षेत्रपात्रादिभारम् ।
स्वर्णापूर्णावकीर्णव्रजदुरुजनता काञ्चनीभूतविश्वं
चित्रं निर्वर्त्य तत्र क्रतुवरमतुलं धर्मराजो विरेजे ॥१५७॥

एतावन्मत्कृपायाः खलु विलसितमित्युच्चकैर्दर्शयित्वा
विश्वानन्दाभिवर्षी पुनरपि वसतिं प्रार्थ्यमानोऽपि पार्थैः ।
दैवाद्भाविन्यवस्था मयि सविधगते माऽस्त्वितीवात्तचेता-
श्चैद्यारिः सौभरुद्धां सपदि निजपुरीमश्रयीद्विश्वसाक्षी ॥१५८॥

समाप्तोऽयं प्रबन्धः ॥

॥ शमस्तु ॥

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| March, 1935. | १८५६ शकीये फाल्गुने<br>१७श-वर्षस्य ११श-संख्या | Vol. XVII No. 11 |


## कालविलसितम्


[ निबन्धकः—म० म० श्रीदुर्गाप्रसाद-द्विवेदः ]


हे धर्म कर्मघटितत्रिजगत्प्रतिष्ठ !
त्वामद्य यद्यपि जगन्ति निपीडयन्ति ।
आस्तामथापि तव नामकलैव काचित्
तन्मोचनैकशरणे प्रथते क्रियासु ॥१॥

वेदा हि कर्मशबलं कलयन्ति धर्मं
जीर्णांश्च तान् निजनिजेष्टपथान्नयन्ति ।
इत्थं क्व धर्महतकः क्व च कर्मयोगो
दुर्वादवारिधिरिह क्रमतेऽतिवेलम् ॥२॥

तात्पर्यभूविधिनिषेधविधिप्रकर्षा
हर्षा इव व्यवहृतेर्विविधक्रियायाः ।
येऽमू दृशौ मलिनयन्ति तमिस्रपातै-
स्तेषां चिकित्सक इहास्ति स एव भूमा ॥३॥

तर्कोऽप्रतिष्ठ इति सूत्रितमेव भूयो
मातारमाश्रयमपास्य न चागमोऽपि ।
काऽन्या प्रथा हितकृते प्रथतामबाधं
श्रीकण्ठ एव शरणं शरणागतस्य ॥४॥
नास्त्येव संप्रति विधौ परलोकभीति-
र्यद्यस्ति वैरजनितैव बहुप्रकारा ।
अत्रान्तरे निजनिजेप्सितकर्मणैव
संगच्छते किमपि पाशुकभावकर्म ॥५॥
वर्णाश्रमध्वजभृतोऽपि तदीयकर्म-
संपादनेषु विधुरा बलिनो जयन्ति ।
एवं च दीक्षिततरा अपि तत्र तत्र
वैरस्यभावभविका बहवश्चरन्ति ॥६॥
उद्यत्प्रवाहपरिवर्तनबन्धुरासु
भोगप्रवृत्तिसरसीषु दृढावगाहाः ।
प्रख्यापयन्ति सलिलान्तरवर्तमान-
पङ्केरुहच्छदसमानमसङ्गतं स्वम् ॥७॥
साध्वी विपन्नजनता करुणैकपात्रं
संपद्गता न सहसा परिकोपनीया ।
आपातलाभलवदुर्ललितान्तरेषु
वेतालचेष्टितमुदाह्रियतेऽत्र किंचित् ॥८॥
विद्याव्रतं घटयते खलु पात्रलक्ष्मी-
मित्येव भारतनयो हि महर्षिभावे ।
अद्याद्यमीषदधिगत्य यथाकथंचिद्
वाचस्पतेरपि गुरोर्गुरुतां भजन्ते ॥९॥
एकं द्विकं त्रिकमथेप्सितमेकवारं
यज्ञोपवीतवदुदारपदं नयन्ति ।

श्रौतेऽपि भाविनि नयादिव सोमवाज-
पेयादिकर्मविधुरं च सपुण्डरीकम् ॥१०॥
वेदत्रयी श्रुतिरभिन्नवपुस्तथापि
भिन्नास्पदं स्पृशति गौरवनर्म किञ्चित् ।
इत्थं दिशाऽवरभुवा मनुयाज्ञवल्क्य-
सीमावमर्दनमु(?)रीक्रियतां विनाशि ॥११॥
लेडादिनाऽपि विधयः श्रुतिषु प्रदिष्टा
दृष्टान्ततां गमयितुं न मनीषयाऽर्हाः ।
नो चेत्तदा विधिनिषेधनिपातनानि
कर्मप्रवाहमधरोत्तरमाचरेयुः ॥१२॥
ये कालकर्मविधया स्थगितस्वभावा
भावा न वैधसरणिं परिहर्तुमीशाः ।
ते तावदत्र कलिवर्ज्यतयाऽपदिष्टाः
प्रागेव मार्गणसहस्रशरद्भ्य आराद् ॥१३॥
तत्कर्म यच्च कलितं मनसैव ताव-
द्वाचा ततश्च वपुषाऽपि निषिद्धमूचे ।
अन्तर्मलापहतयेऽपि महर्षिसङ्घै-
रंहोनिबर्हणविमर्शनिबद्धकक्षैः ॥१४॥
प्रत्यक्षमक्षचलितं ह्यनुमाऽपि हेत्वा-
भासावमर्षविधुरा तत आगमस्तु ।
स्वानादिसिद्धिमहितो गुरुभावनाभ्या-
मुत्पत्स्यमानवृषरक्षणदीक्षितः स्यात् ॥१५॥
संवाद्यतिष्यपरिबृंहणमुच्यमान-
कर्तव्यजातमधुनापि सुखं लभेरन् ।
पूर्वापरार्थघटनामृतसेकसिद्ध-
सिद्धान्तसत्पथनिषण्णसुधीरधीकाः ॥१६॥

वेदात्पुराणमितिहासकलोद्भवश्चेत्
नैतावता परमिदं खलु वेदरूपम् ।
स ज्ञानलक्षण इति प्रतिपद्यते चेत्
स्वाध्यायतोऽस्य जनिता प्रलयोन्मुखी स्यात् ॥१६॥

प्रायोऽधुना विकृतितां प्रकृतिः प्रयाति
सा का दशामिति पुनः कलिरेव वेद ।
शङ्कासमाधिधुतयोऽपि विदां वरं नु
वैतानिकी विमलता प्रससार याभिः ॥१८॥

कक्षाचतुष्टयविसंस्थुलशब्दभान-
प्रादुष्कृताऽभिमतसृष्टिकथाप्रतानैः ।
विज्ञानमित्यभिधया श्रुतिवाग्गवीना-
मुद्घाटलाङ्गलपथे घटनोचितीष्टे ॥१६॥

संमील्यते कृतिषु जैमिनिवाक्यमाराद्
वैयासिकं तु धुतमेव विकल्पितेन ।
नैरुक्तिकीह घटनाऽपि सपाणिनीया
साधारणैर्विजितमूर्जितभावभङ्गया ॥२०॥

वर्णाश्रमा विषमभावदशां प्रयाताः
स्वेच्छाविहाररसिकाः खलु जातयोऽपि ।
एतद्विमर्दचलिता ध्वजलक्ष्मलक्ष्या
औपासनाख्यविधया बहवः स्फुरन्ति ॥२१॥

दोषः स एव किल यस्य निभालनेन
रासः प्रकोप उदियादितरस्तु बन्धुः ।
इत्थं च शुद्धिजननी खलु धर्मशास्त्रे
निद्रायते विषमशासनपत्रपुञ्जे ॥२२॥

वेतालचेष्टितमिदं परिहृत्य दूरा-
दात्मानमात्महितकारकमाकलय्य ।

कालानुकूलफलसंक्रमणानि पश्य-
न्नुद्यम्यतां विषमसंचरवर्जमुच्चैः ॥२३॥

विज्ञाः ! सात्त्विकयौक्तिकाह्वयतया विज्ञानमाभाति यत्
तत्रोदाहरणं प्रसिद्धमहिमा सा रामकृष्णद्वयी ।
यद्द्वीपान्तरशिल्पसौष्ठवकलाः संधाय वेदादिकं
दुर्व्याख्याविषमूर्छितं विदधते सा तूत्पथप्रक्रिया ॥२४॥

प्रेक्ष्यं विद्वद्भिरुच्चैरिरिव सततं मादकद्रव्यजातं
यद्देश्यं द्वीपजं वा बलरुधिरकरं तद्विवेकेन सेव्यम् ।
अन्यत्त्वायानुरूपं निजविभवदशा सेव्यतामन्यथा तु
भ्रातर्भूयः प्रजा वा ध्रुवमिह निपतेद् घोरसंकोचपङ्के ॥२५॥

जाग्रत भ्रमनिरूपणोन्मुखी-
मूर्ध्वबाहुरिति सूक्तिमामृषत ।
नाधिकं श्रयितुमीहते मनो
मौनमत्र भजतीति मङ्गलम् ॥२६॥

---

# शब्दविमर्शः

[ निबन्धकः—श्रीविधुशेखरभट्टाचार्यः ]

### हंहो, हंभो, अम्भो

अस्ति किल संस्कृते 'हंहो' इति शब्दः। अस्ति चास्य प्रयोगः प्राकृतेऽपि (हेमचन्द्रकृतं प्राकृतव्याकरणम् २-२१३)। अव्ययमिदं, प्रयुज्यते च सम्बुद्धौ; यथा 'हंहो ब्राह्मण'। द्रष्टव्यतां साहित्यदर्पणम्, ६-१४८। नात्र मनागपि संशयो यदेष शब्दो 'हंभो' (हंभोः) इत्यस्माच्छब्दादुत्पन्न इति, भकारस्य हकारभावात्। भकारस्य हकारभावो न केवलं प्राकृत एव, अपि तु संस्कृतेऽपि बहुलं दृश्यते। यथा वैदिको 'ग्रभ्'-धातुर्लौकिके संस्कृते 'ग्रह्' इति सम्पन्नः। अयं 'हंभोः' शब्दो न केवलं संस्कृते बौद्धसंस्कृते वा (दिव्यावदानम् ३८३-४ ; ६२१-६ ; महावस्तु ३-२०४-१६ ; २१५-१), अपि तु प्राकृते (सुरसुन्दरीचरिअं ११-२३५), पालावपि (जातकं १०१८४, ४९५)। पालौ 'अम्भो' इत्यपि तस्मिन्नेवार्थे प्रयुज्यते। अत्र श्वासस्यापगमाद् हकार एव अकाररूपेण परिणतः। स एष 'हंभो' 'हम्भो' वा शब्दस्तत्त्वतः 'अहं भोः' इत्यस्मादुत्पन्नः। एतच्च कस्याप्यवधानाय प्रयुज्यते। यथाऽभिज्ञानशकुन्तले (४-०-२०) महर्षेः कण्वस्याऽऽश्रममायातो मुनिर्दुर्वासा विमनायमानां शकुन्तलां प्रत्याह "अयमहं भोः"। 'हं हो' इत्यादिषु 'हं' पुनर् 'अहं' शब्दस्याऽकारलोपात्। प्राकृतादिवत्संस्कृतेऽपि एवमकारलोपो दृश्यते। यथा संस्कृते 'अधि'तो 'धि'इति ("हृदि सर्वस्य धिष्ठितम्"), 'अपि'तः 'पि' इति ("पिधेहि"), 'अव'तो 'व' इति ("वगाह्य") एवमन्यत्। तथा 'इव'-तो 'व' इति पालौ प्राकृते च।

### हञ्जे

दृश्यकाव्यानां प्राकृतवाक्येषु चेटीनां सम्बुद्धौ प्रायेण 'हञ्जे' शब्दो दृश्यते। को नामास्यार्थः। कथं चायं व्युत्पन्नः। कोशकाराणां केचिदाहुः

—अस्ति कन्यावाचको 'हञ्जा' शब्दः तस्यैव सम्बुद्धौ 'हञ्जे' इति। अस्तीह सत्यलेशः। स चोपरिष्टात् प्रकटीभविष्यति। अस्ति भोटभाषायामवतारो नागानंदस्य नाम संस्कृतदृश्यकाव्यस्य। तत्रेदं "कुकुन तु दगा' व" इत्युच्यते। अत्र खलु 'हञ्जे' शब्दो नियमेन 'वु मो' इत्यनेनावतारितः। भोटभाषायामस्यार्थः 'कन्या' सम्बुद्धौ 'कन्ये'। प्रमाणं त्विदं न बलवत्। ईदृशेषु हि स्थानेषु भोटभाषा केवलं संस्कृतमनुसरति। संस्कृतस्यैव प्रामाण्यात्तस्य प्रामाण्यं तदप्रामाण्याच्च तस्याप्यप्रामाण्यम्। यथा वाऽस्तु, 'हञ्जा' शब्दस्य सम्बुद्धौ "हञ्जे" इति कोशकाराः। स्पष्टमेव प्रतीयते यत् 'हञ्जे' पदव्युत्पादनाशक्त्यैव ते 'हञ्जा'पदमकल्पयन्। 'हञ्जा'तश्च 'हञ्जिका'प्यस्ति तेषां मते। दासी किल कन्येव मन्यत इति 'हञ्जा'पदमुभावपि ते बोधयतीति तेषामभिप्रायः।

तत्त्वं त्वन्यत्। 'हं' इति 'जे' इति चानयोर्योगाद् 'हञ्ज' इति। तत्रानयोरादिमं पदम् 'अहम्' इत्यस्याऽकारलोपात्। तदेतत् पूर्वमेव प्रदर्शितम्। अन्तिमं तु ('जे' इति) किमपि अव्ययमिति तावन्मन्यताम्। प्रयुज्यत एतत् पालौ प्राकृते च। कः पुनरेतस्यार्थः? पदपूरणार्थमेतदिति हेमचन्द्रः (२-२१७), शुभचन्द्रः (२-१-३३) त्रिविक्रमश्च (३ १ ३६)। आदौ त्वस्य ध्रुवं कश्चिदासीदर्थो यः खलु विस्मृतो लोके हेमचन्द्रस्यापि समये। कः पुनरयमर्थो भवेत्?

पालौ तावत् पठ्यते, कापि काली नाम दासीमामन्त्रयते "हे जे कालि" (मज्झिमनिकायः, १-१२६)। अयि कालीत्यर्थः। एवमन्यत्रापि बोध्यम्। "किं जे दिवा उट्ठासि" (तत्रैव) 'किं भो दिवा उत्तिष्ठसि' इत्यर्थः। "भो जे त्वं अनेकवारं मम सन्तिकं आगता" (धम्मपद अट्ठकथा, ४-१०५), 'अयि त्वमनेकवारं ममान्तिकमागते'त्यर्थः। अत्र सर्वत्रापि दास्यामन्त्र्यते। विशाखा स्वदासीमादिशति (विनयपिटकं, १ २९३) "गच्छ जे आरामं" 'अयि आरामं गच्छ'। कापि दासीमाह (विमानवत्थु-अट्ठकथा, पृ १४७) "सचे जे विहारे ठपयेत्वा विस्सरितं" "तद्यदि अयि विहारे स्थापयित्वा विस्मृतम्'।

अस्ति प्राकृते ( माहाराष्ट्र्याम्, अर्द्धमागध्याम् जैनमाहाराष्ट्र्यां च ) 'जे' शब्दः। अपभ्रंशे त्वयमेव 'जि' इति दृश्यते ( हेम० ४-४२० )। एतेन तु 'जे'-शब्देन पूर्वस्य प्राकृतस्य 'जे'-शब्दस्य न कश्चिन् सम्बन्धः। एषा हि 'एव'शब्दात् ( प्राकृते 'येव' रूपमापन्नात् ) समुत्पन्नः ( दृश्यतां पिशेल-रचितं प्राकृतव्याकरणम्, १५०,३३६)।

प्राक् प्रदर्शितेभ्यः पालिवाक्येभ्यः स्पष्टमिदं प्रतीयते यत् स खलु 'जे' इति 'अहम्' इत्यतो जातेन 'ह'' पदेन पूर्ववर्तिना 'हञ्जे' इति जायते।

अर्थस्तु 'जे' शब्दस्य नैतावता परिस्फुट इति स व्याख्यातव्यः। संस्कृते विशेषेण तु दृश्यकाव्येषु प्रियः पुत्रादिः 'जात' ( प्राकृते 'जाद', 'जाअ'), इति, कन्यादिश्च 'जाते' ( प्राकृते 'जादे' 'जाए' ) इति सम्बोध्यते। यथा उत्तररामचरिते चतुर्थेऽङ्के कौशल्या लवमाह—"जात कथयितव्यं कथय।" अभिज्ञानशाकुन्तले च चतुर्थेऽङ्के गोतमी शकुन्तलामाह "जादे एसो दे० गुरू उवट्ठिदो" ( जाते एष ते० गुरुरुपस्थितः )। संस्कृते 'जाते' प्राकृते 'जादे' 'जाए' च। 'जाए' इत्येतदेव पदम् आकारस्य एकारस्य संहितया 'जे' इति जायते। प्रसिद्धैतादृशी संहिता प्राकृते। संस्कृतेऽपि "एङि पररूपम्" इति सवार्त्तिकं पाणिनिसूत्रं ( ६-१-९४ ) स्मर्तव्यम्।

उक्तं प्राग् यद् 'जाता' शब्देन कन्यादिर्बोध्यते। एतेन ज्ञायते यत् 'हञ्जा' शब्दः कन्यावाचीति कोषकाराणां मतं न सर्वथा अमूलकम्। अयं तु विशेषो यद् 'जे' इत्यस्यैवार्थः कन्या ( कन्ये ), न तु समग्रस्य 'हञ्जे' इत्यस्य 'हञ्जा' इत्यस्य वा। न चेदं कोशकारैर्विचारितम्।

भवेदेतदेवम्। कथं तु खलु 'जात'-शब्दः पुत्रादिवाचकः, जाता-शब्दो वा कन्यादिवाचकः। अत्रेदं प्रतिवचनम्। संस्कृते जनेर्धातुत उत्पन्नो 'जनक'-शब्दः पितरम्, जननी-शब्दश्च मातरं बोधयति। एवं तस्मादेव धातुतो व्युत्पन्नो 'जात'-शब्दः पुत्रम्, 'जाता'-शब्दश्च कन्यां बोधयतीति सर्वं सुसमञ्जसम्।

हण्डे

अस्ति प्राकृते 'हण्डे'-शब्दः। रूपकेषु किलाधमैः पुरुषैः समा अनेनामन्त्र्यन्ते। यथाह विश्वनाथकविराजः साहित्यदर्पणे (षष्ठे परिच्छेदे) "हण्डे इत्यधमैः समाः"। यथाभिज्ञानशकुन्तले (६-२) "हण्डे कुम्भिलआ।" का पुनरस्य व्युत्पत्तिः। प्राकृते ( हेमचन्द्रः २-१६२ ; शुभचन्द्रः २-१-६१ ; सिंहराजः १३-२३ ; त्रिविक्रमः २-१-५६ ) सम्मुखीकरणार्थं 'दे' इत्यव्ययं दृश्यते। इदं च मे प्रतिभाति यत् प्रागुक्तं 'जे' इति पदमेव 'दे' इति रूपमापन्नम्, जकारस्य दकारभावात्। यथा संस्कृते "प्रसेनजित्" पालौ 'पसेनदि',। संस्कृते 'जिघत्सा' पालौ 'दिघच्छा'। संस्कृते 'ज्योत्स्ना' पालौ 'दोसिना" एवमन्यत्। अयं तु विशेषो यत् 'जे' इति स्त्रीणामेव, 'दे' पुनरविशेषेण स्त्रीणां पुंसां चामन्त्रणे प्रयुज्यते। अथ दकारस्य डकारत्वं बहुलं दृश्यते। यथा 'पुरोदाशः', एव 'पुरोडाशः', संस्कृते 'दंशः' प्राकृते "डंसो"। एवमन्यत्। ततश्च 'दे' इति 'डे' इति जायते। अनेन 'डे' शब्देन पूर्ववद् 'अहं'-शब्दस्य 'हम्' इत्यस्य योगाद् "हण्डे" इति पदमुत्पद्यते।

———

# कालस्येङ्गितम्

[ निबन्धकः—स्वर्गत-तारकनाथस्मृतिरञ्जनः ]

अवतीर्णस्य भगवतो बलीयसेच्छाप्रभावेण क्षणं कुरुक्षेत्रप्रान्तरं कलिकालानुभावे निष्प्रभत्वमुपयुषि, हस्तिनाद्वारकयो राजसभायां निर्धारितेन धर्ममतेन नियन्त्रितमासीदखिलं भारतभूमण्डलम्। प्रशान्तकल्पनां च समुपगते जीवानां हृदयोद्वेगे, धर्म्यकर्मण्यभिनिविष्टा मनुजाः संसारसुखमनुभवन्तो विसस्मरुर्दुःखवृत्तान्तम्। महार्घे फणिशिरोमणौ समाकृष्टायां दुर्गतदृष्टौ न खलु लोचनपथमुपयाति द्विजिह्वस्य जिह्वाचापलम्।

अवसरे चास्मिन् गुहाभ्यन्तरमधिशयानः कृकलासाकारो महीपतिर्नृगः समवततार नयनपदवीं यदुबालकानाम्। तं च तद्दर्शनेन परं विस्मयमुपारूढास्तत्त्वजिज्ञासवो भगवन्तं वासुदेवं शरणमनुप्रापुः। श्रीभगवानाह, भो यादवाः, निःसीमपुण्यवैभवोऽयमतुलपराक्रमोऽप्रमितप्रभावो राजाधिराजो नृगः। न खल्वेतस्य गोधनदानलक्षणपुण्यकर्मैयत्तया परिच्छेत्तुं शक्यते मनुजैः। ब्राह्मणाय चापराद्धोऽयं—जगद्गुरोर्विश्वस्य ब्रह्मण्यदेवस्य शरणागततनयाय ब्राह्मणायापराद्धोऽसौ—सुचिरमिमां सुदारुणां निरययन्त्रणामनुभवति। प्रियवत्साः, कुपितभोगिभोगतोऽपि भीषणाद् वज्रादपि कठोराद् ब्रह्मदण्डान् सदा बिभित, अपराद्धायाप्यग्रजन्मने मा द्रुह्यत। ब्राह्मण एव मे हृदयम्। माञ्चेत् प्रसादयितुमिच्छत, ब्राह्मणमेव प्रसादयत। अहमेव युगे युगे संस्थापयामि द्विजन्मनां मर्यादाम्। नालमस्ति कोऽपि मया स्थापितां मर्यादामतिलङ्घयितुम्। तादृशं साहसं कोऽप्याचरति चेत्, सोऽवश्यमेव निहन्येत।" इति।

केशानां काशाभत्वं चक्षुषोर्निष्प्रभत्वं दन्तानां च शैथिल्यं पिशुनयति समासन्नं पतनं शरीरस्य। भगवन्, करुणामय, त्रिकालदर्शिन्, मन्ये

इत्थमेव त्वं जीवं—भवितव्यतायाः करपुत्रिकायमाणं जीवम्—भाविदुःख-पर्यालोचनाय नियोजयसि। परम् हा हन्त, दुर्भाग्या वयम्, तुष्टिहीना वयं सुखविभ्रान्तचेतसो नैवावदध्मस्त्वदीयमिङ्गितम् उपदेशश्च। दुर्बलानां बलम् सर्वस्मा एव प्रदर्शयाम्बभूव दुःखानां बीजम्, परं लुब्धस्य लोचनं नैव निपतति सलिलशायिन्याः कर्कट्या उपरि, केवलं कमलिन्याः सुकोमलं हृदयमेव प्रत्यक्षीकरोति।

अरे कलिकाल, धर्मक्षेत्रकुरुक्षेत्रप्रान्तरे भगवता शासितस्यापि ते स्वभावो नैव सम्यक्तया परिवृत्तिमभजत्। न खलु जीवैरदृष्टस्य ते गमनागमनं कदापि निरस्तम्। मन्ये यथावसरमात्मानं प्रकटयितुमेव सन्नद्ध आसीस्त्वम्।

भगवत एव अङ्कलालितानां यादवानां हृदयेषु नैव पदं लेभे समीचीनतममिदमुपदेशवचनम्। महार्घ्यमिदमुपदेशरत्नं तेषां हीनार्घ्यतया प्रत्यभात्। युगसन्ध्यवसरे समजनि कालस्य छायापातः, तस्या एव छायायाः प्रभावः भगवतोऽर्धभागस्य श्रीमतो नरऋषेर्द्वैतीयीकदेहस्यार्जुनस्य शरीरेऽपि पर्यलक्ष्यत, इदानीं च यादवानां गृहेष्वपि निपतिता कालस्य च्छाया। अतश्च यादवाः शिथिलादरा बभूवुर्गुरुवचने। अविच्छिन्नेन निराबाधेन च सुखभोगेन सुरापायिन इव सुरापानस्पृहा, यादवानां भोगस्पृहाऽनुदिनमेधमाना शतमुखतामापन्ना शमसुखस्मृतेर्विलोपमेव साधितवती। न खलु मद्यपस्य पायसादिष्वपि रुचिरुपजायते, कादम्बरीरसज्ञानामाहारोऽपि न रोचते, यातयामं गतरसं पूति पर्युषितमेव वस्तु तस्य भक्ष्यं सञ्जायते। प्राक्तनतपःप्रभावेण समधिगतसद्गुरुसङ्गानामपि येषां वासना नानुकृतवत्युद्धवस्येव संसारनिवृत्तिमार्गम्, नोपगता विशुद्धभावं येषां कामनासन्ततिः, येषां च बुद्धिर्नैर्मल्यमासाद्य पूतसलिला विष्णुचरणकमलनलिनीकल्पेव विष्णुपादोद्भवा नैव प्राभवत् कालप्रतिपादितयातनाजालं निवारयितुम्, न खलु संसिद्धस्तेषां नियतसन्निहितस्यापि सद्गुरोः सङ्गः—श्रीभगवतः सङ्गः। न हि दैहिकं सामीप्यं परमार्थतः सामीप्यम्, विगतकल्मषाया बुद्धेः सङ्गमेव सङ्गमामनन्ति।

मूर्खत्वमासीद् विकसितम्, एतदहमपि विशेषेण मन्ये। तत्राप्यत्रावस्थानस्य निदानमेतत्—भवत्य एतादृशानिर्वाच्यरूपलावण्यवत्य आसन्। भवतीनां सन्निधाने एकमात्रमपि पुरुषं नेक्षे। तद्विषयपरिचिन्तनेन मदीयस्वान्तकन्दरे आसीदाश्चर्यज्ञानोदयः। * * * रमणीनिकराणां सन्निधाने पुरुषस्याविद्यमानेऽपि तद्रूपक्षोभस्य विषयः।

विनाऽङ्गनां नैव सुशोभते जनो
विना जनं तन्न च कामिनी कदा।
यथा शशाङ्केन विना निशीथिनी
निशीथिनीभ्चापि विना निशाकरः॥१॥

लसति नो कमलं कमलं विना
न च विना कमलं कमलन्तथा।
विटपिनां परितः परिवर्जनं
कृतवतीव लता न हि शोभते॥२॥

विना द्विरेफं स्तबकस्य कर्हिचि-
च्छोभा न सम्यक् प्रतिभाति भूतले।
तथैव कान्तं युवकं विना कदा
न शोभिता स्यादिह योषितां वरा॥३॥

स च वाहकः एवंरूपेण भाषितसंवातं संभण्य स्वकीयोत्तरस्य सर्वथा पोषणार्थं रसिकताप्रकाशपूर्वकं पुनरपि कथञ्चित् चकार वक्तृताम्। एवं वगदादनगरस्थितनरनिकराः सचराचरं यदेकस्य वचनस्य कुर्वन्ति स्म प्रयोगम्—'चतुःसम्मितजनानामेकत्र समुपवेशनं विना महासुखोत्पत्तिर्न भवत्येव' तद्वाक्यस्यैव चकार पौनरुक्तयम्। परन्तु असंकुचितभावेन निजगाद ता युवतीः प्रति। हे वरेण्याः, एतन्मनोहरहर्म्यनिकरमयभवने भवत्यस्त्रिमिताः कुर्वन्ति स्म वसतिम्। भवतीनां मध्ये चतुर्थव्यक्तेः संसर्गभवनमत्यावश्यकम्। नैवानिर्वाच्यरूपलावण्यवतीनां भविता महानन्दप्रबन्धोदयः। तास्तु युवत्यो वाहकस्य सुकौशलभाषितविसरं परितः समाकर्ण्य भवन्ति स्म

महाकौतुकसमन्विता मृदुमृदुहास्यरसान्विताम्यमण्डलाः। हे वाहक, कथमनर्थकं वागाडम्बरं विधाय करोषि स्वकीयोन्मत्ततायाः प्रकाशम्। यद्यपि अस्माकं विषयस्य विज्ञापने नास्ति प्रयोजनलेशोऽपि तथाऽप्यत्र नवाभीतिविषयस्य किञ्चित् करोमि विज्ञापनं कुरुष्व समाकर्णनम्। वयं त्रिमिता युवत्यः कर्त्तव्यकर्मणः कुर्मो विविक्ते सुसम्पादनम्, येन केऽपि न शक्नुवन्ति परिज्ञातुम्। अस्माकं तद्गुप्तविषयः पुनः केषामपि जगज्जनानां गोचरो भवेदित्याशङ्कासङ्कुचिताः केषामन्तिके न वदामः कदाचित्। वयमेकमुत्तमं सन्दर्भं सम्पाद्य तस्मिन्नेतद् उपदेशप्रापणमकार्ष्म। स्वकीयरहस्यविवरणस्य केषामन्तिकेऽपि मा करोतु विकाशनम्। यतः प्रकाशे कृते पुनः कदापि स्वकीयायत्तं नैव भवेदिति। कुर्वन्तु सर्वे परितः परिलोचनं स्वकीयगोपनीयविषयस्य यदि स्वयमेव मनोमन्दिरे कथनाभावरूपकवाटावरुद्धयुवकं रक्षितुं न शक्यते तदाऽन्येषामन्तिके प्रकाशे कृते ते कथमप्रकाशं विधाय यत्नं करिष्यन्ति तद्रक्षणं सर्वथाऽसम्भावनीयमेवैतद् वृत्तान्तं तथ्यं तथ्यमेवेति।

यदुक्तं ग्रन्थकारेण एतद् वाक्यश्च वाहकः।
यथार्थयुक्तिसंयुक्तं सत्यं नास्त्यत्र संशयः ॥४॥

स्वकीयचित्ते वचनस्य यस्य चेन-
न रक्षणं स्यादिहास्य जन्मनि।
अन्यान्तिके तद्वचने प्रकाशिते
नो भविता…कथं वद ॥५॥

समाकर्ण्य जोवादीवचनविसरं विधाय विशेषविनयं वाहकस्ताः समाहूय अवदत्। अयि मान्या रमणीगणगण्याः, भवतीनामाकारनिरीक्षणेनैव मदीयहृदये आविरासीदेष भावोदयः। भवत्योऽनिर्वाच्यरूपलावण्यवत्यः कथंकारमद्भुतासाधारणगुणसन्धारणं कुर्वन्ति स्म। साम्प्रतं तदेव निश्चयेनाहमस्मि परिज्ञातः। किन्तु हे सुशीलागणाः, मदीयादृष्टस्याप्रसन्नताप्रयुक्तमेव अहमकार्षम् एतज्जघन्यजीविकाभारवहनव्यवसायम्।

न दुर्भाग्यान्धस्य प्रकाशते जनः
किं किं न कार्यं कुरुतेऽतिदुःखितः ।
स्वकीयकुक्षेर्भरणार्थचिन्तको
नले नृपे तत्प्रमितिर्विराजिता ॥

भूत्वा भूपतिनन्दनो बहुजनान् यः पालितान् सर्वथा
चक्रे सोऽपि धरापतिर्विधिवशात् कां कां दशां नो गतः ।
पश्चात् कस्य चिद्भूपतेर्हयगणं चक्रे स्वयं पालितं
के कामं विविदुर्विधेः कमथवा धर्मस्य सूक्ष्मा गतिः ॥

युधिष्ठिरादयः पञ्च पाण्डवा भीमविक्रमाः ।
विराटनगरे पूर्वं किं किं कार्यं न चक्रिरे ॥८॥

इत्यादिभूपान बहुदुर्गशक्तीं
श्चिन्तामकार्षञ्च तथेतिवृत्तान् ।
अतो न शोचामि न चिन्तयामि
कपाललेखा न पुनर्जहाति ॥९॥

किं बहुना प्रकृतमेवानुसरामि । अयि मृदुमधुरव्याहारकारिण्यः कामिन्यः, अहं यथा साध्यानुसारेण दर्शनविद्याया आलोचनया एवमितिहासादिविविधसन्दर्भपाठेन स्वकीयज्ञानसाधनं कर्त्तुं त्रुटिमात्रमपि नाकार्षम् । साम्प्रतमपि सुसमये सन्दर्भसमीक्षणेन करोमि विरतिम् । किन्त्वेकपुस्तकमध्ये अहमप्येकं हितोपदेशं संप्राप्य तदनुसारेण करोमि समाचरणम् ।

तन्मर्मार्थमाकर्णयन्तु सर्वा युवत्यः स्वकीयानुकम्पाप्रकाशपूर्वकम् । अर्वाचीनानामन्तिके विश्वासघातकानां सन्निधाने च कदापि स्वकीयं परकीयं वा रहस्यवृत्तान्तं व्यक्तं नैव करोतु ।

किन्तु विज्ञानामन्तिके रहस्यवृत्तान्तवर्णने सङ्कुचितभवनमनुचितमेव यतस्तत्सन्निधाने तत् सर्वं गुप्तभावेनैव भवेत् परिरक्षितम्, प्राणान्तेऽपि तन्न स्यात् प्रकाशितम् । भवत्यो यदि अनुग्रहप्रकाशं कृत्वा कथयन्ति काञ्चित् गोपनीयां कथां तदा तां वाणीं पणमञ्जूषामध्ये संरक्षणपूर्वकं तस्या

विशेषावर्गं विधाय तस्याः कुञ्चिकायाः कुर्वन्त्यः प्रापणं कथंकारमपि तदावद्धमोचनं विधातुं केऽपि समर्था न भविष्यन्ति इति तथ्यमेव वदामि भवतीनामन्तिके। सा च चतुरचूडामणिर्जावादी वाहकस्य कथ्याङ्क सकलमाकर्ण्य विवेचनामेतां चकार। अयन्तु भारवाही बुद्धिमान् मनुज एव। तस्या आसीदेतदनुमानं वयं यत् महोत्सवं करिष्यामः एवं तस्मिन् महोत्सवे समाधिकार्यमपि भविष्यति। त्वं यद्येकस्मिन्नेतदुपलक्ष्ये किञ्चिदानुकूल्यं विधातुं शक्तोऽपि तदा त्वामप्येतदुत्सवे समांशिनं भवितुं करोम्यनुमतिम्। तेनैव तवाभीप्सितसिद्धिरपि भवत्येव। सुन्दरी सखी चापि तस्या एकवाक्यान्विता विभूषावादीन भाषितमिदं—हे वाहक, त्वं किमेतद्वचनस्य न करोषि श्रवणं किञ्चित्प्रदाने तव किञ्चित् प्रापणं भवेत् दानाभावे प्रापणमपि न भवेत्।

सर्वेषां सम्मतं चैतद् वाहकात्र निशामय।
दाने लाभो भवत्येव न दानान्न च लभ्यते॥

वाहकस्ताभिः सार्द्धं वचनवैदग्ध्यकरणे परास्तो भूत्वा तज्जन्यमहालज्जासमन्वितोऽभवत् पलायनोन्मुखः, विधाय चिन्तामिमां चेतसि आभिर्युवतिभिः सार्द्धं वचनालापेनाहमहं पराभूतोऽतः परितः पलायनमेवैतः श्रेय इति। यथा पश्वास्य आसां मञ्जुलतरकटितटं परिवीक्ष्य पर्वतमध्ये चकार पलायनं यथा वा कुरङ्गसंघ आसां नयनारविन्दपरिवीक्षणेन प्रच्छन्ने कानने विचरणं तथैव ममापि सर्वथैव कर्त्तव्यम्।

वदन्त्येतत् सर्वं सुकृतिनिवहास्तथ्यवचनैः
सुनीतिज्ञा विज्ञाः सकलमनुजान् सत्पथगतान्।
प्रतीदं स्वस्तीत्या सुहितकरणे मानवगणे
सतां माने म्लाने मरणमथवा दूरगमनम्॥

वाहकस्यैवं भावं संवीक्ष्य तत्रनामिनी बहुलगुणधारिणी रमणीगणशिरोमणिः तस्य भारवाहस्य पक्षावलम्बिनी विभूय ते प्रत्यवदद् वाणीमेतां मृदुमधुरभाषिणी सा कामिनी, अयि! भगिन्यो बहुलरसका-

रिण्यौ करोमि भवत्योरन्तिके बहुलतरविनयविकाशनम् एतं वाहकमनुकम्पा-विकाशनं विधाय अस्माकमन्तिके समवस्थितं कर्त्तुमनुमतिं विधत्ताम्। भावना भात्यस्मिन्नेषा मम हृदयमन्दिरे। मदीयैवंविधानुरोधनिधानस्य निदान-मिदम्। अयमस्माकमन्तिके करोति चेत् प्रतिवासं तदस्माकं विधातु-मामोदप्रबन्धं शक्यो भविष्यत्येव निश्चितम्।

यतः पश्यामि तस्मिन् विषये अस्यासीद् योग्यता विराजिता। हे भगिन्यौ, अहं विनिश्चित्य वदामि यद्ययं वाहकः साहसावलम्बनपूर्वकं त्वरान्वितो भूत्वा मदीयपश्चाद्गामी नाभवत् तदा कथमप्येतादृशाल्प-समयमध्ये एतावत्प्रचुरसामग्रीसंग्रहं विधातुं नैव समर्थाऽहमभवम्। एतद्व्यतीतमपि वाहकोऽयं पथिमध्ये गामं गामं यद् यत् कौतुककथां कथयति स्म, यद्यपि तत् सर्वं करोमि व्यक्तं भवत्योरन्तिके तदा एतं भारहारं प्रति मदीयानुग्रहप्रकाशे भवत्योराश्चर्य्यवोधोदयो न भवेत्। वाहक आमिन्या वाक्यमाकर्ण्य महानन्दसन्दोहाभिभूतो भूत्वा भूमितले पातित-जानुपूर्वकं तस्या आमिन्याः प्रणतिं विधाय अवादीद् वचनमिदम्—अयि! सुन्दरि! सुकुमारि! अहमेतस्यानुमानं करोमि—मदीयासीमसुखसमयः साम्प्रतं भवेत् समुपस्थितः। भवती मां प्रति प्रीतिप्रकाशं प्रकृत्य यादृग-निर्वाच्यानुकम्पाप्रकाशमकार्षीत् तन्निर्वचने मम कथंकारमपि सामर्थ्यं नास्ति। कथमपि कथनेन भवेदशेषितः।

चतुर्मुखो मे चतुराननश्चेत्(?)
चकार दानं तव कीर्त्तनाय।
तदा कथञ्चित् कथने समर्थो
भवामि भात्येव मतिममेति॥

(क्रमशः)

# सरल-चित्सुखीसारम्

( पूर्वतोऽनुवृत्तिः )

[ निबन्धकः—स्वर्गत-रमेशचन्द्र-वेदान्ततीर्थः ]

तार्किकः ॥—मदीयाभिप्रायमविद्वान् कथमेवं प्रगल्भसे ? यद्यपि तादृशानुभूतौ साक्षात् अनुभवो नास्ति, तथापि सा स्वविषयप्रमाणमन्तरेण स्वभावभेदादेव स्वविषयभेदव्यवहारं जनयेत्, अतो वस्तुस्वभावभित्तिमाश्रित्य सा स्वसत्तां गोचरयति, नहि अस्मिन् संसारे यथा एकस्य स्वभावो भवति अन्यस्यापि तथैव स्वभावेन भवितव्यमिति नियमोऽस्ति । यदि हि तथा भवेत् तर्हि जगतो वैचित्र्यमेव प्रलीयेत । सा तु अनुभूतिपरम्परावगाहिनी अनुभूतिः स्वविषयं विशेषव्यवहारं जनयति, अतो नास्ति ततस्ततः प्रमाणपरम्परानुसरणमतो न भवति अनवस्था ।

वेदान्ती ॥—यदि अन्तिमायाम अनुभूतिपरम्परावगाहिन्यामनुभूतौ प्रमाणजन्यानुभवव्यतिरेकेण स्वव्यवहारजनकत्वमत एव अनिच्छताऽपि आपतितं स्वप्रकाशत्वमङ्गीक्रियते, यतः सा अन्यानपेक्षतया स्वात्मनैव स्वविषयविशेषव्यवहारं जनयेत, एवं चेत् जनयेत् सैव प्रथमा तर्हि तथा स्वव्यवहारमिति व्यर्था अनुभूतिपरम्पराभ्युपगतिः अतिगुर्वी ।

अपि च ब्रूहि तावत्,—

अन्तिमवेदने सिद्धमवेद्यत्वं यदीष्यते ।
प्रथमस्य तथाभावे प्रद्वेषः किंनिबन्धनः ॥

तदेवम् अनुभूतेरनुभाव्यत्वेऽनुभूतिस्वरूपासिद्धिप्रसङ्गस्यैव विपक्षे बाधकतर्कत्वाद् न सन्दिग्धानैकान्तिकता ।

तार्किकः ॥—ननु कथमेवमुत्प्रेक्ष्यते श्रीमता, यत् अनुभूतौ अनुभूतित्वं स्वप्रकाशत्वं च मा भवतु का हानिः ?

वेदान्ती ॥—अस्त्येव महती विनष्टिरिष्टस्य श्रीमतः, प्रत्यभिदधातु तावदत्र पृष्टो भवान्, कथं हि नाम अध्यवसीयते अनुभूतेरस्वप्रकाशत्वं विद्वद्धुरीणैरतिप्राकृत-

मतिभिः भवद्भिर्भव्यतमैरिति, किमर्थप्रकाशसमये अनुभूतिर्न प्रकाशते एव, प्रकाशमाना वा परतः प्रकाशते इति। **अनुभूतिरर्थप्रकाशनसमये यदि न प्रकाशेत तथा सति अनन्तरक्षणे जिज्ञासोस्तत्र सन्देहो विपर्ययो वा विपरीतप्रमा वा उदियात्।** यत्र हि विषये प्रमितिर्नास्ति जिज्ञासा च चकास्ति तस्याः स्फुरणदशायां सन्देहादिर्भवत्येव, यत्र तु जिज्ञासा नास्ति तत्र प्रमित्यभावेऽपि सन्देहादिर्न जायते, नहि हिमगिरिदरीविहारिकेशरिसटासंख्यासु संदिहते जनाः, असन्दिहाना वा विपर्यस्यन्ति, अविपर्यस्यन्तो वा अभावं प्रमिणवन्ति, अप्रमिणवन्तो वा तत्तत्त्वं विचिन्वन्ति, जिज्ञासायां सत्यामपि अभावनिश्चये सन्देहादयो न जायन्ते; किन्तु यदा कस्यचिज्जनस्य कस्मिंश्चिद् विषये प्रमाज्ञानं नास्ति जिज्ञासा च वर्त्तते तदभावनिश्चयश्च न भवति तदा तस्य तस्मिन् विषये सन्देहादयो जायन्ते एव इति व्याप्तिरव्यभिचारिणी लोके दृश्यते। अत्र च अनुभूतौ जिज्ञासायां सत्यामपि सन्देहादयः कस्यचित् न जायन्ते अभावनिश्चयश्च न भवति, यतः,—**अमुमर्थमद्राक्षीत् न वा भवान्? इति केनचित् पृष्टः कश्चिद् जनोऽनन्तरक्षणे न च सन्दिग्धे न वा विपर्यस्यति संविदभावं वा न प्रमिणोति, किन्तु निश्चिनोत्येव 'इदमहमद्राक्षमि'ति,** अतो व्यापकस्य संदेहादेरभावात् व्याप्यस्य प्रकाशाभावस्य अभावः प्रकाशः सिध्यत्येव। अत्रैवमनुमानप्रयोगमर्हति अवधातुं महाभागः।—देवदत्तस्य घटज्ञानोत्पत्तिक्षणो घटज्ञानज्ञानवान् जिज्ञासितघटज्ञानगोचरसंशयविपर्ययव्यतिरेकप्रमाऽनाधारत्वात् घटानुव्यवसायक्षणवत्। यद्वा अयं ज्ञातघटज्ञानः जिज्ञासुत्वे सति तद्विषयसंशयादिरहितत्वात् इति। **तेन प्रकाशमाना एव अनुभूतिः अर्थव्यवहारं जनयतीति युक्तम्।** अतोऽस्त्येव महती हानिः, दृष्टव्याप्तिविहतिद्वारेण अनुभूतेरप्रकाशत्वे तस्या आत्मलाभासम्भवात्।

तार्किकः॥—ननु भवतो व्याप्तिरियं न समीचीना, यतः स्वप्रकाशश्चेज् ज्ञानं तत्र जिज्ञासैव नोदेतुमर्हति, जिज्ञासा हि ज्ञातुमिच्छा, न हि सा प्रकाशमाने ज्ञाने सम्भवति; तथाच जिज्ञासा एव ज्ञानस्य स्वप्रकाशतां बाधते।

वेदान्ती॥—मैवं वोचः, नहि जिज्ञासाघटितलिङ्गेन अस्माभिः स्वप्रकाशत्वं

साध्यते, यत्र यत्र जिज्ञासुत्वे सति संशयाद्यभावकूटवत्त्वं, तत्र तत्र प्रमितत्व-मिति व्याप्तिरेव जिज्ञासाघटिता, न तु लिङ्गकुक्षौ तस्य निवेशः ॥

तार्किकः ॥—भवतु एवम्, स्वीकृतं तावन्मया प्रकाशते अनुभूतिः, किन्तु सा परत एव प्रकाशते, एवं च यथा सुखादयः अनुभूतिवेद्या अपि न संशयादि-गोचरा एवम् अनुभूतेः वेद्यत्वेऽपि न संशयादिर्भविष्यतीति पक्षाङ्गीकारे का हानिः ?

वेदान्ती ॥—नच सुखादिवत् अन्याधीनप्रकाशत्वेऽपि संशयाद्य-विषयत्वोपपत्तिः, सति धर्मिणि द्वितीयज्ञाने ( अनुभवे वा ) तद्वदेव ( प्रथम-ज्ञानवत् सुखादिवद्वा ) पूर्ववत् अनवस्थादोषःस्यात् । वस्तुतो नैव भवदुक्ता सुखादिप्रतिवन्दी भवितुमर्हति, तत्रापि अस्मन्मते तत्साधकसाक्षिणः स्वप्रका-शत्वेन अनवस्थानवतारात् । भवतामेव तत्रापि दोषःस्यात् । श्रूयतामङ्ग अपरोऽपि विपक्षे वाधकस्य तर्कः, यदि अनुभूतेः परप्रकाश्यत्वमङ्गीकृत्य (?)

तार्किकः ॥—आद्यः पक्षः एकेनैव मनःसंयोगेन व्यवसायानुव्यवसाययोर्जन्म इत्यङ्गीकारे को दोषः ?

वेदान्ती ॥—न एवं वक्तुमर्हति भवान्, यतोऽस्त्येव महान् दोषः, स तु स्वसिद्धान्तानभिज्ञतया गजनिमीलिकया वा न प्रत्यभिज्ञायते श्रीमता, तथाहि व्यवसायात्मकं ज्ञानं स्वकर्मभूतम् अनुव्यवसायं जनयति, अतः अनुव्यवसायं प्रति कर्मकारकतया जनकस्य व्यवसायस्य तज्जन्यानुव्यवसायस्य च यौगपद्या-योगात् । यथाहि पितापुत्रयोः एकस्मात् कारणात् एकदा जन्म न सम्भवति एवं एकस्मात् मनःसंयोगात् कारणात् जन्यजनकयोः व्यवसायानुव्यवसाययोः युगपत् जनिर्न शक्यसम्भवा ।

तार्किकः ॥—क एवमाह यत् कार्यकारणयोः युगपत् जन्मेति, मया तु उच्यते एकस्मादेव मनःसंयोगात् व्यवसायस्य अनुव्यवसायस्य च क्रमेण जन्मेति, ततश्च न भवदुक्तदोषप्रसक्तिः ।

वेदान्ती ॥—नैतद् युक्तमभिहितं विद्वद्वर्येण भवता, करणस्य प्रत्ययपर्याये सामर्थ्यानङ्गीकारात् तीर्थकराणाम् । यतः असमवायिकारणभेद एव ज्ञान-

**भेदहेतुरभ्युपेयते, अन्यथा** आत्ममनःसंयोगरूपस्य असमवायिकारणभेदानङ्गीकारे घटं जानामीत्यत्र आत्ममनःसंयोगरूपासमवायिकारणभेदानङ्गीकारात् एकस्यैव घटरूपस्य विषयस्य विद्यमानत्वेन विषयस्य एकत्वात् कार्यभेदाजनकत्वेन घटानुभवजन्यसंस्कारस्य इन्द्रियसंप्रयोगस्य च स्मृतेः अनुभवान्तरस्य च हेतोर्विद्यमानत्वात् **अपेक्षणीयान्तरासम्भवेन युगपदेव घटानुभवस्मरणयोः अनुभवान्तरस्य च तद्विषयस्य उत्पत्तिप्रसङ्गात्** । अतः दृश्यमानः व्यवसायानुव्यवसायरूपः कार्यभेदः तदुपपादकसामग्रीभेदं कल्पयति । अतः न एकस्मात् मनःसंयोगात् अनयोः कार्ययोः उत्पत्तिः शक्योपपादा । किं **च अक्रमात् असमवायिकारणात्** मनःसंयोगात् व्यवसायानुव्यवसायरूप**कार्यभेदक्रमायोगात्** अपि न युक्तं तयोः क्रमतो जन्म ।

तार्किकः ॥—ननु भवतु कारणक्रमः अत्र व्यवसायानुव्यवसायरूपकार्यभेदे हेतुः, स तु क्रमः मनःसंयोगरूपस्य असमवायिकारणस्य न भवति, अपितु बाह्यसामग्री या विषयेन्द्रियसम्प्रयोगादिः तदीयः स एव कार्यभेदहेतुरित्युच्यते, तत्र 'घटोऽयमि'ति व्यवसाये विषयो घटः, घटं जानामीत्यनुव्यवसाये च व्यवसायात्मकं ज्ञानं विषयः, अतः **बाह्यसामग्र्यवच्छेदकक्रमभेदेन कार्यक्रमाभ्युपगम एव युक्तः** । तत् कथमुच्यते मनःसंयोगभेदाभावे कार्यभेदो भवितुं नार्हतीति ।

वेदान्ती ॥—एवमपि **युगपदेव संप्रयुक्तेषु घटपटादिषु** अनेकेषु विषयेषु, तत्र बाह्यसामग्र्यवच्छेदकक्रमभेदस्य सत्त्वेन **युगपदेव अनेकज्ञानप्रसङ्गात्** न युक्तस्ते पक्षः । यतोऽत्रापि विद्यन्ते ज्ञानसामग्र्यन्तर्भूतानां बाह्यानां घटादिविषयाणां भेदाः, तद्भेदाच्च भिन्नानि अनेकानि ज्ञानानि समुत्पत्तुमर्हेयुः, न च तथा भवन्ति तत्र सकलविषयाकलनात्मकस्य एकस्यैव ज्ञानस्य उपलम्भात् तथाभ्युपगमाच्च । तस्मात् अत्रापि व्यवसायानुव्यवसायभेदे कार्यक्रमप्रयोजकः बाह्यसामग्र्यतिरिक्तस्य आन्तरस्य कारणस्य क्रमो वक्तव्यः, तत्र च आत्ममनसोरेकत्वेन क्रमायोगात् परिशेषात् तयोः संयोगलक्षणासमवायिकारणक्रम एव प्रयोजको वक्तव्यः, ततश्च सिद्धम् एकस्मात आत्ममनःसंयोगात् न व्यवसायानुव्यवसायरूपकार्यभेद इति ।

तार्किकः ॥—न भवतु एकस्मात् व्यवसायजनकात् आत्ममनःसंयोगात् अनुव्यवसायस्यापि जन्म, आत्ममनःसंयोगान्तरात् अनुव्यवसायस्य भवतु उत्पत्तिः इति भवता तर्कितो द्वितीयपक्षः अभ्युपगतोऽस्माभिः, तथात्वेऽपि नास्मत्सिद्धान्तहानिः भविष्यति, प्रथमपक्षाङ्गीकारस्तु अभ्युपगमवादेनेति तुष्यतु भवान् ।

वेदान्ती ॥—एवं चेत् व्यवसायात्मकघटज्ञानसमये मनसि विभागजनिका क्रिया, ततो विभागः, ततः पूर्वसंयोगविनाशः, तत उत्तरसंयोगोत्पत्तिः, ततः अनुव्यवसायरूपज्ञानान्तरम् इत्यनेकक्षणविलम्बेन उत्पद्यमानस्य ज्ञानस्य अपरोक्षतया पूर्वज्ञानग्राहकत्वानुपपत्तेः न व्यवसायस्य अनुव्यवसायविषयत्वं सिध्यति यतः प्रत्यक्षविज्ञानं विषयेण संयोगादिना कारणकूटेन विद्यमानमेव विषयं गृह्णाति, नहि अतीतविषये इन्द्रियसम्प्रयोगादेः सम्भवः, येन तत् प्रत्यक्षं भवेत, इह च विषयस्य व्यवसायात्मकस्य नाशात् अनेकक्षणाव्यवहितजन्मतया अनुव्यवसायस्य, तदुत्पत्तिसमये चिरातीतत्वाच्च व्यवसायस्य नानयोः अपरोक्षविषयविषयिभावः सम्भवति, अतो भवत्येव भवतः सिद्धान्तहानिः ।

किञ्च पश्यतु तावद् भवान् बाधकान्तरम्, चक्षुरादिवत् अप्रकाशमानस्यैव ज्ञानस्य स्वातिरिक्तज्ञानजननेन अर्थप्रकाशरूपव्यवहारहेतुत्वाभावात् जडानाम् अर्थानां च स्वतः परस्परं वा प्रकाशमानत्वायोगात् ज्ञानमपि न प्रकाशते चेत् किमपि न प्रकाशेत इति जगदान्ध्यप्रसङ्गो दुर्निवारः । एतदेव पुनः स्फुटमभिधीयते मया, सावधानं श्रुत्वा निपुणं विभावयतु तावत् भवान्—इतः पूर्वं भवन्मते संविदः स्फुरणं न सम्भवतीति बाधकं निरूप्य प्रदर्शितं भवते, इदानीं सर्वस्फुरणानुपपत्तिरेव बाधिकेति प्रदर्श्यते । एवं हि भवतामभ्युपगमः, ज्ञायमानमेव ज्ञानम् अर्थव्यवहारहेतुरिति नास्ति नियमः, अज्ञातस्यापि ज्ञानस्य चक्षुरादिवत् व्यवहारहेतुत्वं सम्भवति, यथाहि चक्षुरादीनि इन्द्रियाणि स्वयम् अज्ञायमानानि अप्रकाशरूपाणि एव अर्थं प्रकाशयन्ति, एवं ज्ञानान्यपि स्वयम् अज्ञायमानान्येव अर्थं प्रकाशयन्ति इति । अत्र उच्यते मया,—एवं सति ज्ञानस्य अप्रकाशरूपत्वात् तस्य प्रकाशाय अस्ति अन्यस्य प्रकाशस्य

अपेक्षा, तस्यापि प्रकाशाय अन्यस्य, तत्रापि अन्यस्य, इत्येवं ज्ञानपरम्परा-स्वीकारेऽपि सर्वस्यैव ज्ञानस्य स्वातिरिक्तज्ञानजननेन क्षीणत्वात् न तस्य अर्थ-व्यवहारहेतुत्वं सम्भवति, अनवस्थादोषश्च दुष्परिहर आपद्यते। अनवस्थायां सत्याम् एकासिद्धौ सर्वासिद्धिप्रसङ्गश्च। अतो न अप्रकाशरूपाज् ज्ञानात् अर्थस्य प्रकाशः शक्यसमाधिः जडानां च अर्थानां स्वतः अप्रकाशरूपत्वात् न स्वतः नापि परस्परं प्रकाशमानत्वसम्भवः, जडोऽर्थः तथा ज्ञानं च न प्रकाशते चेद् न किमपि प्रकाशेत इति जगदान्ध्यप्रसङ्गो दुर्निवारः, अतः "अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे" इत्याभाणिकदशाभागितयैव घोरान्धकारनिकरकूपोदर-निपातापातस्त्वदीयानामशेषस्य जगतश्च। अतोऽगत्या अस्मत्सरणिमनुसृत्य ज्ञानस्य अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वरूपं स्वयंप्रकाशत्वमङ्गीकार्यमकामे-नापि श्रीमता, उक्तानां विपक्षे बाधकतर्काणां सद्भावाद् इत्यलं मृतमारणेन।

तार्किकः॥—अलमतिधार्ष्ट्येन, जीवत्सु तावदस्मासु प्रमाणकुशलेषु कण-भक्षाक्षपादपादोपदिष्टनयनिपुणेषु नतरां शोभते प्रमाणपरिचयापचयकृपणचेतसां भवतां वल्गितम् विद्वद्भूयिष्ठायामस्यां राजपरिषदि। अनुभूतेरवेद्यत्वसाधन-मभिप्रेयता यत् तावत् अनुमानप्रमाणमुपन्यस्तं स्वपक्षाग्रहग्रहिलेन आयुष्मता तद्धि प्रत्यक्षेण पक्षादपहृतविषयतया कालात्ययापदिष्टम्, नहि वह्नौ उष्णत्वप्रत्यक्षेण अपहृतं शीतत्वम् वह्निः शीतः द्रव्यत्वात् जलवत् इत्यनुमानेन प्रतिष्ठापयितुं शक्यते। अस्ति च प्रकृते "घटज्ञानवानहमस्मि" "ज्ञातो घट" इति प्रत्यक्षेणैव घटविशेषितज्ञानावगाहिन्या ज्ञानविशेषितघटावगाहिन्या वा अनुभूतेरवेद्यत्व-परिहारेण तद्विरुद्धस्य वेद्यत्वस्य प्रतीतिः, अतः अनुभूतेः प्रत्यक्षेण अपहृतस्य अवेद्यत्वस्य साधने कालात्ययापदिष्टतादोषः। नहि प्रत्यक्षात् प्रबलतरं किञ्चित् प्रमाणमुपलभामहे, येनास्य वेद्यत्वप्रत्यक्षस्य बाधो भवेत्, प्रत्यक्षस्यैव सकल-प्रमाणोपजीव्यत्वेन बलवत्त्वात्, नहि उपजीवकेन उपजीव्यजीवनहरणं शक्यो-पपादं दुष्चरं वा, तथात्वे स्वस्यैव आत्मलाभासम्भवात्, नहि स्वोत्पत्तिहेतुं स्वाश्रयं विनाशयितुं विनाश्य लब्धपदो भवितुं वाऽर्हति कश्चित्। अत उपरम्यता-मस्मात् मत्तोन्मत्तप्रलापात् प्राज्ञम्मन्येन।

वेदान्ती ॥—मा तावत् प्राचीकशदात्मनो वाचालतां भवान् स्वप्रकाशतापलापप्रलापेन, "घटज्ञानवानहमस्मि" "ज्ञातो घटः" इतिशब्दप्रयोगेण योऽयं प्रत्यक्षव्यवहारः प्रकटितो भवता न असौ अनुभूतेः वेद्यत्वनिबन्धनः अपि तु वेद्यत्वव्यतिरेकेण तस्याः अनुभूतेः स्वतः स्फुरणेनापि, तेन च घटस्य स्फुरणेन च तादृशः घटज्ञानवानहमस्मि इत्यादिरूपस्य व्यवहारस्य उपपत्तेः। अतो नोक्तव्यवहारः ज्ञानस्य वेद्यत्वापादनक्षमः, तथाच न कालात्ययापदिष्टतादोषः अस्मदीयस्वप्रकाशसाधकानुमानस्य। किञ्च "विदितो घटः" इत्यत्र विदित इति पदं घटस्य विशेषणम्, ततश्च विदितत्वस्य घटविशेषणत्वात् अनुव्यवसायेन घटस्यैव विदितत्वम् अवसीयते, नतु वित्तेः एवं हि नाम वेदनस्यापि विदितत्वं व्यवहारविषयत्वं वा स्यात् यदि विदित इति पदं वेदनेन समन्वियात्, नतु अस्त्येतत् घटेनैव तस्यान्वयात्।

अपि च अनुभूतेः प्रत्यक्षतायाम् अभ्युपगतायामपि अनुभूतिनिष्ठं वेद्यत्वं केन गृह्यते इति वक्तव्यम्, न तावत् अनुव्यवसायरूपात् तत्प्रत्यक्षात् अनन्तरजातेन अपरेण प्रत्यक्षज्ञानेनेति वक्तुं शक्यते, तदा अनुभूतेरतीतत्वेन तन्निष्ठवेद्यत्वस्य तेन ग्रहणासम्भवात् तदनुभूतेः प्रत्यक्षेणैव अनुव्यवसायात्मकेन ज्ञानेन तदनुभूतिनिष्ठस्य अनुभाव्यत्वस्य एकस्मिन् कर्मकर्तृविरोधदोषरूपसंप्रहारकस्य जागरूकत्वात् अप्रत्यक्षीकरणात् न प्रत्यक्षविरुद्धता। यदि प्रत्यक्षेण वेद्यत्वस्य ग्रहणं स्यात् भवेत् तदा अवेद्यत्वानुमानुय प्रत्यक्षविरोधः, नचैतदस्ति। अन्यथा यदि हि दूषणमिदमनालोच्य विद्वम्मन्येन स्वप्रौढ्या अनुव्यवसायेन अनुभूतेः प्रत्यक्षात्मकेन व्यवसायस्य अनुभूतेः स्वविशेषितवेद्यत्वस्य (स्वेन अनुव्यवसायेन ग्राह्यत्वस्य) ग्रहणे अध्यवसितम्, अनुव्यवसायवेद्यत्वे अनुव्यवसायस्यापि स्वस्य विशेषणतया स्वस्य (अनुव्यवसायस्य वेद्यत्वरूपकर्मविशेषणीभूतस्य) अपि स्वेन (अनुव्यवसायेन कर्त्रा) वेद्यत्वापातात् सौगतमतानुमतिप्रसङ्गो भवतः। नैव हि विशेषणज्ञानमन्तरेण विशिष्टस्य ज्ञानं सम्भवति, अतः अनुव्यवसायवेद्यत्वस्य विशेषणम् अनुव्यवसायोऽपि चेत् तेन अनुव्यवसायेनैव गृह्यते तदा स्वस्यैव स्वेन ग्रहणात् एकत्व अनुव्यवसायज्ञाने

कर्मत्वं कर्तृत्वं च स्यात्। सौगता हि ज्ञानस्य स्वेनैव ग्रहणम् अङ्गीकुर्वते। एवमङ्गीकारे तन्मताद् भवतः को विशेषः। परन्तु एवं सति एकस्मिन्नेव ज्ञाने कर्मत्वं कर्तृत्वञ्च विरुद्धमङ्गीकृतं स्यात्, अतो न प्रत्यक्षेण विषयापहारात् कालात्ययापदिष्टता कथमपि सम्भावयितुं शक्यते भवता। तथात्वे अपसिद्धान्तश्च भवेल्लब्धपदः श्रीमतः॥

तार्किकः॥—भवतु प्रत्यक्षविरोधस्य यथा तथा गतिः, अनुभूतिर्वेद्या वस्तुत्वात् घटवदित्यादीनाम् अवेद्यत्वविरुद्धवेद्यत्वसाधकानुमानविरोधस्य कथं परिहारः?

वेदान्ती॥—न च भवदुक्तवेद्यत्वापादकवस्तुत्वाद्यनुमानविरोधः, व्याप्तिग्रहासिद्धेः तादृशानुमानस्यैव अनुत्थानात्, कुतो हि तेन विरोधस्य सम्भवः, तदेतदवेहि,—

बाधो भवेद्धीनबलस्य शक्तेः
स्याद्वा विरोधः सह तुल्यसत्त्वैः।
अप्राप्तसत्त्वैर्न हि तौ कदाचिद्
हरेः खपुष्पान् मुषकाद् यथा वा॥

शक्तिमतोऽपि विरुद्धप्रत्यक्षस्य स्वप्रकाशसम्राजो विषये प्रवेशासम्भवादेव ततोऽप्यबिभ्यदसौ स्वप्रकाशपञ्चाननः खकुसुमवदलब्धजन्मनो वाचैव केवलं कथञ्चित् लब्धसत्ताकात् सुदुर्बलाद्वा अन्यस्मात् कस्माच्चित् सत्प्रतिपक्षित्वेनाभिमतात् अनुमानात् विरोधम् आत्मविनाशं वा अभिशंक्य किमर्हति बिभेतुम्? तत्त्वं हि तावदेतत् यदनुत्थानं स्वप्रकाशविरोधिनोऽनुमानस्य, तथाहि,—वस्तुत्वात् वेद्यत्वं साधयता यद् यद् वस्तु तत्तद् वेद्यमिति व्याप्तिरभ्युपेया, तथा सति अस्या व्याप्तेः ग्राहिका संविद् या समस्तं वस्तु तद्गतवेद्यत्वं च गृह्णाति सा व्याप्तिग्रहणसमये स्फुरति न वा? इति वक्तव्यम्। आद्ये स्फुरतीति पक्षे अङ्गीकृते स्वेनैव स्वस्य स्फुरणे पूर्वोक्तसौगतमतानुमतस्वप्रकाशतापत्तिः ततश्च ते अपसिद्धान्तापातः। स्फुरतीति अनङ्गीकृत्य तत्स्फुरणस्य स्वहेतुताया अप्यनङ्गीकारे वेदान्तसिद्धान्ताभिमतं स्वयंप्रकाशत्वं त्वया

अभ्युपगतं स्यात्। तथा च सिद्धोऽस्मत्पक्षस्त्वया अङ्गीकृतः स्वसिद्धान्तश्च परित्यक्तः। द्वितीये तु संविद् न स्फुरतीति पक्षे अङ्गीकृते संविल्लक्षणस्य वस्तु-विशेषस्य अस्फुरणादेव सर्वोपसंहारवती व्याप्तिरेव अस्तमियात्, तत्र व्याप्ति-ग्रहाभावेन कुतोऽनुमानप्रसरः कुतस्तरां च प्रकृतस्य वस्तुत्वादिति हेतोः सप्रतिसाधनता? एतेन समासत एतदुक्तं भवति, व्याप्तिज्ञानं हि मूलं तावदनुमानस्य, अत्र हि भवदीये विरुद्धानुमाने उक्तरीत्या व्याप्तिज्ञानस्यैव असम्भ-वात् मूलाभावेन अनुमानप्ररोहस्य अशक्यत्वात् नास्ति दोषाशङ्कावसर इति।

एवं सामान्यतो भवदीयानुमाने दूषणमभिहितम्, अपि च इदानीं विशेषतः प्रतिदर्शनं दूषणानि अभिधीयन्ते, भाट्टानां प्राकट्यलक्षणायाम् अर्थनिष्ठायां ज्ञान-जन्यायां ज्ञाततायां सकृद्दीयतां सावहिता दृष्टिः, तत्र तैरनवस्थाभिया वेद्यत्वं नाङ्गीक्रियते अतः स्वप्रकाशा हि सा ज्ञातता तेषाम्, अतः, वेद्यत्वरूपसाध्याभाव-वति तस्मिन् वस्तुत्वहेतोर्वृत्तेः भवति व्यभिचारात्।

यदि भट्टनये न श्रद्धातिशयो भवतः तदा स्वस्वानुगतनयेऽपि पात्यतां तावत् नेत्रम्। भवादृशस्य नैयायिकादेश्च नये यद्यपि नास्ति स्वप्रकाशं किञ्चित् तथापि वेद्यत्वस्यापि धर्मतया अत्यन्ताभावप्रतियोगित्वात् अवेद्य-स्यापि कस्यचित् सम्भवेन वस्तुत्वादेः केवलान्वयित्वेनाभिमतस्यापि हेतोः सम्भावितविपक्षतया अप्रयोजकत्वात् न प्रतितर्कस्यावकाशः।

तार्किकः ॥—कथं विपक्षबाधकतर्काभाव इति वक्तुं शक्यते, यदि अनु-भूतिरवेद्या स्यात् तदा सा वस्तु एव न स्यात् इति अनुभूतेरवेद्यत्वे वस्तुत्वा-नुपपत्तिः एव विपक्षे बाधकस्तर्कः विराजतेतराम्।

वेदान्ती ॥—न हि एतत् युक्तमुक्तम्, वस्तुत्वं हि स्फुरणाभावे निवर्त्तेत अवेद्याया अपि अनुभूतेः स्फुरणस्य स्वतःसिद्धतायामपि वस्तुत्वस्य उपपत्तेः।

तार्किकः ॥—ननु भवता अन्तःकरणवृत्तिवाचकेन अनुभूतिपदेन स्वप्रकाशा चित् लक्षयितुमभिमन्यते, एवं विचारात्मकपञ्चाङ्गन्यायविषयत्वमपि अनुभूतौ समिष्यते, एवं च अनुभूतेः लक्ष्यत्वात् न्यायविषयत्वाच्च वेद्यत्वं स्वाभिमतविरुद्ध-मापन्नं कथं वारयितुं शक्यते स्ववचोव्याघातं पश्यता प्रेक्षावता भवता।

वेदान्ती ॥—नैवं लक्ष्यत्वन्यायविषयत्वहेत्वोरपि यथोक्तमूहनीयम्, तथाहि पूर्वोक्तानि व्याप्तिग्रहणासिद्धयादिसामान्यविशेषदूषणानि अत्रापि तुल्यान्येव वर्तन्ते, अतः प्रेक्षावता भवता न चोद्यमिदमिति उपरन्तव्यं स्वयमेव ।

तार्किकः ॥—ननु उक्तम् मया,—अनुभूतिलक्षणपदं लक्ष्यविषयज्ञानजन्यं लक्षकपदत्वात् तीरादिलक्षकगङ्गादिपदवत् इति लक्षकपदत्वेन लक्ष्यविषयज्ञान-जन्यत्वमनुमेयम् इति सिद्धं भवतां साध्यस्य अवेद्यत्वस्य विरुद्धम् अनुभूतेः वेद्यत्वम् ।

वेदान्तिकः ॥—सत्यमुक्तं निरङ्कुशत्वात् तुण्डस्य, न च युक्तमुक्तम्, हेतो-रसिद्धत्वात्, न हि अनुभूतिपदम् अनुभूतिं लक्षयतीति तवाभिमतम्, तद्वा-चकत्वेनैव स्वीकारात्, अतो भवन्मते अनुभूतिपदे अनुभूतिलक्षकत्वधर्मा-भावात्, असिद्धत्वं हेतोः, न च यस्य कस्यचित् लक्षकमनुभूतिपदं पक्षः तथा सति प्रमात्रादिलक्षकानुभूतिपदस्य लक्ष्यविषयज्ञानजन्यत्वस्य सिद्धत्वेन सिद्धसाधनताप्रसङ्गः । अथ यदि अनुभूतिपदम् अनुभूतिं लक्षयतीति अङ्गीक्रियते भवता तदा अपसिद्धान्तापत्तिः ।

किञ्च लक्ष्यज्ञानशब्देन लक्ष्यकर्मकं स्फुरणम् किंवा तद्विषयं स्फुरणम् उत स्फुरणमात्रं किंवा तद्विषया अन्तःकरणवृत्तिः विवक्ष्यते भवता ? न तावदाद्यः अतीताद्यर्थलक्षकपदेषु व्यभिचारात् । तथाहि अतीताद्यर्थलक्षक-पदेषु लक्ष्यकर्मकस्फुरणजन्यत्वं नास्ति, अतीताद्यर्थानामिदानीमभावेन अनुभावा-वच्छेदकत्वाभावात्, अतः तत्र साध्याभावाधिकरणे लक्षकपदत्वहेतोर्विद्यमान-त्वाद् व्यभिचारः । न इतरे लक्ष्यविषयस्फुरणमात्रं तद्विषया अन्तःकरण-वृत्तिः वा विवक्षितुं शक्यते लक्ष्यज्ञानशब्देन, सिद्धसाधनत्वात् । अस्ति हि तत्स्वभावस्यापि (लक्ष्यस्वरूपज्ञानात्मकस्यापि) स्फुरणस्य तद्व्यवहार-जनकत्वेन तद्विषयत्वम् । यतः येन हि यस्य व्यवहारः प्रवर्त्तते तस्य हि स विषयविशेषः स्वतन्त्रः । अतः द्वितीयपक्षे लक्ष्यविषयकव्यवहारजनकत्वात् तत्-स्फुरणस्य सिद्धमस्ति तद्विषयत्वम् तस्मात् अस्मिन् पक्षे लक्षकपदे लक्ष्यविषयक-

ज्ञानजन्यत्वस्य सिद्धत्वेन स्फुटा सिद्धसाधनता, एवं तृतीयपक्षे अस्ति च स्फुरणमात्रमनुभूतेः स्फुरणमात्रत्वात्। अस्ति अस्मिन् लक्ष्यस्फुरणाजन्यत्वपक्षेऽपि लक्ष्यस्वभावभूतस्फुरणस्य लक्ष्यस्फुरणत्वात् लक्षकपदे लक्ष्यस्फुरणाजन्यत्वं सिद्धमेवेति स एव दोषः। यदि लक्ष्यज्ञानशब्देन लक्ष्यविषयान्तःकरणवृत्तिमङ्गीकृत्य चतुर्थः पक्षो विवक्ष्यते तदापि सिद्धसाधनमेव तदाकाराया वृत्तेः अस्माभिः स्वीकाराच्च। वृत्तिजन्यप्रकाशो हि नास्माभिरनुभूतौ स्वीक्रियते; वृत्तिव्याप्तिस्तु तत्राज्ञाननाशायास्मत्सम्मता एवेति निपुणं विभावय।

तार्किकः॥—अनुभूतिपदवाच्यस्य लक्ष्यस्य वा स्वप्रकाशत्वं भवतः? यदि वाच्यस्य तदा भवतामपसिद्धान्तापातः, अथ लक्ष्यस्य तदा प्रतिवादिनं प्रति असिद्धिरिति यद् दूषणमभिहितं मया तत्र ते किमुत्तरम्!

वेदान्ती॥—अयमपि विकल्पोऽनुपपन्नः, उभयवादिसम्प्रतिपन्नस्फुरणमात्रस्य स्वप्रकाशत्वप्रतिपादनात्। श्रीमताऽपि एषैव गतिराश्रयणीया, अन्यथा वेद्यत्वसाधनेऽपि तवास्य विकल्पस्य दुष्परिहरत्वात्। अवधत्स्व तावत् निपुणम्,—यदि अनुभूतिपदवाच्यस्य भवता वेद्यत्वं साध्यते तदा अस्माकं सिद्धस्यैव साधनात् तव सिद्धसाधनतादोषः, यतोऽस्माभिः अनुभूतिपदवाच्याया वृत्तेः वेद्यत्वमभ्युपेयते एव, स्वविषयत्वात् तस्याः, लक्ष्यस्य वेद्यत्वसाधने तवैव असिद्धिः, न हि अनुभूतिपदलक्ष्यम् अस्ति भवतः सम्मतं किञ्चित् यस्य वेद्यत्वं साध्यते। अतः वाच्यत्वलक्ष्यत्वरूपविशेषं विहाय साधारणांशग्रहणमेव तव शरणम्, ममापि तथा चेत् कथं तद्दूषणतया समुद्घोष्यते पटहनिनादैः।

तार्किकः॥—यद्यपि भवदुक्तानुमानस्य विशेषतो दूषणं न स्फुरति, तथापि यथा आयुष्मता अनुभूतेः स्वप्रकाशता अनुमीयते नन्वेवम् अस्माभिः अपि घटः स्वयंप्रकाशो घटत्वात् यन्नैवं तन्नैवं यथा पटः इति अनुमातुं शक्यते, यद्युच्यते घटत्वादित्ययं हेत्वाभासः, ननु हेतुः तदा मयापि वक्तुं शक्यते, भवतः अनुभूतित्वादित्ययं हेत्वाभासः ननु हेतुः इत्याभाससमानयोगक्षेमता हेतोरिति। अनया च रीत्या जगति सर्वे एव पदार्थाः स्वप्रकाशा भवेयुः, अहो महान् महिमा ते

स्वप्रकाशत्वस्य येन जगतीतलस्थाः सकला एव पदार्थाः क्रोडीकृताः ! धन्याश्च यूयं तस्यापि क्रोडीकर्त्तारः, कृतार्थी च वः अनुमानपद्धतिः ।

वेदान्ती ॥—गगनगले निगलं लगयितुं प्रगल्भवाचा एवमुच्यते चेत्, मयापि प्रदीयते तदुपशमनाय समुचितोऽयं महौषधिरसः । मैवं प्रमत्तवत् प्रलपितुर्महति भवान्, पृथुबुध्नोदराकारस्य घटशब्दवाच्यस्य स्पर्शरूपादिमतः अत एव चक्षुःस्पर्शनप्रमाणसिद्धत्वेन सम्मतस्य स्वप्रकाशत्वसाधने प्रत्यक्ष-विरोधात् । घटादौ पक्षे प्रत्यक्षवेद्यत्वस्य विद्यमानतया अवेद्यत्वरूपस्वप्रकाशत्व-साधने भवदनुमाने बाधं पश्यता न्यायनिपुणेन भवता प्रेक्षावता कथमेवं वल्गितमित्यहो आश्चर्यम् । यदि प्रत्यक्षादिप्रमाणाविषये कस्मिंश्चिद् घटे स्वप्रकाशता साध्यते भवता तदपि न प्रमितिपदवीमधिरोहति,—अतद्विषयस्य चाप्रसिद्धत्वेन धर्म्यसिद्धेः । नहि प्रत्यक्षाद्यविषयः सिद्धोऽस्ति कश्चिद् घटः येन सपक्षः स्यात्, अतः पक्षासिद्धिरेव दूषणं समापतति पक्षे तस्मिन् ।

तार्किकः ॥—एवं चेत् अत्रापि भवदनुमाने अवेद्यस्य अनुभूतित्वमप्रसिद्ध-मिति मयापि अनायासं वाच्यम् ।

वेदान्ती ॥—न च एवं वक्तुं शक्यते श्रीमता, तथा सति तस्या वेद्य-त्वावेद्यत्वयोर्वादिनां विप्रतिपत्त्यभावप्रसङ्गात् । अतो वादिनां विवाद एव वेद्यावेद्यसाधारणानुभूतिप्रसिद्धौ प्रमाणम् ।

तार्किकः ॥—अहो साहसिक्यम्, एवं किं न समालोक्यते त्वया मयोद्-भाविता उभयतःपाशा रज्जुः ; वैदान्तिकपशो ! यदि स्वप्रकाशे किमपि प्रमाणमभिप्रैषि तदा तस्य प्रमाणवेद्यत्वस्वीकारात् स्वप्रकाशत्वहानिः, यदि तत्र नाङ्गीकरोषि किमपि प्रमाणं तदा असिद्धिः, तदियम् आविर्भूता मे उभयतः-पाशा रज्जुः । स्थिरीभव तावदिदानीम् ।

वेदान्ती ॥—न च शोभतेतरां विद्वम्मन्यस्य ते वेदान्ततत्त्वानभिज्ञता-निबन्धना समधिकमोहततिमाद्योतयन्तीयमुक्तिः । अस्माकं हि प्रमाण-जनितायाः विषयाकारायाः साभासाया अन्तःकरणवृत्तेः द्वयी शक्तिः, घटविषयिणी घटाकारा वृत्तिर्घटं विषयीकृत्य "घटो नास्ति" "घटो न भाति" इत्यादिप्रतीतिसिद्धं

घटगतम् अज्ञानं नाशयति, वृत्तौ प्रतिबिम्बितचिदाभासश्च अप्रकाशरूपं जडं घटं प्रकाशयति, ततश्चायं घट इति ज्ञानमुत्पद्यते, अनुभूत्याकारा च वृत्तिः अनुभूतिगतमज्ञानमेव नाशयति नतु तां प्रकाशयितुमर्हति, स्वयंप्रकाशरूपत्वात् तस्याः, नहि प्रदीपप्रकाशः प्रचण्डप्रकाशं मार्त्तण्डमण्डलं प्रकाशयितुं प्रभवति, अतः अनुभूतेः वृत्तिजन्यप्रकाशरूपफलाश्रयत्वाभावेन न वेद्यत्वम्, अतः भाट्टानाम्, अनुभूतेः प्रमाणजन्यस्फुरणाश्रयतया अन्येषां स्फुरणकर्मतया वा घटादिवत् विषयभावाभावेऽपि प्रमाणजनितान्तःकरणवृत्तिव्याप्यत्वेन विषयतांगीकारेऽपि स्वयंप्रकाशत्वाव्याघातात्। उक्तवृत्तिव्याप्यत्वेऽपि स्फुरणव्याप्यत्वाभावापराधेन न अप्रामाणिकताऽपि, स्फुरणव्याप्यत्वे सति घटादौ प्रामाणिकत्वस्य दृष्टत्वेन अन्वयसत्त्वेऽपि स्फुरणव्याप्यत्वात् भावे प्रामाणिकत्वाभावरूपस्य केवलव्यतिरेकस्य अभावात्। नहि सम्भवव्यतिरेकयोः अन्वयमात्रात् हेतुहेतुमद्भावनिश्चयः, अतिप्रसङ्गात्। मा भूत् तुरगेखरवर्णयोः हेतुहेतुमद्भावः, सम्भवति हि तत्र अन्वयः। भाट्टैः अपि अतीतानागतयोः विषययोः प्राकट्यलक्षणस्य फलस्य अनाश्रयतया स्फुरणरूपफलविरहिणोः उक्तान्तःकरणवृत्तिव्याप्तयोः प्रामाणिकत्वमभ्युपगतम्, तार्किकास्तु वृत्तिफलविभागमेव न जानन्ति, न तेषु अस्ति किमपि वक्तव्यम्। अतः अनुभूतेः फलव्याप्यत्वाभावेऽपि वृत्तिविषयतामात्रेण प्रामाणिकत्वं सिद्धम्॥

(क्रमशः)

## निष्प्रज्ञो नाशयत्येव प्रभोरर्थमथाऽऽत्मनः

अयमामलकानेता देवेदानीं निशम्यताम् ।
कस्याप्यभूद् गृहस्थस्य भृत्यः कश्चन मुग्धधीः ॥
समादिशद् गृहस्थस्तं भृत्यमामलकप्रियः ।
गच्छाऽऽरामात् सुमधुराण्यानयाऽऽमलकानि मे ॥
एकैकं दशनच्छेदेनाऽऽस्वाद्याऽऽनीतवाञ्जडः ।
आस्वाद्य मधुराण्येतान्यानीतानीत्यतां प्रभुः ॥
सोऽब्रवीत् सोऽपि तान्यर्द्धोच्छिष्टान्यालोक्य कुत्सया ।
जहौ गृहपतिस्तेन भृत्येनाबुद्धिना समम् ॥
निष्प्रज्ञो नाशयत्येवं प्रभोरर्थमथात्मनः ।

## सर्वश्चित्तप्रमाणेन सदसद्वाऽभिवाञ्छति

श्रूयतां नापितस्याथो मुग्धोऽत्र च पुमानयम् ।
कर्णाटः कोऽपि भूपं स्वं रणे शौर्यादतोषयत् ॥
स प्रसन्नो नृपस्तस्मायभीष्टं दत्तवान् वरम् ।
तस्यैव नापितं वव्रे नपुंसकनिभो भटः ॥
सर्वश्चित्तप्रमाणेन सदसद् वाऽऽभिवाञ्छति ।
न किञ्चिन्मार्गणां चेमम्मुन्मुग्धं शृणुताधुना ॥

## न किञ्चित्ते ददामि

कश्चित् पाथ व्रजन् मूर्खः शकटस्थेन केनचित् ।
ऊचे समं कुरुष्वैतच्छकटं मे मनागिति ॥
समं करोमि चेत्तन्मे किं ददासीति वादिनम् ।
न किञ्चित्ते ददामीति शकटी निजगाद तम् ॥
ततः स मूर्खः शकटं समं कृत्वैव तस्य तत् ।
तन्मे न किञ्चिद्देहीति तं ययाचे स चाहसत् ॥

# राजसूयप्रबन्धस्य उपोद्घातः

प्रबन्धोऽयं राजसूयनामा व्यरचि सुप्रसिद्धकेरलीयेन मेप्पत्तूर्वंशतिलकेन नारायणभट्टपादेन कविपण्डित सार्वभौमेण। अयं च कविराड् वैदिककुलललामभूतस्य मातृगुप्तपण्डितवरेण्यस्याऽऽत्मसंभवः मीमांसाशास्त्रजीवातोः पय्यूर्भट्टवंशावतंसस्य 'मीमांसाचक्रवर्तिनः' परमेश्वरस्य च भागिनेयः। तद्वंशसंभवादेवाधिगतवेदतदंगशास्त्रसंस्कारसमुन्मेषोऽयं पितुःसकाशान्मीमांसाम्, माधवार्यविदुषो न्यायशास्त्रं, महनीयकलानिधेरच्युतार्याद् व्याकरणज्यौतिषे चाधीत्य विद्याया एवोत्तमालंकारस्समजनीत्यैतिह्यात् समवगम्यते। एष पण्डितकुलतिलकः षोडशशतपूर्वार्धानन्तरं शताधिकान् वत्सरान् केरलानलंचकारेति हस्तावलंबन्ति तद्ग्रन्थेषु दृश्यमानानि 'आयुरारोग्यसौख्यम्' इत्यादीनि कविवाक्यान्येव। नारायणीयं भागवतसर्वस्वं श्रीपादसप्ततिमुख्यानि नैकानि स्तोत्राणि भक्तिमार्गे, महनीयानि प्रबन्धरूपाणि दश काव्यरत्नानि साहित्ये, प्रक्रियासर्वस्वधातुकाव्ये व्याकरणशास्त्रे, मानमेयोदयाख्यं प्रकरणग्रन्थमाचार्यकुमारिलमतपाथोधिनौकां मीमांसादर्शने च सरसया वाक्यसरण्या निर्माय भक्तोत्तमोऽयं विद्वत्कुलसमक्षमाचन्द्रतारं यशःकायेन विजयते।

अण्णामलै विश्वविद्यालयः
अण्णामलै नगर
१-१-३५

के० रामपिषारटि, यं० ए

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| April, 1935. | १८५६ शकीये चैत्रे १७श-वर्षस्य १२श-संख्या | Vol. XVIII No. 12 |


## आरव्ययामिनी

( वगृदादस्थितरमणीत्रयसहितं वाहकस्य कथोपकथनम् )

( पूर्वतोऽनुवृत्तिः )

परन्तु स वाहकस्ताखिमिता युवतीः समाहूय निजगाद वचनमिदम्। हे मान्या युवतिगणवरेण्या रमण्यग्रगण्याः, भवत्यश्चेदं विवेचनं मा कुर्वन्तु यद् यस्याहमकार्षं समादरणं तेन परस्मिन्नहं करिष्यामि कृतघ्नताचरणम्. यद्वा स्वमेव स्वयं सम्भ्रमयोग्यपात्रं विविच्य भविष्यामि महादर्पसमन्वित इति। अहमस्मि चिरदिनं भवतीनां दासानुदासः। स वाहकः एतद्रूपभाषित-मुक्त्वा यन्मुद्राया अकार्षीत् गुरुतरभारवहनेन प्रापणं तस्याः सर्वस्याः प्रत्यर्पणं विधातुम् अकरोत् उपक्रमम्। तेनैव सा जोवादो मधुरव्याहारवादिनी वदति स्म वचनमिदं सहासवदनेन—हे वाहक! एतन्मुद्रायाः कुरु तवान्तिके संस्थापनम्। कस्मैचिद् मानवायास्मदीयकर्मसम्पादकाय प्रतिभृतिकरूपेण यदर्थादिकप्रदानं कुर्मः, पुनस्तत्प्रत्याहरणं नैव कुर्मः। किन्त्वेकं वदामि निगूढ-

भाषितम् । स तु समाहितो भूत्वात्र एतद्रूपशपथेन अस्माकमन्तिके (?)वासव-स्थितं विधातुं कुर्महे मतिम्(?) । तदेव तव कर्त्तुं भविता सर्वथा । वदामि सविशेषणं वृत्तान्तं तत् एवमस्माकं नियमानुवर्ती भूत्वा परितः सदाचरणं कर्त्तुमत्र भविता । हे वाहक, वदामि ते मुहुर्मुहुरस्माकं गुप्तविषयं प्राणान्तेऽपि केषामन्तिके मा वक्तव्यम् । एवमेव प्रकारेण जोवादी वाहकेन सार्द्धं करोति स्म बहुविधकथोपकथनम् । एतस्मिन्नेव समये आमिनी स्वकीयवसनपरिवर्त्तन-पूर्वकं भोजनायैनमेवं परिवेशनादिकरणार्थं चकार दृढरूपेण कटिवन्धनं वसनाञ्चलेन । परन्तु अकार्षीत् बहुविधमांसमेवं कतिपयपात्रपरिपूर्ण-मदिरां तथा पानार्थं स्वर्णनिर्मितं नानाप्रकारं चषकं भोजनस्थाने समुपनीतम् । तदनु वाहकेन सार्द्धं सर्वा युवत्यश्चतुर्दिक्षु विधाय संवेष्टनं कुर्वन्ति स्म समुपवेशनम् । महानन्दसमन्विता भोजनार्थं वाहकस्य सन्निधाने समुपवेशनार्थं चक्रिरे अनुमतिमनुकम्पां विधाय । स च वाहकः परमसुन्दरत्रिसम्मिलरमणीरत्नसहितो भोजनार्थं समासीनो भूत्वा परम-सुखानुभवं विदधत् स्वयमेव स्वात्मानं कृतार्थप्रायं कर्त्तुं प्रवर्त्तितः । एवं चकार चिन्तनमिदं चेतसि । अहो वर्त्तमानवासरे मम सर्वथैवासीत् सुप्रभातम्, यासां रमणीमण्डलमण्डनसन्निभकामिनीनां वचनश्रवणमपि मादृशामसम्भाव्यम् एव, तत्र ताभिः सहितं बहुलालापकलापेन करोम्यत्र भोजनं किमाश्चर्यमितोऽधिकम् ।

कस्मिन् काले कथं कस्य भविता सुसुखोदयः ।
तत्तत्त्वनिर्णयं कर्त्तुं कोऽपि शक्तो न सम्भवेत् ॥

परन्तु सर्वास्ता युवत्य आहारारम्भं कर्त्तुम् आसन् प्रवर्त्तिताः । तस्मिन्नामिनी कामिनीशिरोमणिः स्वकीयपानार्थमेकस्मिन् पात्रमध्ये किञ्चि-न्मदिराक्षेपणमकार्षीत् । एवमारवमानवानां व्यवहारानुसारेण पानपूर्वकम् वारद्वयं तत्पात्रं मद्येन पूरितं कृत्वा क्रमशस्ते भगिन्यौ द्वे प्रति समर्पितं चक्रे । ते च जोवादी-सफ्यौ क्रमशोऽकुरुतां पानं महासन्तोष-भरेण । तदनु तत् पात्रं पुनः कृत्वा परिपूर्णं मदिरया भारहारकरकमले

चकार समर्पितम्, स च वाहकस्तस्याः पाणिपङ्कजचुम्बनपूर्वकं विधाय सुरापात्रसंग्रहणं पानकरणात् पूर्वमेकं सङ्गीतस्याकार्षीत् समारम्भणम्, तस्य च वाहकसङ्गीतस्य मर्मार्थ एषः।

यथा कथञ्चित् सुरभिगन्धयुक्तस्थलद्वारा गन्धवहे वहमाने सति तत्स्थलस्य सौरभ्यमन्यत्र करोति गमनं विधाय जनानां मनोऽपहरणम्, तद्रूपमहं यन्मदिराभाण्डं संप्राप्येतत्पानोपक्रमं करोमि एतद् भवत्या हस्तादागतमिति कृत्वा स्वाभाविकापेक्षयाऽधिकतररसगन्धिसंयुतमेव भवेत्।

वाहकस्यैवंविधसङ्गीतश्रवणेन तास्तिमिता रमण्यः महासन्तोषरत्नाकरे भवन्ति स्म निमज्जिताः।

एवं ता अपि युवत्यः क्रमश एकैकं मनोहरं सङ्गीतं कोकिलालापनिन्दितलपितं सुमधुरव्याहारविसरेण प्रचक्रिरे। तस्मिन सभारवाहकाः सर्वा एव महाप्रमोदप्रवाहेण चक्रुः कालवर्तनम्।

कुर्वते क्व च सङ्गीतं कस्मिन् हासं प्रचक्रिरे।
कस्मिन् वा वचनालापं ताः सर्वाः कुर्वते मुदा॥

स्वाभाविकमेव ताः सर्वाः महामोदकरणे नितान्तौत्सुक्यसमन्विताः तस्मिंस्तु बहुलतरमन्दिरायानन्दनिवहोऽपि विभाति स्म चित्तकन्दरे। अतः प्रमोदालापादौ का कथा एवमेव प्रकारेण बहुलकालं चकार चकार सम्बराहितं ताभिर्वाहकः।

महानन्दसिन्धौ तरङ्गान्विते निमज्जन्ति नार्यस्तदा सर्वथा।
न दुःखस्य लेशस्य चाभ्युदयोऽभवत तत्र तासां प्रमोदोदयात्॥

मुहुः कौतुके दत्तचित्ता युवत्यः
सुरापानमत्ताः प्रमत्तैव यावत्।
प्रचक्रुस्तदा ताः सुमिष्टादिभोगं
यथेष्टं विशिष्टा रमण्योऽतितुष्टाः॥१६॥

दिवसस्य प्रायावसाने सा सखी निजगाद तं वाहकं प्रति भाषितमिदम्। हे भारवाहक, भगिन्यौ वदतः त्वमस्मिन् गात्रोत्थानं विधाय कुरु स्वस्थाना-

भिमुखे गमनम्। प्रस्थानोद्योग इतः परं कथञ्चित् कालविलम्बिते कृते तव गमनस्य समयो भवेद्‌तिवाहितः। तेन समागतायां यामिन्यां प्रगते तव क्लेशबाहुल्यमेव भविता। अतः सत्वरं मद्‌वचनावलम्बनं विधाय कुरुष्व यात्रामिति तासां युवतिरत्नानां परिवर्ज्जनं विधाय नासीत् तस्य वाहकस्य वासना विकसिता गमने निजनिकेतनस्य।

ततः सफीवचनमाकर्ण्यावादीत् प्रतिवचनमिदं नितान्तविनीत-भावेन। हे मान्याः कन्दर्पदर्पखर्वकारिकाः कामिनीगणगणिताः, मामेवं-प्रकारावस्थान्वितं विधाय साम्प्रतं कुत्र गन्तुमादेशं कुर्वन्ति। भवतीनां मनोहररूपलावण्यसमीक्षणे सुमधुरव्याहारविसरश्रवणेऽपि च अहमानन्द-सागरे निमग्नो भूत्वा विकृतचैतन्यप्राय एवावस्थानमत्र करोमि स्म। साम्प्रतं स्वकीयमन्दिरगमनस्य वर्त्मपरिज्ञानेऽसमर्थ इति। मदीयचैतन्योदय-निमित्तं एकयामिनीमात्रं निवस्तुमस्मिन् कुर्वन्तु सम्मतिप्रकाशनम्। करिष्यन्ति यत्रानुमतिमवस्थातुं तत्रैव महासन्तोषभावेन करोम्यद्य निवसतिम्। सम्पूर्णैकनिशामन्तरेणाहं न करिष्यामि मदीयस्वाभाविकचैतन्यस्य संलाभं किन्तु अस्मिन् करिष्याम्यस्मात् स्थानात् स्वस्थानाभिमुखे प्रस्थानं तस्मिन्नपि मदीयान्तःकरणस्याधिकांशमत्र स्थाने एव करिष्यति समवस्था-नम्। वदामि बहुविधविनयं विधाय लपितमेतद् भवत्यन्तिके महानन्द-सागराभिषिक्तस्य मम मा कुर्वन्तु साम्प्रतं निरानन्दनीरनिक्षेपम्।

विधाय पूर्वं बहुमोदसञ्चयं
मया समं सत्प्रकृतेर्विवासनात्।
प्रस्थानमस्मान्निलये च साम्प्रतं
ब्रुवन्ति कर्त्तुं गमने कथं वराः॥
मदीयचित्तभ्रमरो विराजते
निरन्तरं सत्पदपङ्कजे मुदा।
युष्माकमेतद् वचनं विनिश्चितं
वदामि मान्या युवतिव्रजोत्तमाः॥

परन्तु सा आमिनी वाहकस्य रसान्वितसकातरवचननिकरमाकर्ण्य महाकौतुकान्विता स्नेहसन्दोहसंयुता चाभवत्। एवं तस्य वाहकस्य पक्षपातावलम्बनं कृत्वा गृहाधीश्वरीं जोवादीं प्रत्यवादीद् वचनमिदम्। अयि! भगिनि! वाहकोऽयमवादीद् यल्लपितं तत् तथ्यमेव मन्ये; भवत्यनुमानमिदं मम मानसे—अस्य प्रार्थनीयविषयो नासङ्गतः। अयमकार्षीदस्माकमालयागमं यावत् नानारूपेण प्रमोदप्रबन्धम्। यद्यपि मदीयवचनं करोषि प्रतिपालनं तदानुरोधं विधाय वदामि वर्त्तमानवासरयामिन्यामिमं महामोदसम्पादकं वाहकमस्माकमन्तिके समवस्थानार्थं कुरुष्वानुमतिम्। येनानन्तवचनालपनानि करोमि येन च भवेत् मनोमन्दिरादस्मदीयाद् ध्वान्तसन्दोहविध्वंसनम् प्रमोदकरवचनालापनप्रदीपेन सर्वथास्माकम्। निशाम्य आमिन्या वाणीसकलं सा च जोवादी च भावितमिदमवादीत् मृदुमधुरव्याहारवादी।

अयि भगिनि, त्वं यदि वाहकस्य अत्रावस्थानार्थमनुरुध्यसे तर्हि भवादृशानुरोधप्रबन्धस्योपेक्षणं विधातुं न भवामि समर्था। त्वां प्रति यत आसीन्मे महती प्रीतिः। परन्तु तं वाहकं समाहूय निजगाद। हे वाहक! बहुलरसकरवाक्यवादक, त्वदीयप्रार्थनीयविषयमहं कुर्याम् अत्रावस्थानमेकमङ्गीकार्यं कर्त्तुं भविता। वयं यामिन्यां यद् यदाचारव्यवहारादिकं करिष्यामः तेषां कारणानुसन्धानं कर्त्तुं कथंकारमपि न शक्ष्यसे। अस्माकं चरितकर्मणा सार्द्धं तव किञ्चिदपि संसर्गो नैव भविता। किन्तु यदि स्वयं प्रवर्त्तनेनास्मदाचरितकृतिविषये कथञ्चित् करोषि त्वं प्रश्नसूचकवाक्यप्रयोगं तदा त्वां प्रति प्रातिकूल्याचरणं कृत्वा तस्यामेव करिष्यामो विपरीतव्याहारं महाभयङ्करं रोमहर्षणविधायकम्; अतो वदामि मुहुर्मुहुस्तत्प्रश्ने कृते तव नितान्तमेव निरानन्दनिकरनीरधिनीरे निपतनं निश्चितं भविता। अतः सतर्कभावेन कुरु समवस्थानं कस्यचिदपि विषयस्य तत्त्वानुसन्धानं मा कुरु सर्वथा। जोवाद्या एतादृशवचननिचयं निशम्य वाहको विधाय विनयविसरं चकार प्रत्युत्तरमिदम्, हे मान्ये! अहं भवतीनाम् अन्तिकेऽङ्गी-

कार्य कृत्वा वदामि भूयोऽनुकम्पया यदादेशं करिष्यन्ति परितोऽहं तदेव करिष्यामि। एवं कायमनोवाक्येनैव तदादेशप्रतिपालने भवामि यत्नसंयुतः सर्वथा। भवदीयभाषितनियमलङ्घनजन्यं मां प्रति भवतीनां भर्त्सनादिकं प्रकाण्डदण्डविधानमपि कर्त्तुं नो भविता। अहं भवतीनामन्तिके मदीयं तत् प्रखरतरवागिन्द्रियं विधाय निर्वाकं कारयामि संस्थापनम्। एवं मदीयंतन्न-यनद्वयं दर्पणमिव विभूय करिष्यति समवस्थानम्। तस्मिन्नेकनिमेषेण दृष्टपदार्थस्य स्थानान्तरितभवने निमेषान्तरेण तस्य चिह्नमात्रस्यापि प्रकाशो न भविता। हस्तपादादिकर्मेन्द्रियाणामपि करिष्याम्यत्र यामिन्यां संयमं येन केषामपि प्रचलनानतिरिक्तविषये न भवति। निशम्य मनोरमवचनं वाहकस्य जोवादी गम्भीरव्याहारेणावादीत्। हे वाहक! यत् त्वां प्रति नियमावद्धं कुर्महे एतदभिनवो नियमो नासीत्। अस्माकं मध्येऽप्येन-द्रूपनियमो निर्द्धारितः। तत् पश्य द्वारोपरिभागे किमस्त्यङ्कितम्। वाहकस्तस्या एवंविधवचने किञ्चिदन्तरे समये विधायोर्द्धं दृष्टिं करोति स्म समवलो-कनम्।

स्वर्णमण्डितमञ्जुलबृहदक्षरेण लिप्तमासीद् वृत्तमेतत्। यः कोऽपि स्वकीयानधिकारविषयचर्चां करोति अकाण्डक्षितिमण्डलेऽस्मिन् तस्यैवा-सन्तोषसूचकभाषितसङ्गतश्रवणं कर्त्तुं भविता अप्रस्तुताभिधाने च भवेद् यदविनिन्दनं तत्र का कथा।

अप्रस्तुताभिधायी यो भविता जनसञ्चयैः।
सज्जनैर्गर्हणीयः स भवत्येव निरन्तरम्॥
मुनिमुख्यकणादस्य अप्रस्तावितभाषिणः।
निन्दनं कुर्वते सर्वे षट्पदार्थोपवर्णने॥

तत्परं स वाहकस्तद्रमणीगणानामन्तिके प्रत्यागमनं कृत्वा वदति स्म वचनमिदम्, हे मान्या गण्याः—अहं विधाय शपथं वदामि भवतीनां सन्निधाने अनधिकारविचारणाकरणं तावद् दूरे विराजतु, भवतीनां समा-चरितविषये एकमात्रमपि वचनं(?) न करोमि प्रयोगम्।

मदीयवाक्यं न कदापि मृषा भवेत्
वदामि तस्यं शपथं विकृत्य तु ।
यद्यत्र सूर्यः प्रभवेत् कदोदयः
प्रतीचिदिङ्मण्डलदेशतः ॥
वैश्वानरस्य च भवेद् यदि शीतलत्वं
पद्मं प्रकाशितमहो यदि पर्वताग्रे ।
यद्यत्र कुत्र दिवसे प्रचलेच्च मेरु-
र्मद्वाक्यलङ्घनमहो न भवेत् तथापि ॥

इत्यारव्ययामिन्यां प्रथमखण्डे सहरियारसहर्जादिसंवादे वग्‌दादस्थित-रमणीत्रयसहितं वाहकस्य कथोपकथनं नाम द्वाविंशतिः (?) सर्गः ।

श्रीमच् श्रीशम्भुचन्द्रो नरपतितिलकः सर्वदेशप्रसिद्धः
काकीनायां नगर्य्यां विलसति सुकृतियुतो धीमान् वरीयान् ।
स्मारं स्मारं तदाज्ञां तनुत इति मुदा श्रीजगद्बन्धुविप्रो
विज्ञोऽस्याः पुस्तिकाया निजगुणवशतः क्षामयेद् दोषसङ्घान् ॥

---

# मालतीमाधवे नायकचरितम्

[ निबन्धकः—श्रीशिवशङ्करशास्त्री ]

### पूर्वरागः

मालतीमाधवे नाम प्रकरणे नायको माधवो नाम । स च 'ब्राह्मण-कुमारः' 'अमात्यः' मालतीमात्रनिरतत्वाद् "अनुकूलः" । त्यागादिसामान्यगुण-वत्त्वात् 'धीरप्रशान्तश्च' । तथाहि "रे रे ब्राह्मणडिम्भ" इत्यघोरघण्टकृत-माधवसम्बोधनादस्य—ब्राह्मणत्वम् । अमात्यत्वञ्च पुनरमात्यपुत्रत्वेन

"भाविनि भूतवदुपचारा"द्वगन्तव्यम् । माधवो विदर्भराजस्य मन्त्रिणो देवरातस्य पुत्रः । पद्मावतीनगर्यां चाध्ययनाद्वसति स्म । मालत्याः पद्मावतीराजस्य मन्त्रिणो भूरिवसोर्दुहितुः प्रणयमार्थयत । सन्न्यासिन्याः कामन्दक्यास्तस्याश्च शिष्यायाः सौदामिन्याः समक्षमुभयोर्देवरातभूरिवस्वोः सन्ततिद्वारा वैवाहिकसूत्रेण बन्धनरूपप्रतिश्रुत्यनुसारेण—पद्मावतीनगर्यां प्रहितो माधवोऽध्यात्मविद्यापरिग्रहाय देवरातेन । स्ववयस्यनन्दनेन सह मालत्याः परिणयमभ्यलषत् पद्मावतीराजः । अतो देवरातेन दत्तभारा कामन्दकी तयोर्मेलनसंघटनार्थं कृतप्रतिज्ञा जाता । पद्मावतीनगर्यां द्वयोः प्रणयिनोः परस्परसन्दर्शनं संघटितम् । उभावन्योऽन्यं जातानुरागौ । मालतीदर्शनादारभ्य माधवोऽवतीर्णोऽभूद्रतिरमणबाणगोचरताम् । मालती चापि वल्लभावलोकनात् प्रभृति मदनवेदनाखिद्यमानमानसा जाता । माधवोऽचिरदृष्टां मालतीं बहुकालं विषयान्तरपरिहारेण चिन्तयित्वा मन्थर-विवेकोऽभूत् । तेन लज्जा विजिता, विनिवारितो विनय उन्मथिना च धीरता । किं बहुना—

सन्तापसन्ततिमहाव्यसनाय तस्या-
मासक्तमेतदनपेक्षितहेतु चेतः । इति ।

अतो मदनोद्याने साक्षादेव परस्परसन्दर्शनेन मालतीमाधवयोरन्यान्यानुरागोत्पत्तेस्तदप्राप्तेश्च दशाविशेषोत्पादादत्र पूर्वरागलक्षणो विप्रलम्भाख्य-शृङ्गार एव प्रधानतमो रसः । तल्लक्षणं यथा दर्पणे—।

श्रवणाद्दर्शनाद्वाऽपि मिथः संरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥

धीरप्रकृतिर्माधवो बहुदिवसोपचीयमानं मन्मथव्यथाविकारमुपलभमानोऽपि प्रियसखस्य मकरन्दस्य-समीपे लज्जया तस्यापह्नुतिं विहितवान् । नैषधे राजा नल इव स एवमवस्थामापन्नः समजनि--

'अवाप सापत्रपतां स माधवो
जितेन्द्रियाणां धुरि कीर्तितस्थितिः ।

असम्बरे सम्बरवैरिविक्रमे
क्रमेण तत्र स्फुटतामुपेयुषि ॥'

अतो मकरन्देन प्रियवयस्येनाऽसगमनादिकमवलोक्यानुमितमाधवचित्तविकारेण पृच्छ्यमानो माधवोऽवनतमुग्धमुखपुण्डरीकोऽतिष्ठत्। कृताभियोगस्याप्यात्मनोऽनङ्गचिह्नगोपनं तदुक्त्यैव प्रतिपाद्यते—'अहन्तु तस्याः सर्वाकारहृदयङ्गमायाः सम्भाव्यमानस्नेहरसेनाभिसन्धिना विधेयीकृतोऽपि पारिप्लवत्वमात्मनोऽपनिह्नोतुकामः प्राक्प्रस्तुतस्य बकुलदाम्नो यथा कथञ्चिदवशेषं ग्रथितवानेव।' अहो धीरता माधवस्य!

तथाचोक्तं महाकविकालिदासेन—

'विकारहेतौ सति विक्रियन्ते
येषां न चेतांसि त एव धीराः॥' इति।

अथ कलहंसेन माधवहस्ते मालतीचित्रितमाधवप्रतिकृतेः समर्पणं तथा पश्चाद्बहिर्भागादागत्य मन्दारिकया प्रतिकृतेः प्रतिग्रहणञ्च कृतम्। मालतीमुद्दिश्य माधवस्य प्रणयपत्रिकालेखनादीनि वृत्तानि महाकविना नैपुण्येन रचितानि। 'द्रष्टव्यस्वरूपा च भवतो विकारहेतुः तदत्रैव लिख्यतां मालती' इति मकरन्देनाऽऽदिष्टमालतीप्रतिकृतिनिर्माणस्य माधवस्यावस्था मेघे यक्षस्येव, तथा रत्नावल्यां सागारिकाया इव जाता। तथाहि—

'वारं वारं तिरयति दृशोरुद्गमं बाष्पपूर-
स्तत्सङ्कल्पोपहितजडिमा स्तम्भमभ्येति गात्रम्।
सद्यः स्विद्यन्नयमविरतोत्कम्पलीलाङ्गुलीकः
पाणिर्लेखाविधिषु नितरां वर्त्तते किं करोमि॥'

कालिदासश्चात्र यथा—

'त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायाम्
आत्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन् मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥'

तथाच श्रीहर्षः ।—

सागरिका । [सबाष्पम्] आलिहिदो मए एसो, किं उण अणवरद-णिवडन्तवप्फसलिलेण दिढी पेक्खिदुं न पहवदि । इति ।

अतिभूमिं गतो माधवस्यानुरागः । हृदयङ्गमाय सुहृदे मालतीमधिकृत्याऽऽत्मनो विकारजातं निवेदितवान् माधवः । स च मालतीमयः सञ्जातः । तस्य पृथक्सत्ता नासीत् । तेन स्वगतमभाणि ।—

'पश्यामि तामित इतः पुरतश्च पश्चाद्
अन्तर्बहिः परित एव विवर्त्तमानाम् ।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती-
मासक्तितिर्यगपवर्त्तितदृष्टिवक्त्रम् ॥'

प्रकाशञ्च भणितम् —

'प्रसरति परिमाथी कोऽप्ययं देहदाह-
स्तिरयति करणानां ग्राहकत्वं प्रमोहः ।
रणरणकविवृद्धिं बिभ्रदावर्त्तमानम्
ज्वलति हृदयमन्तस्तन्मयत्वञ्च धत्ते ॥'

ये खलु आदर्शप्रेमिकास्ते प्रणयिनीनां कृते इत्थं प्रेमाधिक्यं दधते । नूनमियं भक्तस्यावस्था । राधावलोकनेन श्रीकृष्णस्येदृशी दशा समजनि ।—

'राधा पुरः स्फुरति पश्चिमतश्च राधा
राधाधिसेव्यमिह दक्षिणतश्च राधा ।
राधा खलु क्षितितले गगने च राधा
राधामयी मम बभूव कुलस्त्रिलोकी ॥'

विनिमयः

तृतीयाङ्के वयं पश्यामो यत् कामन्दक्याः कार्यसाधनोपदेशकौशलेन शङ्करसम्बद्धे कुसुमाकरे नामोद्याने मालतीमाधवयोः साक्षात्कारः सञ्जातः । अत्रान्तरे 'स्वकीयबन्धनमन्दिरान्निर्गतः सहसा कश्चित् प्रचण्डो व्याघ्रोऽमात्यनन्दनस्य भगिनीं मदयन्तिकां विनिहतविद्रावितशेषपरिजनामभिभूत-

वान् इति महान् कलकल उदतिष्ठत्। मकरन्दस्तेन शार्दूलेनाभिपातितादधिगतायुधः पुरुषात् कुतोऽप्येत्य मध्ये स्थितः सन् दंष्ट्रायुधं प्रमथितवान् स्वयञ्च दृढं पशुना हतः। 'व्याघ्रनखरप्रहारनिःसृतरक्तप्रवाहः क्षितितलनिषक्तखड्गलतावष्टम्भनिश्चलः संभ्रान्तमदयन्तिकावलम्बितस्ताम्यतीव मकरन्दः।' अनेन सन्देशेन नितरामुद्विग्नो जातो माधवः। स च त्वरितपादविक्षेपेण मालत्या सह तान् द्रष्टुं प्रतस्थे।

इदं व्याघ्रयुद्धवर्णनं स्मारयति खलु नो मृच्छकटिके द्वितीयाङ्कावसाने वारणाहववर्णनम्। परन्तु महाकविनाऽत्र प्रदर्शितमात्मनः कल्पनानैपुण्याधिक्यम्। अपि चानेन शार्दूलस्य बन्धनमन्दिरात् पलायनवर्णनेन पथिकायते स्मृतिपथे अस्माकं रत्नावल्यां मन्दुरायाः प्लवङ्गप्रभ्रंशनम्। रूपकेषु तत्तादृशघटनासन्निवेशः किं खलु नाटकीयवस्तुन उपकारं साधयति न वेति चिन्ता स्वत एव नो मनस्युदयमेति। किन्तु सुनिपुणं विचारयतामिदमेव प्रतिभाति यन्महाकवयो नूनं तेषु रूपकेष्वेतादृशघटनासन्निवेशेन नाटकीयवस्तूनामुपकारं साधयन्त्येव। तथाहि—व्याघ्रविद्रावणवर्णनेनानेन महाकविना नाटकीयवस्तुन इत्थमुपकारो व्यधायि—

(क) तृतीयाङ्के महाकविः कामन्दक्या भगवत्या अपरिमेयाश्चर्येणाचार्यकेण मालतीमाधवयोरन्योन्यसन्दर्शनं संसाध्य माधवं मालत्या वल्लभमधिकृत्य मनोभावं दर्शितवान् मालतीकामन्दक्योः कथोपकथनेन। अपि च दर्शितं भवभूतिना मालत्या हृदयस्य प्रतिस्तरं नायकाय, ज्ञपितञ्च तस्मै कामदेवायतने तद्दर्शनात् प्रभृति मालतीहृदये ललितमान्मथविधेः सर्वोत्कर्षेण वर्त्तनम्। मालत्या अवस्थात्मनः सदृशीति समाकर्णितं माधवेन लवङ्गिकामुखात्। सन्धुक्षितस्तस्य कामानलः विवृद्धश्चाऽऽग्रहो मालतीलाभाय। स यथा यथा समाकर्णयति स्म प्रियालापं तथा तथा तत्कथासरसीरसमग्नो भवति। अधुना तस्यावस्था तन्मुखादेव श्रुतास्माभिः।

माधवः। [स्वगतं] हन्त! पुण्यवानस्मि, यदहमतर्कितोपनतदर्शनोल्लसितलोचनया अनया—

अविरलमिव दाम्ना पौण्डरीकेण नद्धः
स्नपित इव च दुग्धस्रोतसा निर्भरेण ।
कवलित इव कृत्स्नश्चक्षुषा स्फारितेन
प्रसभममृतवर्षेणेव सान्द्रेण सिक्तः ॥

इतो यावद्दर्शयित्वा निपुणेन कविनाऽनिष्टं प्रणयिनोराशङ्कमानेन व्याघ्रविद्रावणवर्णनेनाङ्कोऽयं समाप्तिमनायि ।

अनिष्टस्य सम्भावनं यथा कामन्दक्याः ।—

'प्रकृतिललितमेतत् सौकुमार्यैकसारं
वपुरयमपि सत्यं दारुणः पञ्चबाणः ।
चलितमलयवातद्धूतचूतप्रसूनः
कथमयमपि कालश्चारुचन्द्रावतंसः ॥'

(ख) व्याघ्रविद्रावणवर्णनेन कविना माधवाय मालत्याश्चरित्रं कीदृशं मधुरमिति दर्शितम् । अस्य प्रकरणस्य चतुर्थाङ्के प्रणयिनस्तथापरप्रणयिनोर्मदयन्तिकामकरन्दयोरन्योऽन्यसन्निकर्षाधिक्यसम्पादनार्थमिदं व्याघ्रयुद्धवर्णनम् ।

व्याघ्रस्य बन्धनमन्दिरात् पलायनश्रवणेन माधवादयस्तत्र घटनास्थलं प्राप्ताः । परन्तु प्रियसखं मकरन्दं मूर्च्छितमवलोक्य प्रमुग्धः । माधवं मूर्च्छितमवलोक्य मालती नितरां कातरा सती तं शुश्रूषते स्म । प्रतिपन्नचेतनस्य मकरन्दस्य सन्देशज्ञापनेन च तं प्रकृतिस्थं कृतवती । अत्र स्ववल्लभे माधवे मालती कीदृशी अनुरक्ता, कीदृशी भाविस्वामिसेवानत्परा, प्रियानिष्टाशङ्कां कुर्वाणा व्यथितचित्ता चेति स्फुटीकृतं कवेर्वर्णनानैपुण्येन । वर्णितञ्च भवभूतिना माधवस्य सुहृद्वात्सल्यम् । सुहृन्मकरन्दस्तस्य बहिश्चराः प्राणा इव । कर्त्तव्याप्रमत्तो माधवः सुहृत्प्राणान् विपन्नान् विलोक्य विस्मृतवानात्मानं मालतीञ्च । इदं महात्मनां स्वरूपम् ।

किञ्च व्याघ्रविद्रावणवर्णनप्रयोजनं कविना स्वयमेव कामन्दकीमुखेन कथितम् । तद् यथा—

काम। [ स्वगतम् ] रमणीयोर्जितं हि मदयन्तिकामकरन्दयोर्दैवाद्य दर्शनम् इति।

मालतीगुणाकृष्टहृदयो माधवः कामन्दकीनिर्देशानुसारेण 'अयमवसरः प्रीतिदानस्य' इति कृत्वोवाच।—

'यद्वृशालव्रणितसुहृत्प्रमोहमुग्धं
कारुण्याद् विहितवती गतव्यथं माम्।
तत् कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्तुं मम हृदयञ्च जीवितञ्च॥'

तच्छ्रुत्वा लवङ्गिकाऽब्रवीत्—

'पडिच्छिदो खु णो पियसहीए अअं पसादो।" अत्र खलु उभयोर्हृदयविनिमयः सञ्जातः। तत्त्वतोऽयमेव हि विवाहः।

जीवित-वैफल्यम्

शुश्रूषया नारीणां माधवमकरन्दौ कथञ्चित् प्राप्तसंज्ञौ। अत्रान्तरे राजदूतः कश्चित्तत्राऽऽगत्य मदयन्तिकामुवाच—'वत्से मदयन्तिके, भ्राता ते ज्यायान् अमात्यनन्दनः समादिशति—अद्य परमेश्वरेण अस्मद्भवनमागत्य भूरिवसोरुपरि परं विश्वासमस्मासु च प्रसादमाविष्कुर्वता, स्वयमेव प्रतिपादिता मालती, तदेहि सम्भावयामः प्रमोदमिति।' अनेन मर्मन्तुदसंवादेनातीव दुर्मनायमानौ सञ्जातौ प्रणयिनौ। अशरणे तौ तीव्रमनोव्यथया नितरामखिद्यताम्। नरपतेरभिलाषस्य प्रतिकूलाचरणं विधातुं कस्य का नाम शक्तिः? भगवती कामन्दकी तु तयोर्मेलनसम्पादनविषये दृढसङ्कल्पा जाता। अत्रान्तरे देवीनिदेशाद् मालतीमादाय प्रस्थिता कामन्दकी। 'श्रेयांसि बहुविघ्नानि' इति वचनस्यार्थं सार्थकीकुर्वता कविना घटनासन्निवेशः कृतः। 'स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगादिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति।" इति कालिदासस्योक्तिं विदधानोऽवितथाम् विरहनिकषपाषाणे उभयोः प्रेमसारवत्त्वं विज्ञापितवान् महाकविः।

विधेरियमेव प्रकृतिः। इदमेवाश्चर्यं दैवस्य दुर्विलसितम्; यत्—

'सुहृदिव प्रकटय्य सुखप्रदः
प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्त्तनदारुणो
विधिरहो विशिनष्टि मनोरुजम्॥'

भग्नमनोरथो माधवो मनसि प्रतिज्ञातवान्—

"न खलु महामांसविक्रयादन्यदुपायान्तरं पश्यामि।" इत्यवधार्य मदयन्तिकाया उत्कण्ठमानेन मकरन्देन सह सिन्धुतटमगमत्।

संस्कृतरूपकेषु महाकवयो नायकानां चरित्रविकाशहेतोः प्रतिनायकादीनां सृष्टिं विदधति। अत्र तु प्रकरणं माधवस्य प्रतिनायकनन्दनस्योपस्थापनेन नायकमाधवस्य चरित्रविकाशो विशेषेण विहितः कविना।

अनेन नन्दनाय मालतीसमर्पणरूपव्यापारश्रवणेनोभयोर्मालतीमाधवयोरवस्था कीदृशी शोच्या समभवच्छ्रूयताम्।

माधवः। [स्वगतम्] कष्टमेतावती लोकयात्रा मालत्या समं माधवस्य, अहो नु खलु भोः।

मालती। [स्वगतम्] महाभाअ। लोअणानन्द। एत्तिअं दिट्ठोसि।* * * [स्वगतम्] परिणदं दाणिं मे जीविदतिण्हाए फलम्। [सास्रम्] णिव्वूढं अ णिक्करुणदाए तादस्सवि कावालिअगुणं पतिट्ठिदो दुद्दैवस्स दारुणसमारम्भसरिसो परिणामो, कं एत्थ उवालहामि मन्दभाइणी, कं वा असरणा सरणं पडिवज्जामि।

माधवः। [स्वगतम्] नूनमाश्वासनमात्रमेवैतत् माधवस्य सहजस्नेहकातरा करोति भगवती। [सोद्वेगम्] हन्त सर्वथा संशयितजन्मसाफल्यः संवृत्तोऽस्मि, तत् किमिदानीं कर्त्तव्यम्।

उग्रता

विगलितप्रायश्च पश्चिमसन्ध्यासमयः। समावृतं जगत् समग्रं सूचिभेद्येन तमसा समन्तात्। तदा—

व्योम्नस्तापिच्छगुच्छावलिभिरिव तमोवल्लरीभिर्व्रियन्ते
पर्यन्ताः प्रान्तवृत्त्या पयसि वसुमती नूतने मज्जतीव ।
वात्यासंवेगविश्वग्विततवलयितस्फीतधूम्याप्रकाशं
प्रारम्भेऽपि त्रियामा तरुणयति निजं नीलिमानं वनेषु ॥

अस्मिन्नेव समये महामांसस्य पणयिता माधवस्तत्र समासादितः। श्मशानसमीपे मालतीलाभवञ्चितो भग्नहृदयो माधव आत्मनः शरीरात् मांसं निजहस्तेनोत्कृत्यापदेवेभ्यो नैवेद्यरूपेणोत्सर्गं कर्तुमुद्यतः। स सङ्कुदितस्ततो दत्तदृष्टिर्विचरति स्म श्मशानभूमौ स्वमनसि चास्या भैरव-दृश्यदर्शनेनैकैकं पद्यं विरच्य्य श्मशानवाटस्य महतीं रौद्रतां वर्णयति स्म। भवभूतिमृते न च कोऽपि कविर्भयानकरसस्येदृशीं वर्णनां कृतवान्। अहो भवभूतेर्बीभत्सरसवर्णनपटीयसी शक्तिः। तत्कृतवर्णनापठनेन पाठका मुग्धा भवन्ति। प्रतीतिविषयतामेति च भयानकरसः किम्भूतः पदार्थ इति।

महाकवेः श्मशानवर्णनं यथा—

पर्यन्तप्रतिरोधमेदुरघनस्त्यानं चिताज्योतिषा-
मौज्ज्वल्यं परभागतः प्रकटयन्नाभोगभीमं तमः।
संसक्ताकुलकेलयः किलकिलाकोलाहलैः सम्मदा-
दुत्तालाः कटपूतनाप्रभृतयः सांराविणं कुर्वते ॥

अपि च—

कर्णाभ्यर्णविदीर्णसृक्कविकटव्यादानदीप्ताग्निभि-
र्दंष्ट्राकोटिविसङ्कटैरित इतो धावद्भिराकीर्यते ।
विद्युत्पुञ्जनिकाशकेशनयनभ्रूश्मश्रुजालैर्नभो
लक्ष्यालक्ष्यविशुष्कदीर्घवपुषामुल्कामुखानां मुखैः ॥

अपि च—

एतत् पूतनचक्रमक्रमकृतग्रासार्द्धमुक्तैर्वृका-
नुत्पुष्णत् परितो नृमांसविघसैराघर्घरं क्रन्दतः ।

खर्ज्जूरद्रुमदग्धजङ्घमसितत्वङ्नद्धविप्वकृतत-
स्नायुग्रन्थिघनास्थिपञ्जरजरत्कङ्कालमालोक्यते ॥

अपि च—

पृथुचलरसनोग्रमास्यगर्त्तं दधति विदार्य विवर्णदीर्घदेहाः ।
चलदजगरघोरकोटराणां द्युतिमिह दग्धपुराणरोहितानाम् ॥

अपि च—

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्टपीठाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्त्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥

अपि च—

निष्टापस्विद्यदस्थ्नः क्वथनपरिगलन्मेदसः प्रेतकायान्
कृष्ट्वा संसक्तधूमानपि कुणपभुजो भूयसीभ्यश्चिताभ्यः ।
उत्कण्ठस्रंसिमांसं प्रचलदुभयतः सन्धिनिर्मुक्तमारा-
देते निष्कृष्य जङ्घानलकमुदयिनीर्मज्जधाराः पिबन्ति ॥

अहो प्रादोषिकः प्रमोदः पिशाचानाम् । तथाहि—

अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः सम्भूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥

अपि च—

गुञ्जत्कुञ्जकुटीरकौशिकघटाघुत्कारसंवेल्लित-
क्रन्दत्फेरवचण्डडात्कृतिभृतप्राग्भारभीमैस्तटैः ।
अन्तःशीर्णकरङ्ककर्करतरत्संरोधिकूलङ्कप-
स्रोतोनिर्गमघोरघर्घररवा पारेश्मशानं सरित् ॥

'एवम्भूते भीषणे पितृकानने वर्त्तमानेनाऽऽत्मविसर्जने समुद्यतेन माधवेन

चामुण्डायतने कस्याश्चिद् बालिकाया आर्त्तनादोऽश्रावि । तदाकर्ण्य साकूतं माधवः—

नादस्तावद्विकलकुररीकूजितस्निग्धतार-
श्चित्ताकर्षी परिचित इव श्रोत्रसंवादमेति ।
अन्तर्भिन्नं भ्रमति हृदयं विह्वलत्यङ्गमङ्गं
गात्रस्तम्भः स्खलयति गतिं कः प्रकारः किमेतत् ॥

माधवः करालायतनं गत्वा तूर्णं देवतार्चनव्यग्रहस्तौ कपालकुण्डला-घोरघण्टौ कृतवध्यचिह्नां मालतीञ्चापश्यत् ।

अस्मिन् करालायतने प्रायेणेदृशो नरवधोऽभूदिति सुविदितमासीत् सर्वेषाम् अतो माधवस्य मनसीदमुदपादि—

'करालायतनाम्नायमुच्चरन् करुणध्वनिः ।
विभाव्यते ननु स्थानमनिष्टानां तदीदृशाम् ॥'

अधुनाऽनुमीयतां कीदृश्यवस्था माधवस्य । यस्याः प्रणयिन्याः कृते स श्मशानभूमावपदेवताभ्य आत्मनः शरीरमांसदाने उद्यतस्तामेव सहसा जिघांस्यमानामवलोक्य माधवः स्वप्राणव्ययेनापि तां रक्षितुं मनो दधे । अत्र कविनाऽनेन घटनासन्निवेशेन दर्शितं यन्मालती यथा माधवस्यार्थे आत्मनः प्राणान् तृणीकृत्य शुश्रूषया मूर्च्छितं तमुज्जीवितवती, कृतज्ञो माधवोऽपि तथा कापालिककवलगतां तामेव प्रणयिनीं जीवितव्ययेनापि रक्षितुं कृत-प्रतिज्ञो जातः ।

मालत्यपि चाज्ञासीद् यत्तस्याः प्राणवल्लभस्तस्याः कृते आत्मानमप्य-वज्ञाय तद्रक्षणायागत इति ।

तस्या नारीजीवितं सार्थकम् , धन्यश्च तस्याः प्रेम यत् सा तस्मिन् महानुभवे जने भावं बध्नाति स्म । अपि च ज्ञातवती यत्तयोर्दाम्पत्यजीवनं सुखमयं भविष्यतीति ।

माधवमयजीविता मालती तपस्विनी सा माधवं स्मरन्ती जीवितं त्यक्तु-मना बभूव । अतो मरणसमये सा माधवमुद्दिश्योक्तवती—'हा दइअ ।

त्वत्पाणिपङ्कजपरिग्रहपुण्यजन्मा भूयासमित्यभिनिवेशकदर्थ्यमानः ।
भ्राम्यन्नृमांसपणनाय परेतभूमावाकर्ण्य भीरु ! रुदितानि तवागतोऽस्मि ॥

एतन्निशम्य मालती मनस्यचिन्तयत्—

'हद्धी ! कधं मम कारणादो एव्वं एदे अप्पणिरपेक्खा परिक्कमन्दि ।' तदा माधवः ।—'अहो नु खलु भोः । तदेतत् काकतालीयं नाम । सम्प्रति हि—

राहोश्चन्द्रकलामिवाननचरीं दैवात् समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मयात्
क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्त्तते ॥'

महाकवेरनेन श्मशानवर्णनेन नाटकीयवस्तुनो भूयिष्ठ उपकारः साधितः । मालतीमाधवयोरलौकिकप्रणयवर्णनमेवास्य प्रकरणस्य प्रधानमुद्देश्यम् । तयोरपार्थिवप्रणयस्य स्वरूपवर्णनार्थमस्य श्मशानवर्णनस्य सृष्टिः । प्रणयिनोरनाविलहृदयद्वयस्य सम्यक् परिचयप्रदानमेवापेक्षितम् । भवभूतिः प्रथममेवानयोः सन्दर्शनं संसाध्य घटनावैचित्र्यसन्निवेशेन नैकट्यं विधाय एतौ परिपक्वप्रेमदशामप्यनैषीत् ।

उभावन्योऽन्यहृदयभावं प्रत्यक्षीकृतवन्तौ । राजचित्तानुरञ्जने निरतः पिता हि यन्मालत्या माधवेन सह मेलने प्रत्यर्थीभूतो जात इति सा सम्यगबुध्यत । अतः सा मरणसमये इत्थं व्यलपत् ।

'हा ताद ! णिक्करुण ! एसो दाणिं दे णरेंदचित्ताराहणोवअरणं जणो विवज्जइ ।'

प्रियमुखे स्वप्रशंसां श्रुत्वात्मानं सौभाग्यवन्तं मेने मालती । माधवोऽपि मालतीं स्त्रीरत्नममन्यत । अतः सा मालतीमधिकृत्य कापालिकमवदत्—

दुरात्मन् ! पाषण्ड ! चाण्डाल !

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।

अदर्पं कन्दर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥

अपि च—रे रे पाप !

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि विधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥'

इत्यभिधाय मालतीनाथो माधवः कापालिकमाक्रान्तवान् । प्रागुक्तश्लोक-द्वितयं महार्हरत्नमिवालङ्करोति मालतीमाधवस्य कलेवरम् । द्वितीयश्लोको विश्वनाथेनोग्रताया दृष्टान्तरूपेण गृहीतः । तस्या लक्षणं यथा—

शौर्य्यापराधादिभवं भवेच्चण्डत्वमुग्रता ।
तत्र स्वेदः शिरःकम्पतर्ज्जनताडनादयः ॥

माधवेन विनिहतो नारीवधोद्यतोऽघोरघण्टः । कापालिकशिष्या कपालकुण्डलापि तदा प्रतिज्ञातवती—'अवश्यमनुभविष्यसि कपालकुण्डला-कोपस्य विजृम्भितमि'ति । अस्मिन्नेव समये नेपथ्ये—

'भो राजानश्चरमवयसामाज्ञया सञ्चरध्वं
कर्त्तव्येषु श्रवणसुभगं भूमिदेवाः पठन्तु ।
चित्रं नानावचननिवहैश्चेष्टयतां मङ्गलेभ्यः
प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः ॥

यावत् सम्बन्धिनो न परापतन्ति, तावद्वत्सया मालत्या सह नगरदेवता-गृहमविघ्नमङ्गलाय गन्तव्यमित्यादिशन्ति भगवतीनिदेशवर्त्तिनोऽमात्यदाराः तथा गृहीतसविशेषमण्डनः प्रतीक्ष्यतामनुयात्रिको जनः ।' कपाल-कुण्डलाप्युवाच—

'भवतु इतो मालतीविवाहपरिकर्म्मसत्वरप्रतीहारशतसङ्कुलात् प्रदेशा-दपक्रम्य माधवापकारं प्रति अभिनिविष्टा भवामि । [ इति निष्क्रान्ता ]

( क्रमशः )

# मेघनादवधम्

( दशमः सर्गः )

[ निबन्धकः—श्रीनित्यगोपालविद्याविनोदः ]

अथ तां पश्चिमद्वारं निरीक्ष्य समुपेयषीम् ।
अधमञ्छतमञ्जानां समं वामा धनुर्धराः ॥१॥
चकम्पे शङ्किता लङ्का हस्त्यारोहास्तथा गजे ।
रथेषु रथिनो भीताः सादिनस्तुरगस्थिताः ॥२॥
सिंहासने महाराजः शुद्धान्ते च कुलाङ्गनाः ।
नीडे विहङ्गमा दर्यां पर्वतस्य मृगाधिपाः ॥३॥
वन्यनागा अरण्येषु सत्त्वा जलचरास्तथा ।
निलिल्युरतलास्वप्सु दुःस्थमास्त चराचरम् ॥४॥ (युग्मम्)
हनूमान् पावनिर्भीमदर्शनः कुपितोऽब्रवीत् ।
के यूयमागता रात्रौ हातुं प्राणाननुत्तमान् ॥५॥
जागरूकस्तु स द्वारि हनूमान् यस्य नामतः ।
सिंहासनगतोऽपीशो राक्षसानां प्रवेपते ॥६॥
जागर्त्ति मे प्रभुस्तत्र रघुवंशशिखामणिः ।
विभीषणेन मित्रेण लक्ष्मणेन च सङ्गतः ॥७॥
अन्ये च बहवो वीराः शतशोऽथ सहस्रशः ।
दुर्द्धर्षाः समरे सर्वे नारीरूपं कथं धृतम् ॥८॥
मायिनो राक्षसाश्चेति जानेऽहं किन्तु तद्बलम् ।
नाशयामि प्रवेष्टाभ्यां यथा प्राप्तांश्च वैरिणः ॥९॥
उग्रचण्डा सखी भीमा नृमुण्डमालिनी क्रुधा ।
कृत्वा ज्याघोषमवदत् साहङ्कारं मरुत्सुतम् ॥१०॥

रे बर्बर क्षुद्रजीविन् शीघ्रमाह्वय राघवम् ।
प्रहर्तुं त्वादृशं नीचं नेच्छामोऽस्त्रैर्वयं क्वचित् ॥११॥
न हि सिंही शृगालेन विरोधं कर्त्तुमर्हति ।
पलाय्य रक्ष प्राणांस्ते शाखामृग त्यजाम्यहम् ॥१२॥
किं त्वद्वधेन वैधेय प्रतिप्रस्वाह्वय द्रुतम् ।
रामं लक्ष्मणशूरञ्च रक्षोऽधमविभीषणम् ॥१३॥
प्रमीला सुन्दरी पत्नी मेघनादस्य वज्रिणः ।
जेतुर्बाहुबलेनाङ्गी पत्युरर्चितुमानसा ॥१४॥
प्रवेक्ष्यति पुरीं लङ्कां सत्वरं मूढवानर ।
तां रोद्धुं शक्नुयात् को हि योधो रामहितैषिणाम् ॥१५॥ (युग्मम्)
बलिष्ठो मारुतिर्गत्वा पुरतो वीरयोषिताम् ।
मध्ये सभयमद्राक्षीत् प्रमीलां रणरङ्गिणीम् ॥१६॥
किरीटं शोभते मूर्ध्नि सौदामनीसमप्रभम् ।
चकास्ति वर्म्म दिव्याङ्गे सौरांशूद्दीप्तरत्नवत् ॥१७॥
हनूमान् विस्मयस्तब्धश्चिन्तयन् मनसा चिरम् ।
विलङ्घ्यालङ्घ्यजलधिं यदा लङ्कां प्रविष्टवान् ॥१८॥
उग्रचण्डां तदाऽपश्यं भीमां नृमुण्डमालिनीम् ।
मन्दोदरीप्रमुखाश्च दानवी रावणप्रियाः ॥१९॥
वेश्म वेश्म भ्रमित्वाऽहमेकलो निशि दृष्टवान् ।
रक्षःकुलाङ्गनाः सर्वा रूपेण शशिनः कलाः ॥२०॥
अशोकवनिकाकुञ्जे सीतां रघुकुलाब्जिनीम् ।
किन्तु नैवं क्वचिद्रूपमपश्यं जगतीतले ॥२१॥
धन्यस्त्वसौ मेघनादो निकषा यं सदा स्थिता ।
प्रेमपाशेन संबद्धा स्थिरा सौदामनीदृशी ॥२२॥ ( कुलकम् )
विचिन्त्येदमुवाचोच्चैः प्रभञ्जनमहास्वनः ।
अञ्जनानन्दनः सिन्धुं बद्ध्वा वन्दीसमं प्रभुः ॥२३॥

शिलाभिः सुभगे रामो रविवंशयशोरविः ।
प्राविशन्नगरीञ्चैनां वीरैर्लक्षाधिकैः समम् ॥२४॥
राक्षसेशो रिपुस्तस्य भवत्यश्चाबलाः कथम् ।
अकाल आगता अत्र ब्रुवन्त्वक्षुब्धमानसम् ॥२५॥
हनूमान् रामदासोऽस्मि दयासागरराघवः ।
भवतीभिः समं कश्चिद् विवादस्तस्य सम्भवेत् ॥२६॥
प्रसादं याचते तं कं भवती वदतु द्रुतम् ।
केनायाताभवद् वार्त्तां सर्वां तं वेदयाम्यहम् ॥२७॥
प्रत्युत्तरं ददौ तस्मै साध्वी वीणामधुस्वरम् ।
रामो भर्त्तुः शत्रुरिति नेच्छामि तेन विग्रहम् ॥२८॥
वीरपूज्यो मम स्वामी शक्त्या बाह्वोर्जगज्जयी ।
फलं किं मम युद्धेन तस्य शत्रुजितोऽरिणा ॥२९॥
वयं कुलाङ्गना योषास्त्वन्तु वीर विचिन्तय ।
रम्यां विद्युच्छटां स्पृष्ट्वा जीवेत् किं मानवो भुवि ॥३०॥
त्वया सह गृहाणेमां दूतीं शूर यया मया ।
रामो याचिष्यते किन्तद् वक्ष्यते या हि सत्वरम् ॥३१॥
नृमुण्डमालिनी दूती नृमुण्डमालिनीसमा ।
वैरिमध्यस्थिताऽभीता याता गरुत्मती यथा ॥३२॥
तरीवींचिचयं सिन्धोर्निर्मथ्य सलिलेऽतले ।
प्लवमाना द्रुतं याति लीलयाध्मातदिङ्मुखा ॥३३॥ (युग्मम्)
दृष्ट्वा वामां सचकितं वीरवृन्दं यथा गृही ।
दृष्टवह्निशिखो रात्रौ सा चान्तर्हासमादधे ॥३४॥
भीता निर्निमिषाः सर्वे वीराः श्रेणीकृतास्तथा ।
तत्र तत्र स्थिता घोरं रटन्तश्च मुहुर्मुहुः ॥३५॥
पदोर्मुखरमञ्जीरं श्रोण्यां काञ्चीं प्रभामयीम् ।
भीमाकारं करे शूलं दधती याति भामिनी ॥३६॥

जर्ज्जरीकृत्य पुरुषान् कटाक्षाशुगकोटिभिः ।
व्रजतीयं वरारोहा साक्षान्मदनमोहिनी ॥३७॥
चूडा मूर्ध्नि शिरस्त्रस्य चन्द्रकाङ्कितसर्पभुक्—
पुच्छात्मनो नटन्तीव स्थिता कौतूहलाकुला ॥३८॥
देदीप्यन्ते तथा मध्ये कुचयो रत्नराजयः ।
मदनस्य पताकेव वेणी पृष्ठे विलम्बिता ॥३९॥
गजेन्द्रगामिनी साध्वी शोभयन्ती दिशां मुखम् ।
गच्छतीव जले ज्योत्स्ना गिरौ वोषा प्रभासखी ॥४०॥
रामः शिबिरमध्यास्ते पुरतो लक्ष्मणः स्थितः ।
मित्रं विभीषणः पार्श्वे वीराश्चान्य इतस्ततः ॥४१॥
तेजसा रुद्रतुल्यास्ते विभीषणकलेवराः ।
अस्त्राणि देवदत्तानि पीठोद्र्ध्वं सच्चकासति ॥४२॥
रक्तचन्दनरक्तानि पुष्पाञ्जलिवृतानि च ।
तानि धूपसुगन्धैश्च धूमायन्ते समन्ततः ॥ ४३ ॥
ज्वलन्ति सर्वतो दीपाः सुगन्धितैलपूरिताः ।
सर्वैस्तैर्विस्मिततरैर्दिव्यमस्त्रं निरीक्ष्यते ॥ ४४ ॥
कैश्चित् प्रशस्यते खड्गः कैश्चित् कनकमण्डिलम् ।
चर्म प्रकाण्डमर्कांशुरञ्जितं सान्ध्यमेघवत् ॥ ४५ ॥
कैश्चिज्ज्योतिर्मयं वर्म तूणीरश्चापरैर्धृतः ।
राघवेण स्वयं धृत्वा धनुरुक्तं सुमेधसा ॥ ४६ ॥
सीतास्वयंवरे भग्नः पिनाको बाहुशक्तितः ।
न शक्यः सगुणः कर्त्तुं चापोऽयं मम साम्प्रतम् ॥ ४७ ॥
हर्षनादं जगुः सैन्या 'जय राम'ध्वनिर्दिवि ।
उदस्थात् सहसा घोरसिन्धुकल्लोलसोदरः ॥ ४८ ॥
विभीषणो रथिवरः ससभयं प्राह राघवम् ।
राम पश्य किमूर्ध्वेयं निशीथे बहिरांगता ॥ ४९ ॥

रामो विभीषणं प्राह वयस्य साधु निश्चिनु।
देवी वा दानवी वैषा भैरवीरूपिणी न वा॥ ५० ॥
लङ्केयं मायया पूर्णा मायिनः सर्वराक्षसाः।
कामरूपी तव ज्येष्ठो निरीक्षस्व विशेषतः॥ ५१ ॥
नेयं माया तवाज्ञया प्राप्तवांस्त्वां सुहृद्वरम्।
क्षणे शुभे पिशाचानां वरेण्यं भाग्यसम्पदा॥ ५२ ॥
रक्षेन्मित्र त्वदन्यः को दुर्बलं मां विपत्तितः।
शरणं राक्षसेन्द्राणां नगरे त्वं ममैकलः॥ ५३ ॥
हनूमता सहैतस्मिन्नन्तरे दूत्युपस्थिता।
शिबिरे रामचन्द्रस्य नता चाह कृताञ्जलिः॥ ५४ ॥
नमामि रामपादाब्जं गुरूणाञ्च महात्मनाम्।
नृमुण्डमालिनी नाम प्रमीलाप्रियकिङ्करी॥ ५५ ॥
तस्यै दत्त्वाशिषं वीरो रामः पप्रच्छ सादरम्।
दूति त्वं हेतुना केन कथयात्र समागता॥ ५६ ॥
विशिष्य ब्रूहि मां भूयस्तव भर्त्रीं शुभे ह्यहम्।
शक्नुयां कर्म्मणा केन प्रीणयितुं नृपस्नुषाम्॥ ५७ ॥
उवाच भैरवीमूर्त्तिर्भो वीरकुलकेतन।
रघुनाथ देहि युद्धमथवा तत्पथं त्यज। ५८ ॥
समर्च्चितुं पतिं वामा प्रवेक्ष्यति पुरीं स्वयम्।
हतराक्षसवृन्दं त्वां युद्धं याचति सादरम्॥ ५९ ॥
शतमत्र रमण्यः स्मो यामिच्छसि तया सह।
युध्यस्व सा त्वया सार्द्धमेकला रणमिच्छति॥ ६० ॥
धर चापं नरवर वाञ्छा चेच्चर्म्म वा गदाम्।
खड्गं वा द्वन्द्वयुद्धं वा यथारुचि विधीयताम्॥ ६१ ॥
यदिच्छसि तदिच्छामो विलम्बं सोढुमक्षमाः।
त्वदर्थं सा निरुन्धेऽन्याः सखीर्व्याघ्रीर्यथा वने॥ ६२ ॥

नितम्बिनीयदुक्त्वा सा नम्रशीर्षा ननाम तम् ।
हिमसिक्तं यथा पुष्पं नमति मन्दमारुतम् ॥ ६३ ॥
प्रत्यवादीद्रघुश्रेष्ठः सुकेशि श्रूयतामहम् ।
न जातु कलहं केन करोमि कारणं विना ॥ ६४ ॥
राक्षसेशो मम रिपुर्यूयं बालाः कुलाङ्गनाः ।
युष्माभिः सह विद्वेषमाचरामि किमर्थकम् ॥ ६५ ॥
लङ्कां प्रविशताशङ्कं प्रमोदाप्लुतमानसाः ।
वीरवर्य्यरघोर्वंशे रामो जन्म समग्रहीत् ॥ ६६ ॥
इति सुलोचने भर्त्री तव वीराङ्गना सखी ।
ब्रूहि तस्यै बहुमुखीं प्रशंसां विहितां मया ॥ ६७ ॥
पतिभक्तिं तथा शक्तिं वीरत्वञ्च सुदुर्लभम् ।
तस्या जाने विना युद्धं स्वीकरोमि पराभवम् ॥ ६८ ॥
मेघनादो महाभागः प्रमीला सुन्दरी सती ।
रामो भिक्षुरयं इति विदितं क्षितिमण्डले ॥ ६९ ॥
दुर्दैवेन धनैर्हीनो वनवासी निराश्रयः ।
प्रसादं कं विधास्यामि सुन्दरि सुखिनी भव ॥ ७० ॥
एवमाभाष्य सम्बोध्य मारुतिं राघवोऽब्रवीत् ।
सावधानं स्तुतिं मुञ्च वामास्तोषय सत्कृताः ॥ ७१ ॥
दूत्यां प्रणम्य यातायां रामं प्राह विभीषणः ।
पश्य मित्र बहिर्गत्वा प्रमीलायाः पराक्रमम् ॥ ७२ ॥
नो जाने को निरुन्धीत वामाः समरदुर्म्मदाः ।
भीमाकारा बलोदग्राः शक्तिप्रतिकृतीर्यथा ॥ ७३ ॥
एताः सर्वा महावीर्याश्चामुण्डाभैरवीनिभाः ।
हन्तुकामा महाशत्रुं रक्तबीजं महासुरम् ॥ ७४ ॥
राघवस्तं प्रति प्राह दूत्याकारं निरीक्ष्य मे ।
युयुत्साऽन्तर्हिता सद्यो व्याघ्रीं कः कोपयेद् बुधः ॥ ७५ ॥

गच्छ मित्र प्रपश्यामि तूर्णमिन्दुनिभाननाम् ।
भ्रातुष्पुत्रवधूं तेऽद्य मूर्त्तिमद्वीर्य्यसन्निभाम् ॥ ७६ ॥
निर्धूमव्योम्नि पुरतः सुवर्णोज्ज्वलवारिदाः ।
विभा ददर्श श्रीरामो दावरक्ता यथा दिशः ॥ ७७ ॥
चमत्कृतो बभूवासौ श्रुत्वा कोदण्डघर्घरम् ।
शफशब्दं तुरङ्गाणां सहुङ्कारमसिध्वनिम् ॥ ७८ ॥
तैः शब्दैरन्वितं तूर्य्यं ननाद तुमुलस्वनम् ।
वात्ययेवावहत् सूक्ष्मा मधुरा च स्वरावली ॥ ७९ ॥
पताकोड्डीयते रत्नमण्डितालोकिता हरित् ।
मन्दश्वासकन्दितगति नृत्यन्ति वाजिराजयः ॥ ८० ॥
किङ्किणीजालमारौति मधुरं पर्व्वतोपमाः ।
सैन्यास्तिष्ठन्त्युभयतः पथोऽस्त्रशस्त्रदंशिताः ॥ ८१ ॥
चलन्ति मध्यतो वामा विकम्पितमहीतलाः ।
आरावपूर्णविषयाः करिण्य इव सानुषु ॥ ८२ ॥
नृमुण्डमालिनी सर्व्वाग्रतः कृष्णहयस्थिता ।
उग्रचण्डा ध्वजभुजाऽगच्छद् वाद्यकरास्ततः ॥ ८३ ॥
विद्याधर्य्यस्ततो यान्ति शोभिताशेषदिङ्मुखाः ।
वीणावंशमृदङ्गादि वाद्यभाण्डञ्च वादितम् ॥ ८४ ॥
तासां पश्चाच्छूलपाणिः प्रमीला भीमविक्रमा ।
अपूर्वं शोभते तन्वी तारास्विन्दुकलोपमा ॥ ८५ ॥
सिंहपृष्ठे यथा दुर्गा शचीवैरावते गजे ।
कमलेव खगेन्द्रे सा वामीपृष्ठे विराजते ॥ ८६ ॥
शनैः शनै रिपुकुलमवहस्येव निर्भयम् ।
वामाकुलमतीयाय रणरङ्गसमुल्लसत् ॥ ८७ ॥
काचिज्ज्याघोषमकरोदन्या नग्नमसिं व्यधात् ।
अपरास्फालयच्छूलं हसन्ती काचिदत्यगात् ॥ ८८ ॥

नदन्ति काश्चिद् गगने यथा हरि-
प्रियास्तथा लास्यपरा रणोन्मदाः ।
व्रजन्ति चान्यास्त्वरितं वराङ्गना
रसो नु वीरोऽद्भुतसख्य आगमत् ॥ ८९ ॥

इति श्रीमेघनादवधे महाकाव्ये प्रमीलारामसाक्षात्कारो नाम
दशमः सर्गः ।

---

# सरल-चित्सुखीसारम्

( पूर्वतोऽनुवृत्तिः )

[ निबन्धकः—स्वर्गत-रमेशचन्द्र-वेदान्ततीर्थः ]

तार्किकः ॥—नन्वेवं प्रमाणवृत्तिविषयत्वाङ्गीकारे खण्डितं स्वप्रकाशत्वम्, वृत्तिवेद्यत्वाद् अनुभूतेर्भवतः ।

वेदान्ती ॥—दृश्यते हि चेष्टालिंगकानुमानविषयस्यापि परज्ञानस्य स्वाश्रये स्वविषयापरोक्षव्यवहारजनने ज्ञानान्तरनिरपेक्षत्वम्, नहि देवदत्तस्य घटानयनचेष्टया अनुमितस्य तदीयघटज्ञानस्य स्वविषयप्रकाशकस्य स्वाश्रये देवदत्ते स्वविषयापरोक्षव्यवहारजनने अस्ति कस्यचित् ज्ञानान्तरस्य अपेक्षा, तेन हेतुना तस्य स्वविषये स्वप्रकाशत्वस्य उपपत्तेः न प्रसरति स्वप्रकाशत्वखण्डनभयम् अनुभूतेः । नहि प्रमाणावेद्यत्वं स्वप्रकाशत्वम्, अपि तु स्वविषयापरोक्षव्यवहारजनने प्रकाशान्तरनिरपेक्षत्वम्, तच्च स्वप्रकाशसाधक-प्रमाणगम्यत्वेऽपि न विरुध्यते, प्रमाणान्तरनिरपेक्षतयैव स्वाश्रये स्वविषयापरोक्ष-व्यवहारजनकत्वात् ।

तार्किकः ॥—भवतां सम्प्रदायेषु केवलव्यतिरेकिणोऽनुमानस्य अनभ्युपगमात् तेन ते साध्यसाधनं स्वसंप्रदायमेवोपहन्ति, अपि च ईदृशेन केवलव्यतिरेकिणा सर्वत्र यत्र तत्र सर्वधर्मसाधनं सुलभमतो न तेऽनुमानं नो मानसं प्रसादयति ।

वेदान्ती ॥—अस्ति अस्माकमपि व्यवहारदशायां केवलव्यतिरेकिणोऽनु-मानस्य प्रामाण्यमप्रतिहतम्, अथवा मदुपन्यस्तमनुमानमर्थापत्तिप्रमाणत्वेन गृह्यतामायुष्मता तुल्ययोगक्षेमत्वादनयोर्न काचित् क्षतिः, अवधेहि तावत्,—स्वप्रकाशत्वं विना अनुभूतौ अनुभूतित्वमनुपपन्नमतोऽस्याः स्वप्रकाशत्वं कल्प्यते, इति केवलव्यतिरेकिणः अर्थापत्तिपर्यवसायित्वम् ।

यदि तु कुटिलनयसरणिसारिणे भवते अभिनवरीतिसुरभि वक्रवचनकमठ-

पृथक्कठोरमसारविरसमन्वयव्यतिरेकि अनुमानं रोचतेतराम् , तदा तदेवोदाह्रियते मया, तेनापि तुष्यतु भवानिति ।

**त्वज्ज्ञानं तवापरोक्षव्यवहारयोग्यत्वे सति वेद्यं न भवति ज्ञानत्वात् मदीयज्ञानवत् ।** इत्यनेनान्वयव्यतिरेकिणा अस्माकं साध्यस्य स्वप्रकाशत्वस्या-प्रत्यूहं सिद्धेः । त्वज्ज्ञानं वेद्यं न भवति इत्युक्ते अप्रसिद्धविशेषणता स्यात्, अवेद्यत्वस्याद्यापि अप्रसिद्धेरिति तन्निवृत्त्यर्थम् अपरोक्षव्यवहारयोग्यत्वे सतीत्युक्तम्, वेद्यत्वाभावस्याप्रसिद्धत्वेऽपि अपरोक्षव्यवहारयोग्यत्वे सति वेद्यत्वरहितस्य परमाणवदृष्टादेः सुप्रसिद्धत्वेन नाप्रसिद्धविशेषणता, परमाणवदृष्टादौ यद्यपि अनुमानादिप्रमाणवेद्यत्वं विद्यते एव तथापि तस्य सदा परोक्षत्वात् न कदाचिदपि तत्र अपरोक्षव्यवहारे योग्यत्वं समस्ति, अतः अस्त्येव तत्र अपरोक्षव्यवहारयोग्यत्वविशिष्टस्य वेद्यत्वस्य अभावः, विशिष्टाभावं प्रति विशेषणाभावस्यापि प्रयोजकत्वात्, रक्तघटवति भूतले नीलघटाभाव इव । "तव" इति पदाप्रयोगे त्वदीयज्ञानस्य परं प्रति अपरोक्षव्यव-हारयोग्यत्वविशिष्टवेद्यत्वाभाववत्त्वसाधने असमीहितस्य अर्थान्तरस्य सिद्धिः स्यादतः "तव" इत्युक्तम् । एवमपि परकीयज्ञानमादाय अर्थान्तरता, तस्य एतं प्रति तथात्वात्, अत उक्तम् "त्वज्ज्ञानमि"ति । मदीयज्ञाने तव अपरोक्षव्यवहारयोग्यत्वं नास्ति, अत एव तत्र ते अपरोक्षव्यवहारयोग्यत्व-विशिष्टवेद्यत्वाभावो वर्त्तते, तत्र ज्ञानत्वहेतुरपि अस्तीति दृष्टान्तसिद्धिः । अनेन अन्वयमुखप्रवृत्तेनानुमानेन त्वदीयज्ञाने साध्यसन्देहवति पक्षे तव अपरोक्षव्यवहार-योग्यत्वविशिष्टवेद्यत्वाभावः सिध्यति ।

तार्किकः ॥—भवतु एवम्, तथापि कथं स्वप्रकाशत्वसिद्धिः ?

वेदान्ती ॥—श्रूयताम् कथमिति, त्वदीयज्ञानस्य त्वां प्रति अपरोक्षव्यवहार-योग्यत्वे सति वेद्यत्वानधिकरणत्वं किं विशेषणाभावेन अपरोक्षव्यवहारयोग्यत्वान-धिकरणत्वात् भवति उत विशेष्याभावेन वेद्यत्वानधिकरणत्वात्, तत्र न तावत् त्वां प्रति त्वदीयज्ञानस्य अपरोक्षव्यवहारयोग्यत्वानधिकरणत्वं सम्भवति, व्याघातात्, नहि तव यज् ज्ञानं त्वं तद् न जानासि, अतः तव यज् ज्ञानं तत्

तत्र अपरोक्षव्यवहारयोग्यत्वानधिकरणम् इति आत्मसंवेदनेनैव व्याहतम्, अत एव विशेष्याभावद्वारेण वेद्यत्वानधिकरणत्वात् तादृशसाध्यसिद्धिरवश्यमभ्युपेया, एवञ्च तथा सिध्यत् साध्यम् अपरोक्षव्यवहारयोग्यत्वे सति अवेद्यत्वलक्षणं स्वप्रकाशत्वमादायैव सेद्धुमर्हतीति स्वप्रकाशत्वसिद्धिः ॥

तार्किकः ॥—सोपाधिकोऽयं भवतो हेतुर्नोक्तसाध्यस्य साधनायालम्, वह्निरिव धूमस्य। अस्ति च अत्र **मदसमवेतत्वं मदन्यसमवेतत्वं वा उपाधिः**, अतः यत्र तादृशोपाधिर्वर्त्तते तत्रैव परकीयज्ञाने आर्द्रेन्धनसंयोगवतीव धूमस्य अस्तु साध्यस्य वृत्तिता ननु सम्भवति तत् मदीयज्ञाने, परकीयज्ञाने च विशेषणस्य अपरोक्षव्यवहारयोग्यत्वस्य अभावद्वारेणैव साध्यस्य वृत्तेः न अवेद्यत्वलक्षणस्य स्वप्रकाशस्य सिद्धिरिति निपुणं निगृहीतोऽसि।

वेदान्ती ॥—साध्यव्यापकत्वे सति साधनाव्यापकत्वं हि उपाधिरिति भवद्भिरुद्घोष्यते, अत्र च भवदभिमतोपाधिद्वये **साध्याव्याप्तेर्न च** युक्तेयमुक्तिर्भवतः। **त्वदीयधर्मादिषु त्वयि समवेतेषु** उपाधित्वेनाभिमतं त्वदसमवेतत्वं नास्ति। तेषामप्रत्यक्षत्वात्, तत्र अपरोक्षव्यवहारयोग्यत्वं च नास्ति, ततश्च अनुमानादिवेद्यत्वेऽपि तत्र अपरोक्षव्यवहारयोग्यत्वानधिकरणत्वविशिष्टवेद्यत्वाभावरूपसाध्यसद्भावेऽपि तत्र साध्याधिकरणे त्वदसमवेतत्वरूपं त्वदन्यसमवेतत्वरूपं वा उपाधित्वेनाभिमतं वस्तु नास्तीति अस्य साध्याव्यापकत्वात् **उपाधेरभावात्**, एवं परमाण्वादिषु **असमवेतेषु** अपरोक्षव्यवहारयोग्यत्वस्य अभावात् अपरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वाभावरूपसाध्यसद्भावेऽपि तत्र साध्याधिकरणे त्वदन्यसमवेतत्वरूपम् उपाधित्वेनाभिमतं नास्ति, परमाण्वाकाशादीनामसमवेतत्वेन त्वदन्यसमवेतत्वस्य सुतरामभावेन **उपाधेरभावात्।**

तार्किकः ॥—एवमपि मम ( तार्किकस्य प्रतिवादिनः ) **अपरोक्षव्यवहारायोग्यत्वमुपाधिर्भवत्येव**; तद्धि ममापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वाभावस्य साध्यत्वेनाभिमतस्य व्यापकम्, यतः वेद्यत्वस्य केवलान्वयित्वेन सर्वत्र विद्यमानतायामपि यत्र मम अपरोक्षव्यवहारविषयतायोग्यत्वं नास्ति, तत्र विशेषणाभाव-

निबन्धनो विशिष्टवेद्यत्वाभावो भवति, अतस्तादृशवेद्यत्वाभावस्य व्यापकं ममा-परोक्षव्यवहारायोग्यत्वम्, हेतुत्वेनाभिमतस्य ज्ञानत्वस्याव्यापकम्, यतः मदीये ज्ञाने ज्ञानत्वस्य वृत्तौ अपि ममापरोक्षव्यवहारायोग्यत्वं नास्तीति साध्यव्यापकत्वे सति साधनाव्यापकत्वात् दुष्परिहरोऽयम् उपाधिर्भवतः ।

वेदान्ती ॥—न च एवं वक्तुं शक्यते तत्रभवता भव्यतमेन, तव (प्रतिवादिनस्तार्किकस्य) ज्ञानस्य त्वदपरोक्षव्यवहारयोग्यत्वे सति वेद्यत्वानधि-करणत्वे साध्ये तव (प्रतिवादिनः) अपरोक्षव्यवहारायोग्यत्वमुपाधिरित्युच्यते नयनिपुणेन भवता, तथाच प्रतिवादिनस्तव ज्ञाने तव अपरोक्षव्यवहारयोग्यत्वरूपः साध्यव्यापकः उपाधिर्व्यावर्तमानः अपरोक्षव्यवहारायोग्यत्वे सति वेद्यत्वानधि-करणत्वरूपं साध्यं व्यावर्त्तयतीति उपाधिवादिनस्ते अभिप्रेतम्, यतः व्यापकस्य उपाधेरभावे व्याप्यस्य साध्यस्य अभावोऽनुमीयते, सर्वोपाधीनाम् एवम्भावत्वात् । युक्तं चैतत् साध्योपाध्योर्व्याप्यव्यापकभावार्थं तदभावयोरपि व्याप्यव्यापकभावनिय-मात् । तत्र उपाध्यभावसाध्याभावयोरपि निरुपाधिकसम्बन्धरूपा व्याप्तिरेष्टव्या, अन्यथा तयोरभावयोरपि उपाधेर्नियमानत्वं दुष्परिहरेण स प्रथमोपाधिम् । अत्र च इदं ममापरोक्षाव्यवहारयोग्यत्वं सति अवेद्यं न भवति ममापरोक्षव्यव-हारयोग्यत्वात् घटवत् इति व्यतिरेके (साध्योपाध्योरभावयोर्व्याप्तौ) ज्ञानेतरत्वस्य उपाधित्वात् भवदुक्तोपाधेर्व्यतिरेकानुमापकत्वात् साध्याव्यापकत्वाच्च अनुपाधित्वं पूर्वोक्तमदीयहेतोश्च उपाध्यभावेन अप्रत्यूहं साध्यसाधकत्वमवधारयितुमर्हति भवान् ।

(क्रमशः)

# সংস্কৃত নাটকের অভিনয়

সংস্কৃত-সাহিত্য-পরিষৎ হইতে প্রতিবৎসর শারদীয় দুর্গোৎসবের পূর্ব্বে বার্ষিক সভা অনুষ্ঠিত হয় এবং তাহাতে সংস্কৃত নাটক অভিনীত হইয়া থাকে। আগামী বার্ষিক সভা উপলক্ষ্যে যে নাটক অভিনীত হইবে তাহার কোন্ ভূমিকা কাহাকে দেওয়া হইবে তাহা এখন ঠিক করা হইতেছে এবং রিহার্শ্যাল্ শীঘ্রই আরম্ভ হইবে। যাঁহারা সংস্কৃত নাটকে কোন ভূমিকা গ্রহণ করিতে ইচ্ছা করেন তাঁহারা অবিলম্বে পরিষৎ-কার্য্যালয়ে জানাইলে তাঁহাদিগকে কি কি অংশ দেওয়া যাইতে পারে সে বিষয়ে বিশেষ বিবেচনা করা হইবে। যাঁহারা বাংলা ভাষা ভালরূপে উচ্চারণ করিতে পারেন, সংস্কৃত ভাষা বিশেষ না জানিলেও তাঁহারা চেষ্টা করিলে সংস্কৃত ভাষায় অভিনয় করিতে পারিবেন।

---